# ABBREVIATIONS USED IN THE WORK.

A. Dic.—Apte's Dictionary.
A. G.—Apte's Guide to San. Composition.
Ab. Śak. or Śak.—Abhijnànaśákuntala of Kâlidása.
Chhàn —Chhàndogyopanishad.
Bg.—Bhagavatgîtà.
Bhag. or B. P.—Bhágavata Purana.
Com.—Commentator; com.—Commentary.
Comp., *Cf.*—Compare.
Comp.—Compound.
Das.—Daśakumáracharita.
D. R.—Daśarúpaka.
Hito.—Hitopadeśa.
Kàv.—Kàvyaprakàśa.
Kâv. Prad.—Kàvyapradîpa.
Kâd.—Kâdambarî.
Kaiv. U.—Kaivalyopanishad.
Kathâ.—Kathâsaritságar.
Kathop.—Kathopanishad.
Kum.—Kumárasambhava.
Mv.—Mahávîrachandra.
Mál.—Málavikâgnimitra.
Meg.—Meghadûta.
Mṛch.—Mṛchchhakatika.
Mud.—Mudrárákshasa.
Mund. Up.—Mundakopanishad.
M. W.—Monier Williams.
Nág.—Nágánanda.
Pán.—Pánini.
Priy.—Priyadarśiká.
Ragh.—Raghuvams'a.
Rat.—Ratnávalî.
S. D. or Sah. D.—Sáhityadarpaṇa.
Sid.—Siddhántakaumudi.
Udár.—Udârarághava.
Uttar.—Uttararámcharita.
Vis. P.—Vishṇu-Puráṇa.
Vik.—Vikramorvas'îya.
Sve. Up.—Śvetàsvataropanishad.
Vats. K.—Vatsyayana's Kámasûtras.
Other abbreviations can be easily understood.

# DRAMATIS PERSONÆ.

—:o:—

## MALES.

MÂDHAVA—The son of Devarâta, minister of the king of Vidarbha, the Hero.

MAKARANDA—His friend, lover of Madayantikâ, sister of Nandana.

KALAHAMSAK—Màdhava's servant.

NANDANA—A favourite of the king of Padmávatî.

BHURIVASU—Minister of the king of Padmàvatî and father of Málatî.

DEVARÂTA—Father of Màdhava, and minister of the king of Vidarbha.

AGHORAGHANTA—A votary of Chámundà.

The Sovereign of Padmávatî ( alluded to ).

## FEMALES.

MA'LATÎ--Daughter of Bhûrivasu, the Heroine of the play.

MADAYANTIKA'—The sister of Nandana and Màlati's friend who falls in love with Makaranda.

KA'MANDAKÎ—A Buddhist ascetic, Màlatî's governess.

LAVANGIKA'—Foster sister of Màlatî.

SAUDA'MINÎ<br>BUDDHARAKSHITA'<br>AVALOKITA' } Disciples of Kamandakī.

MANDA'RIKA'—An attendant of Kàm., beloved by Kalahamsa.

KAPA'LAKUNDALA'—A disciple of Aghoraghanta.

# उपोद्घातः ।

**भवभूतेः सम्बन्धाद्भूधरभूरेव भारती भाति ।**
**एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥**

—गोवर्धनः ।

यद्यप्यस्य कवेरितिवृत्तं साकल्येन न क्वाप्युपलभ्यते तथाप्यनेन महाकविना स्वविर-चितमालतीमाधवमहावीरचरितोत्तररामचरिताख्यप्रबन्धत्रयस्य प्रस्तावनास्वात्मनो वंशा-देर्वर्णनमल्पमात्रमपि तावत्कृतमस्तीति सर्वथा न जिज्ञासूनां वैरस्यप्रसङ्गः । तथाहि । दक्षिणापथे विदर्भेषु पद्मपुरनाम्नि नगरे केचित्तैत्तिरीयाः काश्यपाश्चरणगुरवः पंक्तिपावनाः पञ्चाग्नयः सोमयाजिनः उदुम्बरोपाभिधाना ब्रह्मवादिनो द्विजा वसन्ति स्म । तद्वंशे महा-कविर्नाम वाजपेययाजी कश्चिद्विप्रो बभूव । तस्मात्पञ्चमः पुरुषः सुगृहीतनाम्नो भट्ट-गोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसंभवो भवभूतिः । अस्य जननी ज ( जा )—तुकर्णी गुरुश्च ज्ञाननिधिर्नाम यथार्थनामा । पितृकृतं श्रीकण्ठ इति नाम बिभ्रदप्ययं केषांचिन्मतेन ‘ तपस्वी कां गतोवस्थामिति स्मेराननाविव । गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥ ’ इति पद्यरचनोत्तरमपरेषां मतेन ‘ साम्बा पुनातु भवभूतिपवित्र-मूर्तिः—’ इति श्लोकरचनानन्तरं भवभूतिरिति नाम्ना लोके प्रथां गतः । कान्यकुब्जाधि-पतेर्यशोवर्मणः संसदि भवभूतिरासीदिति—‘ कविवाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिबन्दिताम् ॥ ’ इति राजतरङ्गिणीस्थश्लोकाज्ज्ञायते । यशोवर्मा च ख्रिस्ताब्दीयसप्तमशतके बभूव । तथा च तदानींतनेन केनापि वाक्पतिराज-नाम्ना कविना सगौरवमात्मनो ग्रन्थे भवभूतेर्नामनिर्देशः कृतः स च अष्टमशतक आसीत् । अतोष्टमशतकारम्भः सप्तमशतकापरार्धं वा भवभूतेः समय इति प्रतीयते । अतितीक्ष्णमतिरयं कविः सोपनिषत्सु वेदेष्वधीती सांख्ययोगतर्कमीमांसादिशास्त्रेषु कृता-वगाहनोपि प्रतिभाशाली साहित्यशास्त्रस्य सकलं रहस्यमाकलयदिति सर्वपथीनमति-मत्त्वमस्य स्फुटमेव ॥

एतत्कविकृतमालतीमाधवमहावीरचरितोत्तररामचरिताख्यरूपकत्रयं विहाय नान्यः कोपि प्रबन्धोनेन प्रणीतः संप्रत्युपलभ्यते । तथापि शार्ङ्गधरपद्धतौ—‘ निरवद्यानि पद्यानि यदि नाट्यस्य का क्षतिः । भिक्षुकक्षाविनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ ’ इति पद्यं गदाधरभट्टप्रणीते रसिकजीवने ‘ अलिपटलैरनुयातां सहृदयहृदयज्वरं विलुम्पन्तीम् । मृगमदपरिमललहरीं समीर किं पामरेषु रे किरसि ॥ ’ ‘ किं चन्द्रमाः प्रत्युपकारलि-प्सया करोति गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥ ’ ( र. जी. प्र. ३ । २२, १९५ ) इति पद्यद्वयं च भवभूतिनाम्ना समुद्धृतं लभ्यते । अतोनेन कविना विरचितोऽन्यः कोपि रूपकप्रबन्धः काव्यग्रन्थो वासीदुत तत्कृतानि सुभाषितान्येतान्याहोस्विदन्यः कोपि भवभूतिरेतेषां पद्यानां निर्मा-तेति सांप्रतं निर्णेतुं न पार्यते । तथापि भवभूतिर्नाम कविर्निसर्गसौहृदेन भरतेषु वर्तमानः ’ इति सूत्रधारोक्त्यैयं नाम केचिदिह नः प्रथयन्त्यवज्ञामिति कव्युक्तेश्च केपि

नाटकप्रबन्धा अनेन प्रणीताः कालवशं प्राप्य प्रणष्टाः स्युरिति कल्पयितुं शक्यम् । 'शृङ्गारवीरकरुणा—' इति क्रममनुरुन्धानेनानेन कविना मालतीमाधवं शृङ्गाररसप्रधानं महावीरचरितं वीररसप्रधानमुत्तररामचरितं च त्रिषूत्तमगुणं करुणरसप्रधानं व्यरचि । यद्यप्यस्य काव्येषु विशेषतो मालतीमाधवे समासभूयस्त्वमुपलभ्यते तथापि वैदर्भीरीति-माश्रित्यैवैतानि लिखितानि । तथाहि–'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः । इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः॥' इति दण्डयुक्ता गुणा अस्य प्रबन्धेषु यथायथमुल्लसन्ति । तत्र प्रधानान्कविरेवाह 'यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवम् । इत्यादिना । नाटकक्रादित्ययं कविर्न केवलं कालिदासेन तुलामारोहति किंतु–' उत्तरे रामचरिते भवभूतिर्विशिष्यते '–इति पण्डितानामभ्युपगमो नासमञ्जस्यपर इति भाति । तथा च कालिदासीयप्रबन्धेषु क्वचिदुपलभ्यमानः सचेतसां वैरस्यापादकः पुनरुक्तिदोषो भवभूतिकृतिषु प्रायो न दृश्यते । अपि चेदृश्यस्य कवेर्वाक्चातुरी रसोन्नयनपाटवं च यद्वश्यवाचः कवेर्वाक्यम् । इति, यं ब्राह्मण मियं देवी वाग्वश्येवानुवर्तते । इति च ब्रुवतोस्य कवेः–' भूतार्थव्याहृतिः साहि नात्मश्लाघा महात्मनः । ' इति को न ब्रूयात्सहृदयः । किं बहुना महाकवेरावश्यकाः सर्वे गुणाः प्रतिभादयो भवभूतौ संभूय स्थिता इति प्रतीमः ॥

अनेन कविना रूपकत्रयं विरचितमित्युक्तं प्राक् । तत्र मालतीमाधवं प्रकरणम् । तल्लक्षणं तूक्तमेव टीकाकृतेति नात्र पुनरुक्ततामापाद्यते । अस्मिन्संभोगशृङ्गारोङ्गी । स च विप्रलम्भपूर्वक एव । अन्ये वीराद्भुतकरुणबीभत्सादयोङ्गभूताः । तत्र-अत्रान्तरे किमपि ( अं. १–२६ ) इत्यत्र नायकस्य रागोदयः । अलसवलितेत्यत्र च कटाक्षैरुक्तरूपैरनुभावैस्तत्कारणस्य काष्ठां प्राप्तस्य माधवविषयस्य रतिभावस्य तत्समुचितव्यभिचारिणां च प्रतीतेर्माधवस्याप्यपहृतमित्यादिना मालत्यनुरागगोचरगाढानुरागतन्नियतव्यभिचारितत्तदुचितानुभावप्रतीतेर्युगपदन्योन्यालम्बनशृङ्गाररसध्वनिः । अत एव बीजस्य परस्परानुरागरूपस्यात्रैव परिन्यासः । एवमन्येप्यर्थास्तत्र तत्रोह्याः । यत्तु मध्ये विच्छेदो मध्ये उद्दीपनं पुनर्मध्ये विच्छेदः पुनरुद्दीपनं तदङ्गिरसपरिपोषापेक्षयैव । अन्येऽर्थो वीराद्भुतबीभत्सादयो रसाश्च टीकाकृता तत्र तत्र निर्दिष्टा द्रष्टव्याः । अन्यच्च किंचिदनुक्तमप्यूह्यमिह विस्तरभयान्नोच्यते । अस्य प्रकरणत्वादृशङ्काः । इतिवृत्तं च कविकल्पनानिर्मितमतीव सहृदयहृदयचमत्कारीति युक्तमेव कविराह–अस्ति वा कुतश्चिदेवं महाद्भुतं विचित्ररमणीयोज्ज्वलं महाप्रकरणमिति । अस्मिन्विदूषकप्रतिनायिकाभावः प्राकृतपद्याभावश्च विशेषः । एतत्सर्वमन्यच्च वक्तव्यं प्रमाङ्गलभाषोपनिबद्धप्रस्तावनायां विस्तरत उक्तमिति विरम्यतेत्र । शिवं भूयादध्येतुरध्यापकस्य च ॥

**मो. रा. काळे.**

श्रीः ।

# मालतीमाधवम् ।

सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणे-
र्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ १ ॥

---

चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यज्जटापल्लवो
दृप्यद्दारुणदन्दशूकमणिमांस्ततपञ्चशाखालयः ।
स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रव-
त्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥

नत्वा गुरून्गुणगुरूनवलोक्य टीकां
विश्वादिकोषभरतश्रुतिशब्दविद्याम् ।
छन्दांस्यलंकरणमर्थगतिं विचिन्त्य
श्रीमाञ्जगद्धरकृती वितनोति टीकाम् ॥

श्रीकण्ठकण्ठविलुठत्पटुनाटकेऽस्मिन्
टीका मयाल्पमतिनापि वितन्यते यत्
हासाय दुर्जनगणस्य भवेन्न चैत-
दुच्चैः पदं यदभिकाङ्क्षति सर्व एव ॥

---

इह तावदष्टपदां नान्दीं विदधान एव कविरप्रत्यूहमीहितसिद्धिमनुरुध्य प्रचण्डचण्डीपतेरकाण्डताण्डवाडम्बरेण लम्बोदरोत्कीर्तनरूपं मङ्गलं प्रकरणादौ निबध्नाति-- **सानन्दमित्यादि** । वैनायक्यो वदनविधुतयश्चिरं वः पान्तु । गजाननाननचालनानि युष्मान्बहुकालं रक्षन्त्वित्यर्थः । इति श्रोतॄन्सामाजिकान्कविराशास्ते । वदनविधूनने कारणमाह--फणिपतौ वासुकिनागे नासाग्ररन्ध्रं नासिकाग्रविवरं सानन्दं विशति सति । नासात्र विनायकस्यैव । त्रस्तस्य झटित्यग्ररन्ध्रप्राप्त्या जीवनप्रत्याशयानन्द इति भावः । अत एव प्रवेशानन्तरमानन्द इति कथं क्रियाविशेषणमिति दोषानवकाशः । अग्ररन्ध्रस्य शीघ्रं प्राप्त्यैवानन्दातिशयात् । यथा भीतस्य शीघ्रं भवनादिप्राप्तौ हर्षः । यद्वा सानन्दं यथा तथा पान्त्विति योज्यम् । यद्वा सानदमित्याहतविशेषणम् । सापेक्षत्वेऽपि गमकत्वात्समासः । क्रियाविशेषणत्वादेव सानन्दमित्यत्र कर्मत्वैकत्वक्लीबत्वानि ।

---

१ भो मर्तने. २ फीत्कार.

इह नासारन्ध्रमिति वक्तव्येऽग्रग्रहणं त्रस्तस्य झटिति प्राप्त्या हर्षसूचनाय। यद्वा रन्ध्रप्रवेशेऽग्रप्रवेशस्यार्थसिद्धस्यापि शब्देन कीर्तनादुक्तिपोष एवायमलंकारः। यदाह दण्डी—'उक्तिपोषः। क्वचिदाक्षेपलब्धस्य साक्षाच्छब्देन कीर्तनात्॥' इति। कीदृशे फणिपतौ। भोगः फणा कायो वा तस्य संकोचोऽविकाशस्तं भजतीति भोगसंकोचभाक्। तस्मिन्। विवरानुसरणे भोगिभोगसंकोच इति जातिनियमः। तदनेन महाकायस्य नासाग्रप्रवेशयोग्यतोक्ता। प्रवेशे हेतुमाह—शूलपाणेः शिवस्य ताण्डवे नृत्ये सति नन्दी गणभेदस्तस्य हस्तेनाहतस्य ताडितस्य मुरजस्य मर्दलस्य रवेण शब्देनाहूतो यः कौमारबर्हीं कार्तिकेयमयूरस्तस्य त्रासाद्भयात्। अत्र नन्दिहस्ताहतत्वेन मुरजस्य गभीरताररवशालिता दर्शिता। मयूरस्य भुजंगभोजित्वेन त्रासकत्वम्। विधुतयः कीदृश्यः। गण्ड उड्डीनाभिरूर्ध्वं गताभिरलिमालाभिर्भ्रमरपङ्क्तिभिर्मुखरिताः शब्दीकृताः ककुभो दिशो याभिस्ताः। तथा चीत्कारो भीतकरिणां त्रासध्वनिस्तत्सहिताः। विनायकस्य गजाननत्वात्। इह साहित्यमात्रं मत्वर्थः। तथा च भयान्मुखे विधूननचीत्कारौ युगपद्वृत्ताविति भावः। जातिरलंकारः। विधुतेरचेतनत्वेऽपि देवतानुभावादेव रक्षणकर्तृत्वम्। अत एव त्रस्तस्यापि तत्कर्तृत्वम्। इह गम्भीरमुरजरवश्रुतिकृष्टमयूरभयेन फणिनां विवरानुसरणं जलदकालचिह्नम्। अत एव जलदकालमनुभाव्यैवैतत्प्रकरणवृत्तान्त इति ध्वनितम्। तथा च वक्ष्यति—'धारासिक्तवसुंधरासुरभयः' इत्यादि। मुरजघातेन वाद्यम्, अलिमालया दिशां मुखरीकरणेन गीतम्, वदनविधूननेन नृत्यं च सूचयता तौर्यत्रिकमुक्तम्। चीत्कारेण नृत्यतः प्रव्यक्तपाठोऽपि सूचितः। 'कुमारः क्रौञ्चदारणः' इत्यमरः। कुमारस्येदं कौमारम्। 'तस्येदम्' इत्यण्। 'मयूरो बर्हिणो बर्हीं नीलकण्ठो भुजङ्गभुक्'। इत्यमरः। 'नासा नाशा तु नासिका' इति शब्दभेदः। 'भोगः सुखे स्त्र्यादिरतावहेश्च फणकाययोः'। इति विश्वः। उड्डीन इति उत्पूर्वाड्डीङ्धातोः क्तः। 'ओदितश्च' इति चकारान्नत्वम्। 'प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः'। इत्यमरः। 'दिशस्तु ककुभः काष्ठाः' इति च। 'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्'। इति च। 'विनायको विघ्नराजद्वैमातुरगणाधिपाः'। इति च। विनायकस्येदं वैनायक्यम्। तस्येदमित्यण्। 'टिड्ढाणञ्—इति ङीप्। विधुतिरिति विपूर्वाद्धुञः स्त्रियां क्तिन्॥ १॥ नाटकादौ प्रवृत्तिः प्रेक्षावतां सप्रयोजना। यदाह भरतः—'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः। नासौ नयो न तत्कर्म नाटके यन्न दृश्यते॥' नाटके विघ्नविघातायादौ नान्दी कार्या। यदाह भरतः—'यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके। तथाप्यवश्यं कर्तव्या नान्दी विघ्नप्रशान्तये॥' नान्दीलक्षणं च भरते—'देवद्विजनृपादीनामाशीर्वचनपूर्विका। नान्दी कार्या बुधैर्यत्नान्नमस्कारेण संयुता॥ गङ्गा नागपतिः सोमः स्वधानन्दो जयाशिषः। एभिर्नामपदैः कार्या नान्दी कविभिरङ्किता॥ प्रशस्तपदविन्यासा चन्द्रसंकीर्तनान्विता। आशीर्वादपरा नान्दी योज्येयं मङ्गलान्विता॥ काचिद्द्वादशपदा नान्दी

अपि च ।

**चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो**
**विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः ।**
**पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो**
**भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ २ ॥**

---

काचिदष्टपदा स्मृता । सूत्रधारः पठेदेनां मध्यमं स्वरमास्थितः ॥ चन्द्रसंकीर्तनं यत्र तदधीनो रसोत्तमः । प्रीते चन्द्रमसि स्फीता रसश्रीरिति भाव्ति (लु) किः ' ॥ तत्र केचन पदं विभक्त्यन्तमास्थिषत । केचित्त्विदं पद्यस्य भागमूचिरे । तादिह द्वितीय-पक्षनिक्षेपेण पद्यद्वयेनाष्टपदा नान्दीति । बहुविघ्नशङ्कया तन्नाशाय पुनर्मङ्गलमाचर-न्नष्टपदां नान्दीं निर्वाहयति—**चूडापीडेत्यादि** । भूतेशस्य हरस्य जटास्त्वां सभाप्रधानं पान्तु । कीदृश्यः । चूडायां शिखायां य आपीडस्तिर्यङ्नद्धमाला तस्याः कपालैः शुष्कशिरोऽस्थिपिण्डैः संकुलं व्याप्तमत एव गलन्मन्दाकिनीवारि गङ्गाजलं यासु ताः । माला चेह कपालानामेव । यद्वा येषां कपालानि तेषामन्यैर्जङ्घाजा-न्वाद्यस्थिभिराभरणार्थं तिर्यङ्माला । तत्संबद्धानि कपालानीत्यर्थः । तथा विद्यु-त्प्रायं विद्युन्निभं यल्ललाटलोचनपुटं ललाटस्थनेत्रसंपुटं तत्तेजसा विमिश्रा मिलिता त्विट् प्रभा यासां ताः । अत्र पुटस्थस्य समस्तनेत्रभागस्य तेजोमयता पुटपदे-नोक्ता । तथाकठोरया कोमलया संपूर्णया वा केतकशिखया केतकीकुसुमाग्रेण संदिग्धः संशयितो मुग्धो रम्यो बालो वेन्दुर्यासु ताः । हरशिरसि किं केतकशिखेयमि-त्यनौचिती । तदयं संशयोऽप्यनौचित्यमूलक एवेति भावः । तथा भुजङ्गाः सर्पा एव वल्लयो लतास्ता एव वलया मण्डलाकारेण स्थिताः स्रजः पुष्पमालास्ताभिर्नद्धो बद्धो जूटो जूलको निबद्धस्रज ऊर्ध्वभागो यासु ताः । तदनेन जटाजूटस्यानवरतस्ना-नकपिशस्यापि भुजङ्गनद्धतया तिरोहितरूपत्वेनातिश्यामत्वेन मेघोदयमत एव सर्प-विहरणसूचनम्, गङ्गाजलगलनेन वर्षणम्, कपालमालया बलाकावलिम्, ललाटनेत्र-

---

१ शिखिज्वाला. २ कैतक. ३ चूडा. ५ अतःपरमिदं श्लोकद्वयं पठ्यते कैश्चित् ।

अपि च ।

**दन्तश्रेणिषु संगलत्कलकलव्यावर्तनव्याकुला**
**नासालोचनकर्णकुक्षकुहरेषूद्गद्गदध्वानिनः ।**
**गण्डग्रन्थ्यभिघातशीर्णकणिकाश्चूडास्रवन्त्यूर्मयः**
**शंभोर्ब्रह्मकपालकंदरपरिस्पन्दोल्बणाः पान्तु वः ॥**

अन्यच्च ।

**पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो**
**यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव ।**
**अर्चिर्निष्टप्तचूडाशशिगलितसुधासारझं [ शात्-र ] कारिकोणं**
**तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥**

( नान्द्यन्ते )

**सूत्रधारः**—अलमतिविस्तरेण[1] । ( पुरतोऽवलोक्य[2] । ) अये उदित-भूयिष्ठ एष[3] भगवानशेषभुवनद्वीपदीपस्तपनः[4] । तदुपतिष्ठे[5] । ( प्रणम्य । )

---

त्विषा विद्युदुद्द्योतम्, शिशुशशिना च केतकशिखावत्त्वं दर्शयता मदनमदोद्दीपनमुदिरमेदुरघनसमयसूचनेन शृङ्गाररसशालितापि अस्य प्रकरणस्य कटाक्षिता । अचेतनाया जटाया रक्षकत्वं देवतानुभावादवधेयम् । वल्लिवलयस्रगित्यत्र रूपकनामालंकारः । यत्र मिथोऽपेक्षा तत्र अपि चेति प्रयुज्यत इति व्युत्पत्तिः ॥ २ ॥ **नान्द्यन्त इति** ॥ उक्तलक्षणं नाटकाद्यं पद्यं नान्दी । आशीर्योगादिना नन्दयतीति नन्दः । पचाद्यच् । नन्द एव नान्दः । प्रज्ञादित्वादण्प्रत्ययः । 'टिड्ढाणञ्' इति ङीप् । नान्दी । सूत्रधारलक्षणं च भरते—'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ॥' इति । ननु नान्द्यन्ते सूत्रधार इत्यसंगतम् । नहि नान्दीपाठानन्तरं सूत्रधारो रङ्गभूमिं प्रविशति । किंतु प्रविश्य पठति । न वान्येनैव पठनीया । सूत्रधारपठनीयत्वेनैव नान्द्या उक्तत्वात् । 'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमास्थितः' । इति वचनात् । उच्यते । नान्दीं पठित्वा सूत्रधारः प्रविशति पठति वा । नान्द्यन्ते सूत्रधारस्यैव श्रुतत्वेनेयमपि तेनैव पठनीया । प्रथमं सूत्रधारः प्रविशतीति नोक्तम् । मङ्गलार्थं देवतानमस्कारादेरेव विधानात् । यद्वा नान्दी तावद्रङ्गप्रवेशानन्तरं सूत्रधारेणैव पठनीया । नान्द्यन्ते सूत्रधार इति सूत्रधारसाम्यात्स्थापके प्रयोगः । यदाह भरतः—नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः ॥ पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः' ॥ अत एव केचिन्नान्द्यन्ते स्थापक इत्येवं पठन्ति । ननु प्रस्तावनायाः पूर्वं बहूनि नाट्याङ्गानि सन्ति तानि किमिति नोक्तानि । यदाह भरतः—'रङ्गप्रसादमधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भेदैः प्ररोचनायुक्तैर्वीथिप्रहसनामुखैः । सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ॥ स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् ॥' अत एवाह—**अलमिति** । अयमाशयः—पूर्वोक्तान्यङ्गानि न भवन्ति किंतु परिषदोऽभिमुखीकरणानि । सा चेत्स्वयमेव कृतावधाना नवनाटकविलोकनोत्का च तदन्यत्प्रयुज्यमानमपि रसभङ्गाय परं भवतीति कृतं तत्प्रणयनेन । अन्यथा सभाया रसविच्छेदो भवेदिति निष्फलतेति । अये इति निपातो व्यासङ्गादिनानाकलितस्याकलनेन संभ्रमवाचकः । अकस्मात्सूर्योदयाकलनात् । 'ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् । देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ॥' इति भरतमतमनुमस्य माङ्गलिकतया रङ्गद्वारपाठ्यं श्लोकमुत्थापयति—**उदितेति** । उदितं भूयिष्ठं बहु यस्य सः । अस्य बहुतरभाग उदितः । किंचिदेवोदयायावशिष्यत इति भावः । अत्र 'नेक्षेतोद्यन्तमादित्यमुद्यन्तम्' इति निषेधादुदितभूयिष्ठ इत्युक्तम् । भगं ज्ञानादिसंपत्तिस्तद्वान् भ-

---

१ अलमलम्. २ पुरो०, प्राचीम०. ३ स, एव. ४ नभ्ररमणिः; दीपः—दीपकः. ५ तमु०, तदेनमु०.

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय ॥ ३ ॥

( नेपथ्याभिमुखमवलोक्य ) मारिष सुविहितानि रङ्गमङ्गलानि संनिपतितश्च भगवतः कालप्रियनाथस्य यात्राप्रसङ्गेन नानादिगन्तवास्तव्यो महाजनसमाजः । आदिष्टश्चास्मि विद्वज्जनपरिषदा यथा केनचिदपूर्वप्रकरणेन वयं विनोदयितव्या इति । तत्किमित्युदासते भरताः ।

---

गवानित्यर्थः । उपतिष्ठे । श्लोकेनेति शेषः । तदेवाह—**कल्याणानामित्यादि** । भो विश्वमूर्ते सर्वमयदेव । दीव्यतीति देवो द्युतिमांस्तादृश हे । कल्याणानां महसां माङ्गलिकानां तेजसां त्वं भाजनं पात्रमसि । अतः प्रसीद प्रसन्नो भव । मयि मद्विषये धुर्यां नृत्यधुरंधरां लक्ष्मीं संपत्तिमपि भृशमतिशयेन धेह्यारोपय । अथशब्दः समुच्चयार्थः । धेहीति स्थाने देहीति पाठे ददस्वेत्यर्थः । तथा हे जगन्नाथ भुवनपते यद्यत्पापमारब्धविरुद्धं नम्रस्य मेऽस्ति तत्प्रतिजहि नाशय । यद्यदिति वीप्सया कायिकवाचिकमानसिकरूपं पापत्रयमुक्तम् । वीप्सा तु न तच्छब्दे कृता । वीप्सितस्यैव तच्छब्देन परामर्शात्तथैव व्युत्पत्तेः । क्वचिद्यत्पद इव तत्पदेऽपि वीप्सा । यथा 'यां यां प्रियां प्रैक्षत' इत्यादौ । भद्रमदोषं भद्रमभीष्टं वितर देहि । यद्वा । भद्रं भद्रमतिशयेनाभीष्टं देहीत्यर्थः । किमर्थम् । मङ्गलायाशंसनीयकर्मार्थम् । तादर्थ्ये चतुर्थी । मङ्गलाय मङ्गलं कर्तुमिति वा । कीदृशाय । भूयसे प्रचुराय । तदिह हरिहरादीनपास्य भानोरुपस्थानेन प्रकरणनायकस्य ब्राह्मण्यं सूचितम् । अत एव देहीति ब्राह्मणोचिता प्रार्थना । सर्वक्षुद्रसत्त्वक्षयहेतोः प्रभातस्यादरेण प्रकरणकथाबीजसूचनमपि । तथाहि यद्यदिति वीप्सया शार्दूलाघोरघण्टविमर्दसूचनम् । पापप्रतिघातानन्तरं च भद्रं भद्रमिति वीप्सया स्वस्य मालतीलाभेन मकरन्दस्य च मदयन्तिकालभेनेष्टसिद्धिः सूचिता । भूयो मङ्गलपदेन कपालकुण्डलापकृतमालतीलाभो विद्यालाभादिकं च सूचितम् ॥ ३ ॥ **नेपथ्येति** । नेपथ्यं रङ्गभूमिः । 'नेपथ्यं रङ्गभूमौ स्यात्' इति विश्वः । 'मान्यो भावेति वक्तव्यः किंचिन्न्यूनस्तु मारिषः।' इत्यमरः । मारिष एव मर्षणान्मार्षः । सूत्रधारोक्तनिर्वाहसहिष्णुरित्यर्थः । सुविहितानि भक्तिश्रद्धाकृतानि । रङ्गो नृत्यं तदर्थं मङ्गलानि लोकपालपूजादीनि । 'रङ्गो नृत्ये रणक्षितौ' इति विश्वः । संनिपतितः सर्वत आगत्यैकत्र मिलितः । कालप्रियनाथस्य तद्देशदेव-

---

१ त्वमिह महसामीशिषे त्वं विधत्से. २ पुण्याम्. ३ इह. ४ समूहः; जनः । तत्किमित्युदासते भरताः । आदिष्टोऽस्मि विद्वत्परिषदा यथा—अद्य त्वयाऽपूर्ववस्तुप्रयोगेण वयं विनोदयितव्या इति । तत्परिषदं निर्दिष्टगुणप्रबन्धेनोपतिष्ठावः ।

( प्रविश्य )

**पारिपार्श्विकः**—भाव परिषन्निर्दिष्टगुणं प्रबन्धं नावगच्छामः ।

**सूत्रधारः**—मारिष कतमे ते गुणास्तत्र यानुदाहरन्त्यार्यविदग्धमिश्रा भगवन्तो भूमिदेवाश्च ।

**नटः**—

**भूम्ना रसानां गहनाः प्रयोगाः सौहार्दहृद्यानि विचेष्टितानि ।**
**औद्धत्यमायोजितकामसूत्रं चित्राः कथा वाचि विदग्धता च ॥४॥**

---

भेदस्य । यात्राप्रसङ्गेनेति नृत्यकालसूचनम् । 'इदं ध्वजमहः श्रीमन्महेन्द्रस्य प्रवर्तते । इत्यभिधानात् । वास्तव्यो वासी । महाजनसमाजो विद्वद्गोष्ठी । उदासत उदासीना भवन्ति । भरता नटाः ॥ पारिपार्श्विकलक्षणं भरते—'सूत्रधारस्य पार्श्वे यः प्रवचन्कुरुतेऽर्थनाम् । काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः ॥' इति । भाव मान्यनट । परिषदा प्रेक्षकेण निर्दिष्टो गुणो यत्र तं प्रबन्धं प्रकरणम् । प्रेक्षकस्तु—'यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च । क्रुद्धः क्रुद्धे भये भीतः स नाट्ये प्रेक्षकः स्मृतः ॥' इति भरतोक्तः । पूजावाक्यगर्भं प्रश्नमाह—**कतम इति** । 'गोत्रं नाम च बध्नीयात्पूजावाक्यं च सर्वतः ।' इति भरतः । कतमे । कियन्त इत्यर्थः । आर्याः सुकुलादिसंपन्नाः । यदाह भरतः—'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत्तानार्यान्संप्रचक्षते ॥' विदग्धाश्चतुःषष्टिकलावेदिनः । मिश्रा वेदान्तवेदिनः । भगवन्तः स्मृतिधराः । यदाह—'देवाश्च लिङ्गिनश्चैव नानास्मृतिधराश्च ये । भगवानिति ते वाच्याः पुरुषाः स्त्रिय एव च ॥' इति । यद्वा । आराद्याता दूरं गताः ग्राम्यत्वादिदोषेभ्य इत्यार्याः । विदग्धाः काव्यरसवशमनसः । मिश्राः पूज्याः । पूज्ये मिश्रपदं नित्यं बहुवचनान्तम् । 'मरीचिमिश्रैर्दक्षेण' इति विष्णुपुराणात् । भगवन्तो ज्ञानादिसंपन्ना भूमिदेवा ब्राह्मणाः । इह तत्रोद्धातकरूपा प्रस्तावना । यदाह भरतः—'सुप्रतीतं विस्मृतं वा यत्र कार्यं प्रकाश्यते । तदुद्धातकमित्याहुः प्रश्नोत्तरमनोहरम् ॥' इति ॥ प्रबन्धे गुणानाह—**भूम्नेति** । यत्र प्रबन्धे रसानां शृङ्गारादीनां भूम्ना प्राचुर्येण गहना गम्भीराः सहृदयमात्रग्राह्याः प्रयोगाः सन्ति । एतेनास्य रसमयत्वमुक्तम् । यत्र प्रबन्धे विचेष्टितानि मालतीमाधवादेः परस्परव्यापाराः सौहार्देन प्रेम्णा हृद्यानि । मनोज्ञानि । यत्रौद्धत्यं नायकनायिकासखीभृत्यादिगुणमाहात्म्यमस्ति । कीदृशम् । आयोजितं विहितं कामसूत्रमनङ्गप्रयोगो यत्र तत् । यद्वा । औद्धत्यं निजोत्कर्षपुरःसरमन्यावज्ञाविष्करणम् । तच्चायोजितस्य समन्तात्कार्याभिमुखीकृतस्य कामस्य मन्मथेच्छायाः सूत्रं सूचकम् । सूत्रं संभोगः पटारम्भकस्तन्तुर्वा । अनेनात्र का-

---

**नटः**—( प्रविश्य । ) भाव कतमे ते गुणा यानुदारहन्त्यार्यमिश्रा भगवन्तो भूमिदेवाः । **सूत्रधारः**—भूम्ना इ० । **नटः**—भाव कस्मिन्प्रकरणे । **सूत्र**ः—( विचिन्त्य ) स्मृतम् । अस्ति दक्षिणापथे०—इ. पाठान्तरम्. २ नाधि०. ३ अनुवर्तन्ते; आर्या विद्वद्विदग्ध.

**सूत्रधारः**—स्मृतं तर्हि ।

**नटः**—भाव किमिवं ।

**सूत्रधारः**—अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं[1] नाम नगरम्[2] । तत्र केचित्तैत्तिरीयिणः[3] काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनो[4] उदुम्बरनामानो[5] ब्रह्मवादिनः प्रतिवसन्ति[6] ।

**ते श्रोत्रियास्तत्त्वविनिश्चयाय[7] भूरि श्रुतं शाश्वतमाद्रियन्ते ।**
**इष्टाय पूर्ताय च कर्मणेऽर्थान्दारानपत्याय तपोर्थमायुः ॥ ५ ॥**

मोद्दीपकतयौद्धत्यं गुणाय । स्वाभाविकस्य तस्य भूषणत्वमिति दर्शितम् । यत्र चित्राश्चर्यजनिका कथा । कल्पितकथत्वात् रसमयत्वाच्चाश्चर्यम् । वाचि वचने विदग्धता परिपाको निर्दोषत्वं वक्रता च यत्र । एतेनान्यनाटकादस्याधिकगुणवत्त्वमुक्तम् । तं प्रबन्धं नर्तितुमादिशन्ति । मिश्रा इति शेषः ॥ ४ ॥ **नटः**—किमिव । किं स्मृतमित्यर्थः । अधुना 'रुणद्धि रोदसी वास्य यावत्कीर्तिरनश्वरी । तावत्किलायमध्यास्ते सुकृतं वैबुधं पदम् ॥' इति निजनामादिकथनफलमनुरुध्य तदाचरते—**अस्तीत्यादि** । दक्षिणदेशस्य शृङ्गाररसवशतया तद्देशजत्वेन स्वस्य तदुभयरसवर्णनशक्तिरुक्ता । विदर्भेष्वित्यनेन वैदर्भीरीतिपरिचयचातुरी दर्शिता । पद्मनगरं पद्मावती । नाम प्रसिद्धौ । न तु नामपदमभिधानार्थम् । तदा प्रकृत्यादित्वात्तृतीया स्यादित्यवधयेम् । तैत्तिरीयिणः । तैत्तिरीयकनामशाखाविशेषपाठिन इत्यर्थः । काश्यपाः काश्यपगोत्राः । चरणगुरव इति चरणशब्दः शाखाविशेषाध्ययनपरैकतापन्नजनसङ्घवाची । तत्र समूहे ते गुरवः क्रियां कृत्वा वेदाध्यापयितारः । 'स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति ।' इति स्मृतेः । यद्वा चरणैः कलापादिभिर्गुरवो महान्तः । पङ्क्तिपावनाः पङ्क्तौ भोजनादिगोष्ठ्यां पावना अग्रभोजिनः पवित्रा वेत्यर्थः । यद्वा 'यजुषां पारगो यस्तु साम्नां यश्चापि पारगः । अथर्वशिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनः ॥' इति लक्षिताः । पञ्चाग्नयो दक्षिणाग्निगार्हपत्याहवनीयसभ्यावसथ्यरूपाग्निपञ्चकोपासकाः । धृतव्रताश्चान्द्रायणादिव्रतयोगिनः । सोमपीथिनः सोमो लताविशेषो हुतशेषो वा तत्पायिनः । अनेन सोमयागयाजित्वमुक्तम् । डम्बरनामानो डम्बरमुत्कर्षसूचकं कुलनाम येषां ते । यद्वा डम्बरं प्रसिद्धं नाम येषां ते । 'प्रसिद्धौ डम्बरं विदुः' इति विश्वः । ब्रह्मवादिनः । वेदज्ञा इत्यर्थः ॥ **त इत्यादि** । कथितरूपाः श्रोत्रियाश्छन्दोऽध्येतारः । जन्मादिसंपन्ना ब्राह्मणा वा । भूरि प्रचुरम् । शाश्वतं सार्वकालिकम् । श्रुतमध्ययनमाद्रियन्ते श्रद्दधति । यद्वा शाश्वतं नित्यागमं वेदाख्यमाद्रियन्ते । कीदृशम् । भूरि श्रुतं बहुभ्यो बहुधा बहुभिः सहाभ्यस्तम् । किमर्थम् । धर्मस्य कर्तव्याकर्तव्यरूपस्य विनिश्चयाय निर्णयाय । वैदिककर्मणि निर्णयादेव प्र-

१ क इव. २ नगरं. ३ तैत्तिरीया. ४ पीतिनः थिनो, ब्राह्मणाः. ५ डम्बर०, औदु०. ६ वसन्ति स्म. ७ विनिर्णयाय.

तदामुष्यायणस्य तत्रभवतः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसंभवो भट्टश्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातूकर्णीपुत्रः कविर्निसर्गसौहृदेन भरतेषु स्वकृतिमेवंप्रायगुणभूयसीमस्माकमर्पितवान् । यत्र खल्वियं वाचोयुक्तिः ।

**ये नाम केचिदिह नः प्रथयन्त्यवज्ञां**
**जानन्ति ते किमपि तान्प्रति नैष यत्नः ।**
**उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा**
**कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ६ ॥**

---

वृत्तेरिति भावः । 'श्रोत्रियश्छन्दोऽधीते' इति पाणिनिसूत्रम् । 'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥' इति स्मृतिः । शाश्वतमित्यत्र कालाट्ठञं बाधित्वा शाश्वते प्रतिषेध इति भाष्यवचनादण् । तथा तेऽर्थान्धनान्याद्रियन्ते । इष्टाय कर्मणे यागादिकार्यार्थम् । पूर्ताय कर्मणे खातादिकार्यार्थम् । यागादीनां धनसाध्यतया तेषां तदादरो न तु भोगायेति भावः । दारान्पत्नीराद्रियन्ते । अपत्याय संतत्यर्थं न तु कामायेत्यर्थः । त आयुर्जीवतमाद्रियन्ते । तपोर्थं तपश्चरणार्थं न तु व्यसनार्थम् । क्लेशबहुलं धर्म्यं कर्म तपः । तदनेन तेषां सर्वगुणवत्वं दर्शितम् । 'भूयिष्ठं भूयश्च भूरि च' इत्यमरः । 'अथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि' । 'पुंभूम्नि दाराः' इति च । विनिश्चयायेत्यादौ तादर्थ्ये चतुर्थी ॥५॥

अत्र कुले जात आमुष्यायणः । तत्रभवतः पूज्यस्य । सुगृहीतं शोभनोच्चारणं बलिकर्णादिवन्मङ्गल्यं नाम यस्य । भट्टश्चतुःशाखाभिज्ञः । पवित्रा पुण्या कीर्तिर्यस्य । तस्यात्मसंभवः पुत्रः । श्रीः सरस्वती कण्ठे यस्य स श्रीकण्ठः । तद्वाचकं पदं लाञ्छनं चिह्नं यस्य सः । नाम्ना श्रीकण्ठः । प्रसिद्ध्या भवभूतिरित्यर्थः 'श्रीर्वेशरचनाशोभाभारतीसरलद्रुषु' । इति मेदिनीकरः । जतुकर्णगोत्रप्रसूता जातूकर्णी तस्याः पुत्रः । निसर्गसौहृदेन साहजिकसौहार्देन । ननु 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयवृद्ध्या सौहार्दमिति स्यात । उच्यते । हृदित्यादौ प्रतिपदोक्तस्य ग्रहणात् 'हृदयस्य हृल्लेख–' इति हृदादेशस्यादिवृद्धिः । यद्वा 'संज्ञापूर्वको विधिरनित्यः इति वचनादुभयपदवृद्धेरनित्यत्वम् । यद्वा 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातस्य सुहृच्छब्दस्यावयवो हृच्छब्दस्तदन्तोत्तरपदवृद्धिर्भवति । एवंप्रायगुणभूयसीं 'भूम्ना रसानाम्' इत्यादिप्रायैर्गुणैरुपचितामर्पितवान्प्रयोगतोऽर्थतश्च संक्रमितवान् । खलु प्रसिद्धौ वाक्यभूषायां वा । वाचोयुक्तिर्वचनरचनम् । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु' इति षष्ठ्यलुक् । संप्रति स्वकौशलबलेन सगर्वमाह-- **ये नामेत्यादि** । इह तावत्त्रिविधाः पुरुषाः । केचिदज्ञा एव । केचिदद्वैतमतमग्नमनसः काव्यरसविरसाः । इतरे सहृदयहृदयामोदिकाव्यभव्यरसभररसिकाः । तत्राद्या-

---

१ तत्रा २ कीर्तिः. ३आत्मजः. ४ पदवाक्यप्रमाणज्ञः भव०, भवभूतिनामा. ५सौहार्देन, —देन वर्तमानः. ६ एवंगुण. ७ अस्माकं हस्ते. ८ तत्र तस्य कवेः. ९ स्यते च.

अपि च ।

**यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च।**
**ज्ञानं तत्कथनेन किं नहि ततः कश्चिद्गुणो नाटके ।**
**यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं**
**तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥ ७ ॥**

---

न्प्रत्याह—ये केचिदज्ञा नोऽस्माकमिह प्रबन्धेऽवज्ञामवधीरणं प्रथयन्ति ख्यापयन्ति । नाम संभावनायाम् । संभाव्यत इव न तु वास्तवमित्यर्थः । ते किमपि किंचिदल्पं जानन्ति । तान्प्रति ताँल्लँक्षीकृत्य मम नैष यत्नः । न हि बधिरे गीयते । यद्वा किंशब्द आक्षेपे । ते किं जानन्ति । किंतु न जानन्तीत्यर्थः । द्वितीयान्प्रत्याह—ये नाम निश्चये वैषयिकसुखविमुखा मुमुक्षव इहावधीरणामाचरन्ति ते किमपि वाङ्मनसागोचरं परं ब्रह्म जानन्ति । ते नमस्यास्तान्प्रति मम नैष यत्नः । न हि सम्राजमधिकृत्य कौपीनं सूत्र्यत इति भावः । अन्त्यान्प्रत्याह मम समानधर्मा तुल्यगुणः कोऽपि जन उत्पत्स्यते जन्माप्स्यत्यस्ति विद्यते वा । तं प्रत्येष यत्न इति भावः । इहाल्पज्ञत्वेन साधर्म्यमनौद्धत्याय । बहुज्ञत्वेन साधर्म्यं कदर्यदुर्जनविवर्जनायेत्युभयत्र विवक्षा । अथेदानीमनुत्पन्नस्य कथमुत्पादोऽत्रानुपलब्धस्य वा कथमुपलम्भ इत्युभययोग्यतामाह—यतः कालोऽयं निरवधिर्विगतावसानः । विपुला महती च पृथ्वी भूमिः । तथा च तस्येदानीमनुत्पन्नस्य कालान्तर उत्पाद इहानुपलब्धस्य देशान्तर उपलम्भश्च स्यादिति भावः । इह प्रथमार्धे बहुत्वेन प्रयोगो द्वितीयार्ध एकत्वेन प्रयोगश्च न दोषः । भिन्नवाक्यार्थत्वात् । एकवाक्यार्थत्वे तादृक्प्रयोगस्यायोग्यतया दोषत्वात् । तथैव व्युत्पत्तेरित्यवधेयम् । यद्वा अवज्ञाप्रथावसरेऽहंकारेणात्मनो गौरवाद्बहुत्वं निजसमतावसरे शान्त्यात्मन्येकत्वम् । यद्वा जात्यभिप्रायमेकवचनम् ॥ ६ ॥ अधुना निजगुणगरिमोपदर्शनेन निजग्रन्थे विदग्धादरमाह—**यद्वेदेत्यादि** । यत्र खल्वियं वाचोयुक्तिरित्यत्राप्यनुषज्यते । अद्वैतप्रतिपादको वेदभाग उपनिषत्तज्ज्ञानम् । योगः पातञ्जलशास्त्रम् । तयोरध्ययनज्ञानयोः कथनेन किम् । अपि तु न किमपीत्यर्थः । यतस्ततो वेदाध्ययनादेर्नाटके कश्चिद्गुणो नास्ति । तेषां नाटकेऽनुपयोगात् । तत इति ल्यब्लोपे पञ्चमी । तान्प्राप्य नाटके न कश्चिद्गुण इत्यर्थः । वयं सर्वमेव विद्मः अनङ्गतया पुनस्तदत्र न निबद्धमिति भावः । तर्ह्यत्र कवेर्वेदादिज्ञानज्ञापनं किमर्थमत आह—यदिति । वचसां यत्प्रौढत्वं वाक्यार्थे पदं पदार्थे वाक्यं तत्कृतिः । यथा न दैवीयं किं तु मानुषीत्यर्थे निमेषवती ।

---

१ अस्मात्प्राक्—तदुच्यन्तां तत्प्रख्यापनाय सर्वे कुशीलवा यथा—स्वसंगीतकप्रयोगे वार्णिकापरिग्रहे च त्वर्यतामिति । कविवर्णनां प्रति तेनैवमुक्तम् ।

**गुणैः सतां न मम को गुणः प्रख्यापितो भवेत् ।**
**यथार्थनामा भगवान्यस्य ज्ञाननिधिर्गुरुः ॥**

अतो यदस्माकमर्पितं प्रियसुहृदा [1]तत्रभवता भवभूतिनाम्ना प्रकरणं स्वकृतिर्मालतीमाधवं नाम [2]तदेव तत्रभवतः कालप्रियन[3]ाथस्य पुरतः प्रयोगेण प्रख्यापयितुमुद्यताः । तत्सर्वे कुशीलवाः संगीत[4]प्रयोगेण मत्समीहितसंपादनाय प्रवर्तन्ताम् ।

**नटः**—( [5]स्मृत्वा ) [6]एवं क्रियते युष्मदादेशः । किं तु या यस्य युज्यते भूमिका तां खलु तथैव भावेन सर्वे वर्ग्याः पाठिताः । सौगतजरत्प[7]रिव्राजिकायास्तु कामन्दक्याः [8]प्रथमां भूमिकां भाव एवाधीते तदन्तेवासिन्यास्त्वहमवलोकितायाः ।

**सूत्रधारः**—ततः किम् ।

---

चन्द्रवदित्यर्थे ' नयनसमुत्थं ज्योतिरत्रेः ' इति । यदाह दण्डी—' पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा । प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ॥' इति । यच्च वचसामुदारता विकटत्वं यस्मिन्सति पदानि जनो नृत्यन्तीवेति मन्यते । यद्वा उदारतालंकारादिदोषशून्यत्वम् । यद्वा उदारता गुणभेदः । यदाह दण्डी—' उत्कर्षवान्गुणः कश्चिदुक्ते यस्मिन्प्रतीयते । तदुदाराश्रयं तेन सनाथा काव्यपद्धतिः ॥ ' इति । यच्चार्थतो गौरवमनर्घ्यार्थता । यद्वा स्वल्पं वचनमर्थसार्थप्रसरसमर्थमित्यर्थः । तद्यदि नाटकेऽस्ति ततस्तदेव पाण्डित्यवैदग्ध्ययोर्गमकं बोधकम् । पण्डितो वेदाध्ययनादिकुशलस्तस्य भावः पाण्डित्यम् । वैदग्ध्यं रसादियोगिप्रबन्धनकौशलम् । अनेन ग्रन्थे सर्वगुणवत्त्वमुक्तम् । तत्कर्तृत्वेनात्मनः सर्वपथीनमतिमत्त्वमप्युक्तम् । नाटक इति । ननु नाटक इत्ययुक्तम् । अस्य प्रकरणत्वात् । प्रकरणनाटकयोर्भेदात् । मैवम् । नट नृत्तावित्यस्य घञि स्वार्थे कनि नाटकमिति । तथा च नाटके नाट्य इत्यर्थात् ॥ ७ ॥ भूमिका व्याजप्रवेशः । यदाह भरतः—' अन्यरूपैर्यदन्यस्य प्रवेशः स तु भूमिका ' । इति । वर्गे भवा वर्ग्याः । नटमेलकस्था इत्यर्थः । सौगतस्य बौद्धस्य । जरत्परिव्राजिका वृद्धा भिक्षुकी । एतादृशी दौत्ये प्रशस्ता । यदाह भरतः—' विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका । प्रविश्य चाशु विश्वासं दूतीकार्यं च विन्दति ॥ ' इति वृद्धत्वं चास्या रूपशून्यत्वसर्वदृश्यत्वप्रगल्भत्वसूचकम् । यदाह—' लज्जितं नार्थवन्तं वा रूपिणं वा तथातुरम् । दूतं वाप्यथ वा दूतीं न तु कुर्यात्कथंचन ।॥ ' अन्तेवासिनी निकटशिष्या । अहं भूमिकामधीय इत्यन्वयः ॥ **ततः किमिति ।** एतावदुक्त्वा किमिति विरतोऽसीत्यर्थः । प्रकरणलक्षणं भरते—' आत्मशक्त्या कविर्यत्र कथां नायकमेव च । औत्पत्तिकं प्रकुरुते तद्धि प्रकरणं विदुः ॥ ' इदं च शुद्धम् । यदाह भरतः—' द्विधा प्रकरणं तत्तु शुद्धं संकीर्णमेव च । कुलस्त्रीर-

---

१ दात्रभ०, भवता काश्यपेन भव० ब्राह्मणेन. २ तदेतदेव. ३ नाथस्य सकलजगदेकचक्षुषो विश्वात्मनः सूर्यस्य पुरतो यथाप्रयो० अहमुद्यतः. ४ संगीतकः प्रयोगेण भूमिकाकरणेन च. ५ स्मृत्वा सहर्षम्. ६ स एषः. ७ प्रव्राजि०. ८ प्रथमभू०.

**नटः**—ततः प्रकरणनायकस्य मालतीवल्लभस्य माधवस्य वर्णिका-[1]परिग्रहः कथम् ।

---

चितं शुद्धं संकीर्णं वेश्यया कृतम् ॥' अत्र नाटके यादृशो नियमस्तादृशः । नायक लक्षणं भरते—' नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः । रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥ धृत्युत्साहस्मृतिप्रज्ञाकलामानसमान्वितः । शूरो दृश्यश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥ विनयः शीलसंपत्तिर्मधुरः प्रियदर्शनः । त्यागः सर्वस्वदानं स्याद्दक्षः क्षिप्रकरो मतः ॥ प्रियंवदोऽनुत्कटवाक्सस्नेहो लोकरञ्जकः । मितप्रस्तुतवाग्वाड्मी नित्यकर्मरतः शुचिः ॥ ख्यातवंशो रूढवंशः षोडशात्रिंशको युवा । वाङ्मनःकर्मभिर्यश्च न चलः स स्थिरो मतः ॥ धृतिः सर्वेषु या प्रीतिरुत्साहोऽग्लानिरेव च । स्मृतिः कालान्तरज्ञानं प्रज्ञा तीक्ष्णमतिर्मता ॥ कलाश्चात्र चतुःषष्टिर्मानश्चित्तसमुन्नतिः । शूरः संग्रामनिपुणो रूपवान्दृश्य उच्यते ॥ अतिप्रतापस्तेजस्वी शास्त्रचक्षुस्त्रयीपरः । आत्मवत्सर्वभूतानि यः पश्यति स धार्मिकः ॥' इति । ननु मालतीवल्लभत्वं माधवस्य न योग्यं माधवेन वसन्तेन समं वर्षाकालीनाया मालत्या जातेः संबन्धाभावात् । नैवम् । अपूर्वमेव हि पदार्थसार्थं योगिनीप्रभावात्संपन्नमासाद्य सहृदयहृदयचमत्कारकारिणीं वैदग्धीमेव कविरयमुत्प्रेक्षितवानित्यदोषः । माधव इति नाम्ना शृङ्गारमयतोक्ता । वसन्तस्य शृङ्गारमयत्वात् । शृङ्गारमयत्वेन विष्णुदैवतत्वमपि कटाक्षितम् । यदाह भरतः—'शृङ्गारो विष्णुदैवतः' इति । अत एव श्यामत्वमपि वक्ष्यति कुवलयदलश्यामोऽयमित्यादिना । 'श्यामो भवेत्तु शृङ्गारः' इत्यपि भरतः । अयममात्यत्वाद्धीरोदात्तो नायकः । यदाह भरतः—'सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ' । इति । मालती नायिका । तल्लक्षणं भरते—'स्वान्यसाधारणस्त्रीति तद्गुणा नायिका त्रिधा । स्वकीया तत्र वक्तव्या मुग्धा मध्या प्रगल्भिका ॥ शीलार्जवादिसंयुक्ताऽकुटिला च पतिव्रता । लज्जावती चापरुषा निपुणा च प्रियंवदा ॥ साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् । रूपकेषु च रक्तैव कर्तव्या प्रहसं विना । अन्यस्त्री द्विविधा प्रोक्ता कन्यकोढा तथा परा । रसे प्रधाने कर्तव्या नान्योढा नाट्यवेदिभिः ॥ कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम् ॥' इति । अन्यदपि प्रसङ्गादुच्यते । तथा हि—'नाटके वृत्तयः प्रोक्ताश्चतस्रो नाट्यवेदिभिः । भारती कैशिकी चैव सात्त्वत्यारभटी तथा ॥' तत्र शृङ्गारे कामकलावच्छिन्नो व्यापारः कैशिकी ॥ 'विशोका सात्त्वती सत्त्वशौर्यत्यागार्जवादिभिः । मायेन्द्रजालसंग्रामक्रोधोद्भ्रांतादिचेष्टितैः । भवेदारभटी नाम नाट्ये तिस्रस्तु वृत्तयः ॥ भारती शब्दवृत्तिः स्याद्रसे रौद्रे च युज्यते । शृङ्गारे कैशिकी वीरे सावत्त्यारभटी पुनः ॥ एवमङ्गानि कार्याणि प्रधानस्याविरोधतः । आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः ॥ अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् । यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा । यदा तु सरसं वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥

---

[1] काग्रहः.

**सूत्रधारः**—कलहंसमकरन्दप्रवेशावसरे तत्सुविहितम् ।

**नटः**—तेन हि तत्प्रयोगादेवात्रभवतः सामाजिकानुपास्महे ।

**सूत्रधारः**—बाढम् । एषोऽस्मि कामन्दकी संवृत्तः ।

**नटः**—अहमप्यवलोकिता । ( इति परिक्रम्य निष्क्रान्तौ । )

## प्रस्तावना ।

( ततः परिवृत्त्य रक्तपट्टिकानेपथ्ये कामन्दक्यवलोकिते प्रविशतः । )

**कामन्दकी**—वत्से अवलोकिते ।

**अवलोकिता**—आज्ञापयतु भगवती ( आणवेदु भअवदी । )

---

प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरःसरः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः । गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ॥ न चातिरसतो वस्तु दूरविच्छिन्नतां नयेत् । रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः ॥ एको रसोऽङ्गीकर्तव्यो वीरः शृङ्गार एव वा । अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥ शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्सोद्भुत इत्येवमष्टौ नाट्ये रसाः स्मृताः ॥ यद्यपि 'अविकारस्थितिः शान्तः शान्तस्तु नवमो रसः' । इत्यस्ति तथापि स न सर्वसंमतो न वा नाट्यविषयश्चेति न पृथगुक्तः । स्थायिभावाभावात्तस्य नाट्यविषयता न संभवतीति दिक् । नायिका च मालत्युदात्तनिभृता । कुलस्त्रीत्वात् । यदाह भरतः—'उदात्तनिभृता चैव भवेत्तु कुलजाङ्गना । इति । वर्णिका मषी ॥ बाढं दृढम् । कामन्दकी संवृत्तः कामन्दकीरूपः । एतेन सूत्रेणैव काव्यार्थसूचनं कार्यमिति मतमनुमत्य कामन्दकीसूचनमपि सूत्रसूचनमेव वृत्तमिति दर्शितम् । यद्वा अग्रे मकरन्देन मालतीरूपं कर्तव्यमिति पुंसः स्त्रीत्वापत्यात्र सूचितम् । कामन्दकीं नीतिग्रन्थभेदस्तं वेत्तीति कामन्दकी । 'तदधीते' इत्यण् ङीप् च । अनया नामव्युत्पत्त्या नीतिवेदिताबोधनेन प्रकृतसिद्धिहेतुतोक्ता ॥ तदन्तेवासिनी अवलोकिता दृष्टिरेति कार्यसिद्धिदृष्टेरपि कार्यसिद्धिहेतुतोक्ता तदुक्तेजनिकेति । निष्क्रान्तौ । सूत्रधारनटाविति शेषः ॥ **प्रस्तावनेति** । निवृत्तेति शेषः । एतल्लक्षणं भरते—'नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥' इति । परिवृत्य पुनरागत्य । रक्तपट्टिका लोहितपट्टिका नेपथ्यमलंकारो ययोस्ते ॥ अधुना कामन्दकी समस्तप्र-

---

१ हंसक. २ तदेहि; तत्प्रसिद्धप्रयोगादेव तर्हि; तत्प्रतिबद्धप्रबन्धप्रयो०, तत्प्रबन्धयो०. ३ प्रविश्य रक्तपटेन कृतनेपथ्या कामन्दक्य० च; रक्तपटिककृतनेपथ्ये उभे. ०पटिकानेपथ्ये उपविष्टे प्रविशतः.

**काम०**—अपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालती-माधवयोरभिमतः[1] पाणिग्रहः स्यात् । ( वामाक्षिस्पन्दनं[2] सूचयित्वा सहर्षम् । )

**विवृण्वतेव कल्याणमान्तरज्ञेन चक्षुषा ।**
**स्फुरता वामकेनापि दाक्षिण्यमवलम्ब्यते ॥ ८ ॥**

**अव०**—महान्खल्वेष भगवत्याश्चित्तविक्षेपः । आश्चर्यमाश्चर्यं यदि-दानीं चीरचीवरपरिच्छदां पिण्डपातमात्रप्राणयात्रां भगवतीमीदृश आयासे-ऽमात्यभूरिवसुर्नियोजयति । तत्र चोत्खण्डितसंसारावग्रह आत्मा युष्माभिरपि नियुज्यते । ( महन्तो क्खु एसो भअवदीए चित्तविक्खेवो । अच्चरिअं अच्चरिअं जं दाणिं चीरचीवरपरिच्छदं[3] पिण्डपादेमत्तपाणअत्तं[4] भअवदिं ईरिसे आआसे[5] अमच्चभूरिवसू णिओएदि । तहिं[6] अ उक्खण्डिदसंसारावग्गहो तुह्मेहिं वि अप्पा णिउज्जीअदि । )

---

करणोपयुक्तमुपक्षेपमाह—**अपीत्यादि** । यदाह—' काव्यार्थस्य समुत्पत्तिरुपक्षेपः स्मृतो बुधैः । ' इह तु मालतीमाधवयोर्विवाहनिर्वाहः काव्यार्थः । **अपि नामेति** । नाम सम्भावनायाम् । तेन भवेदपीत्यर्थः । निश्चये वा नाम । तेन निश्चितमेव भवे-दित्यर्थः । कल्याणिनोरित्यनेनाशंसनीयकुशलतयानुग्राह्यत्वमुक्तम् । भूरिवसुर्मालतीपिता । महाधनिककन्याया आवश्यकी वराकाङ्क्षेति नामतात्पर्यम् । देवरातो माधवपिता । देववद्राति दत्ते । ' रा दाने कर्तरि क्तः । देवरातः । तथा च जनो दातरि विवाह्यत इति महाधनिकवद्वदान्यत्वप्रभुत्वादियोगिनोऽनुरूप एव प्रायः पुत्र इति वरे कन्याकाङ्क्षा-सूचनं नामानुनयेन । एवं च योग्ययोर्योग्य एव सम्बन्ध इति भावः । पाणिग्रहो विवाहः । **विवृण्वतेति** । अपिरवधारणे । तेन वामकेनैव वामेनैव चक्षुषा दाक्षिण्य-मवलम्ब्यते । कीदृशेन स्फुरता स्पन्दवतात एव कल्याणं विवृण्वता सूचयता । स्त्रीणां वामाङ्गस्फुरणस्य शुभसूचकत्वात् । आन्तरज्ञेनेव मदीयचित्तवृत्तिज्ञेनेव । इवोत्प्रेक्षायाम् । ' उत्प्रेक्षा व्यज्यन्ते शब्दैरिवशब्दोऽपि तादृशः । ' इति दण्डी । अथवापिर्विरोधे । वामे-नापि प्रतिकूलेनापि दाक्षिण्यमानुकूल्यमवलम्ब्यत इति विरुद्धमिदम् । वामक इति स्वार्थे कन् ॥ ८ ॥ **अवलोकिता** । अत्र खलु निश्चये । चित्तविक्षेपोऽसद्विष-याभिनिवेशः । चीरेण वस्त्रखण्डेन । चीवरं सौगतपरिव्राजकवासस्तदेव परिच्छदः परिकरो यस्यास्ताम् । पिण्डपातो नाम बौद्धानां भिक्षाभ्रमणेन भोजनम् । तन्मात्रेण प्राणयात्रा जीवनं यस्यास्ताम् । ईदृशे विवाहकार्ये । इह पुरन्ध्रीणामेवाधिकारो न तु भवादृशीनामिति भावः । उत्खण्डित उन्मूलितः संसाररूपोऽवग्रहो मोक्षप्रतिबन्धो यत्र

---

१ अभिमतं पाणिग्रहमङ्गलम्. २ ०स्पन्दं, सूच०, अभिनीय ३ चीवरमेत्त. ४ पाणउत्तिं ( प्राणवृत्तिं ). ५ ईरिसेसु आयासेसु. ६ तस्सिं.

**काम०**—वत्से मा मैवं ब्रूहि ।

**यन्मां विधेयविषये सभवान्नियुङ्क्ते**
**स्नेहस्य तत्फलमसौ प्रणयस्य सारः ।**
**प्राणैस्तपोभिरथ वाभिमतं मदीयैः**
**कृत्यं घटेत सुहृदो यदि तत्कृतं स्यात् ॥ ९ ॥**

अयि किं व वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्यमासीत् । तदैव चास्मत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञाऽवश्यमावाभ्यामपत्यसम्बन्धः कर्तव्य इति । तदिदानीं विदर्भराजमन्त्रिणा सता देवरातेन माधवं पुत्रमान्वीक्षिकीश्रवणाय कुण्डिनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितम् ।

**अपत्यसम्बन्धविधिप्रतिज्ञा प्रियस्य नीता सुहृदः स्मृतिं च ।**
**अलोकसामान्यगुणस्तनूजः प्ररोचनार्थं प्रकटीकृतश्च ॥ १० ॥**

---

सः । यद्वा उन्मूलितः संसाररूपोऽपकृष्टो ग्रहो यत्र सः । **कामन्दकी** । मा मेति वीप्सात्यन्तनिषेधे । **यन्मामित्यादि** । सभवान्पूज्यो भूरिवसुर्यन्मां विधेयविषये नियोज्यगोचरे नियुङ्क्ते नियोजयति तत्स्नेहस्य प्रीतेः फलम् । स ह्यस्माकं प्रेमपात्रमिति भावः । असौ नियोगः प्रणयस्य प्रश्रयस्य सार उत्कर्षो निर्यासो वा । यदि मदीयैः प्राणैरथवा मदीयैस्तपोभिः सुहृदो मित्रस्याभिमतं वाञ्छितं कृत्यं कार्यं घटेत तदा तत्कार्यं कृतं स्यात् । मत्प्राणादिभिरपि भवेदित्यर्थः । यद्वा सुहृदोऽभिमतमिदं यदि घटेत निष्पद्येत तदा मदीयैः प्राणैस्तपोभिर्वा तत्कृत्यं कृतं स्यात् । अघटने तु सर्वमिदं व्यर्थमित्यर्थः । एतेनावश्यकर्तव्यतोक्ता । 'प्रणयः प्रेम्णि विश्वासे याच्ञाप्रश्रययोरपि ।' इति विश्वः ॥ ९ ॥ भूरिवसोः स्वीकारबीजमेवंविधप्रश्रयोपपत्तिं चाह—**किं नेत्यादि** । न इति बहुवचनेन स्वभूरिवसुदेवरातानामुपादानम् । **अस्मदिति** । अस्माकं सौदामिन्याश्च प्रत्यक्षमित्यर्थः । अपत्यसम्बन्धो विवाहः । सौदामिनीसमक्षमित्यनेन तस्या देवरातबन्धुतया नवमाङ्के माधवप्राणत्राणकारणत्वमस्या नाम च सूचितम् । युक्तं चेदम् । 'नासूचितं विशेत्पात्रम्' इति भरतः । एवमन्यत्रापि सूचितस्यैव प्रवेशः । आन्वीक्षिकी न्यायशास्त्रम् । तत्र तर्कच्छलादिनिष्टङ्कनेन तदभ्यासान्माधवस्य चोरिकाविवाहे कौशलमुक्तम् । श्रवणं पाठः । कुण्डिनपुरं विदर्भनृपराजधानी । प्रहिण्वता प्रस्थापयता । सुविहितं शोभनं कृतम् । **अपत्येत्यादि** । देवरातेन पुत्रं प्रहिण्वतापत्यसम्बन्धविधिप्रतिज्ञा विवाहप्रतिज्ञा प्रियस्य सुहृदः प्रीतिमित्रस्य भूरिवसोः । सुहृदः शोभनचित्तस्य वा । स्मृतिं स्मरणं

---

१ यदेकत्र नौ...वासिनोः साह०. २स्मदन्तेवासिनी सौ०. ३ राजस्य. ४ हितं विहितम् । अस्मात्परं-कृतः । ५ अनन्य.

**अव०**—ततः किमिति मालतीममात्यो माधवस्यात्मना न प्रतिपादयति येन चोरिकाविवाहे भगवतीं त्वरयति । ( तदो किंत्ति मालदिं अमच्चो माहवस्स अप्पणा ण प्पडिवादेदि जेण चोरिआविवाहे भअवदिं तुवरावेदि । )

**काम०**—

**तां याचते नरपतेर्नर्मसुहृन्नन्दनो नृपमुखेन ।**
**तत्साक्षात्प्रतिषेधः कोपाय शिवस्त्वयमुपायः ॥ ११ ॥**

**अव०**—आश्चर्यमाश्चर्यम् । न खल्वमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते । ( अच्चरिअं अच्चरिअं । ण क्खु अमच्चो माहवस्स णाम वि जाणादित्ति णिरवेक्खदाए लक्खीअदि ।

**काम०**—वत्से संवरणं हि तत् ।

**विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः ।**
**तेन माधवमालत्योः कार्यः स्वमतिनिह्नवः ॥ १२ ॥**

अपि च ।

**अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः ।**
**श्रेयो[3] ह्यस्माकमेवं हि प्रतार्यौ राजनन्दनौ ॥ १३ ॥**

---

नीता प्रापिता । अलोकसामान्यगुणो लोकविलक्षणगुणः पुत्रः प्ररोचनार्थं प्रवृत्तिपाटवार्थं स्फुटीकृतश्च । प्ररोचनस्यैव सर्वकार्यसिद्ध्यङ्गत्वात्तत्करणम् ॥ १० ॥ **अवलोकिता** । अत्रामात्यो भूरिवसुः माधवस्य कृत इति शेषः । प्रतिपादयति ददाति । चोरिकया विवाहस्य धर्मशास्त्रे निषेधादिति भावः । **तामित्यादि** । नन्दननामा राज्ञोऽन्तःपुरसचिवो नृपद्वारा तां याचते । तत्र साक्षान्निषेधः कोपाय राज्ञः । अयं तु मद्वारा संयोजनात्मक उपायः शिवः । परिणामसुरस इत्यर्थः । आर्या छन्दः । 'स्यान्नर्मसचिवः सोऽयं कुपितस्त्रीप्रसाधकः ।' नन्दयतीति नन्दनः । एतेनानन्दजनकत्वादन्तःपुरसचिवता युक्तेति नामतात्पर्यम् ॥ ११ ॥ **कामन्दकी** । संवरणं सङ्गोपनम् । **विशेषत इत्यादि** । तेन भूरिवसुना तयोर्वत्सयोर्विशेषेण स्वमतिनिह्नवः कार्यो निजज्ञानगोपनं कर्तव्यम् । बालत्वाच्छिशुत्वेन प्रकाशिताभिप्राययोः यथा तावपि प्रकृतं न जानीतस्तथा कृतं तेनेति भावः । युक्तं चादः । 'नादेशे नाकाले नापरिपक्वेन्द्रिये न गुणहीने । कथयति हि कथां स्वगतां न तथास्य कथा भवति वन्ध्या ॥ इति नीतेः ॥ १२ ॥ **अनुरागेत्यादि** । तयोरनुरागप्रवादः सर्वलोकविदितः सन्नस्माकं श्रेयः श्रेयोलम्भी । 'श्रेयान्' इति वा पाठः । यत एवं सति राजा नन्दन-

---

१ प्रतिबन्धः २ पेक्ख. ३ श्रेयोऽप्यस्माकं.

पश्य ।

**बहिः सर्वाकारप्रगुणरमणीयं व्यवहर-**
**न्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।**
**जनं विद्वानेकः सकलमतिसंधाय कपटै-**
**स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ १४ ॥**

**अव०**—मयापि युष्मद्वचनात्तेन तेन वचनोपन्यासेन भूरिवसुमन्दिरासन्नराजमार्गेण माधवः संचार्यते । (मए वि तुह्मवअणादो तेण तेण वअणोवण्णासेण भूरिवसुमन्दिरासण्णराअमग्गेण माहवो संचारीअदि ।)

**काम०**—कथितमेव नो मालतीधात्रेय्या लवङ्गिकया ।

**भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं**
**दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था ।**
**साक्षात्कामं नवमिव रतिर्मालती माधवं य-**
**द्गाढोत्कण्ठा लुलितलुलितैरङ्गकैस्ताम्यतीति ॥ १५ ॥**

---

श्वोभौ वञ्चनीयौ तयोरन्योन्यानुरागादेव परिणयो वृत्तो न मया कारित इति वक्तव्यमेवेति भावः । सार्वलौकिक इत्यत्र सर्वलोकाट्ठञ् । अन्योन्यानुरागेण गान्धर्वविवाहोऽपि सूचितः ॥ १३ ॥ **बहिरित्यादि** । विद्वान्सुबुद्धिरेकः श्रेष्ठो-द्वितीयो वा सकलं जनं कपटैरति(भि)सन्धाय वञ्चयित्वा स्वानर्थान्स्वप्रयोजनानि सम्पादयति । मौनमभाषणं भजते च । विधिनिषेधपरं वचो न वदतीत्यर्थः । अत एव तटस्थ उदासीन इवानभिव्यक्तव्यापार इत्यर्थः । कथम् । सर्वाकारेणेङ्गितादिना स्वभावसुन्दरं यथा भवति तथा बहिः प्रगटं व्यवहरन्नतिसूक्ष्माण्यपि पराभ्यूहस्थानानि परस्य तर्कस्थानानि स्थगयति पिदधाति । अविभिन्नक्रमः 'अतिसन्धिर्वञ्चनार्थः' इति धातुसंग्रहः । 'केवलश्रेष्ठयोरेकः' इति धरणिः ॥ १४ ॥ **अवलोकिता** । अत्रोपन्यासो व्याजेन कार्योद्भेदः । राजमार्गेणेत्यनेन सर्वसाधारण्यान्माधवस्यानौद्धत्यमद्वितीयवेद्यता च सूचिता । सञ्चारणं च तद्दर्शनेन मालत्या अनुरागायेति भावः । अत्र कामन्दक्यावलोकितायामेवमनुक्तत्वात्कथं तव वचनादिति-घटत इति न देश्यम् । प्राणैस्तपोभिरित्यादिना तदभिधानात् । **कामन्दकी** । धात्रेय्युपमातृसुता । एतेन बाल्यात्प्रभृति सकलचेष्टावेदित्वं ध्वनितम् । तथा च लवङ्गिका मालतीगतं यत्कथयति तत्प्रमाणमेवेत्येवकारव्यङ्ग्यम् । अनेनास्याः सखीत्वमप्युक्तम् । यदाह भरतः—'कारुर्दासी च धात्रेयी प्रतिवेश्या च शिल्पिका । बाला प्रव्रजिता चेति नायिकानां सखीजनः ॥' इति । न इति बहुवचनेनात्मनि लवङ्गिकाहृदयजागरूकबहुमानेन वञ्चकतानिरासः सूचितः । **भूय इत्यादि** । मालत्यङ्गकैस्ताम्यति खिद्यत इति कथितमेव लवङ्गिकयेत्यन्वयः । अङ्गकैरित्यत्रा-

---

१ प्रवण. २ अभिसं. ३ सन्नतर. ४ ललित.

**अव०**—बाढम् । तयाप्यात्मनो विनोदनिमित्तं माधवप्रतिच्छन्दकमालिखितं तल्लवङ्गिकया मन्दारिकाया हस्तेऽद्य निहितं तावत् ।

( बाढम् । ताँए वि अत्तणो विणोदणिमित्तं माहवपडिच्छन्दअं ओलिहिअं तं लवङ्गिआए मन्दारिआए हत्थे णिहिदं दाव । )

---

ल्पार्थे कन् । अल्पता मृदुत्वेन । बहुवचनात्सर्वाङ्गमुक्तम् । तथा च मृदुभिः सर्वाङ्गैरित्यर्थः । कीदृशैः । तं माधवं दृष्ट्वा दृष्ट्वा पुनः पुनरवलोक्य । गाढोत्कण्ठया दृढाकाङ्क्षया लुलितलुलितैरतिम्लानकान्तिभिः । 'ललितलुलितैः' इति पाठे पूर्वं ललितै रम्यैरधुना लुलितैर्म्लानैरित्यर्थः । कीदृशम् । सविधनगरीरथ्यया मालतीगृहनिकटराजमार्गेण भूयो भूयः पुनः पुनः पर्यटन्तं गच्छन्तम् । इह राजमार्गोपन्यासेन माधवस्य निःशङ्कः सञ्चारो मालत्याश्च तद्दर्शनेन परवितर्काभावः सूचितः । गमने पौनःपुन्येन दर्शनं प्रति दार्ढ्यमुक्तम् । दर्शने च पौनःपुन्येन तस्या उत्कण्ठातिशय उक्तः । यद्वा प्रथमवीप्सया दर्शनं दृष्ट्वानुवृत्त्या प्रथमं रम्यवस्तुचमत्कारेण तत उद्भिद्यमानानुरागनवाङ्कुरेण नेत्रप्रीतिर्युज्यते । द्वितीयवीप्सया सहचरीभिरप्यज्ञाता नयनप्रीतिरुक्ता । नगरीपदेन रथ्याया अनेककौतुकाधारतोक्ता । तथा चेतस्ततोऽनेककौतुकदर्शनतरलि ( न निर ) तत्वेन माधवस्य सम्यग्दर्शनसम्पादकनिकटार्थकसविधपदनिगर्व उक्तः । क्त्वाप्रत्ययेन चानन्तरभाविविह्वलताया विषयान्तरसञ्चारेणापि व्यवधानस्यापादनादत्यन्तानुरागोद्भेदः सूचितः । कथमन्तःपुरस्था सा ददर्शेत्यत आह—भवनेति । भवनस्य प्रासादादेर्या वलभ्युपरिकुटी तस्याः तुङ्गमुच्चं यद्वातायनं गवाक्षस्तत्रस्था ! तुङ्गतया यथाकाङ्क्षं दर्शनमुक्तम् । वातायनेनेत्यनेन वातस्यायनं गमनं यत्रेति व्युत्पत्त्या घर्मादितापवती गभीरसमीरपरिशीलनार्थं यातीति प्ररोहेण निरर्गलमस्या गमनं तत्रेति सूचितम् । यद्यपि 'सौधोपरिकुटीं वलभीं विदुः' इति भवनपदमत्र गतार्थं तथाप्युक्तिपोषालङ्कारद्योतनार्थं भवनपदम् । यद्वा भवनरूपा वलभी मालतीवसतिः सौधोपरिकुटीत्यर्थः । एतेनास्या निजगृहाद्वलभीगमनं किमर्थमित्यन्याशङ्कापरिहारो निरर्गलं च तद्दर्शनं भवतीति ध्वनितम् । यथा रतिः कामकान्ता नवं दाहानन्तरमुत्पन्नं साक्षात्प्रत्यक्षं कामं दृष्ट्वाङ्गैस्ताम्यति तथेत्यर्थः । मालती रतिर्माधवश्च काम इति तयोर्बहललोकसङ्कुलेऽपि पथि रागसागरोऽन्योन्यं ववृध इति भावः । यद्वा कामोऽनङ्गतयाप्रत्यक्षो वृद्धश्च । अत्रोत्प्रेक्षा विशिष्टस्यैव । साक्षात्प्रत्यक्षं नवं काममिवेत्यर्थः । ताम्यतीत्यनेनोद्वेग उक्तः । यदाह भरतः—'चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च । श्लथाङ्गोपाङ्गचेष्टाभिरुद्वेगाभिनयो भवेत् ॥' इति ॥ १५ ॥ 'रथ्याप्रतोली विशिखा' इत्यमरः । वातायनं गवाक्षोथ इति च । साक्षात्प्रत्यक्षतुल्ययोरिति धरणिः । **अवलोकिता** । बाढमतितरामनुरक्ता मालतीत्यर्थः । विनोदः क्रीडा हर्षो वा । प्रतिच्छन्दकं प्रति-

---

१ जदो ताए, ताए उव्वेअ ( उद्वेग ) विणोअणं. २ अभि. ३ णिक्खित्तं ( निक्षिप्तम् ).

**काम०**—( विचिन्त्य ) सुविहितं लवङ्गिकया यतो माधवानुचरः कलहंसकस्तां[1] विहारदासीं मन्दारिकां कामयते । तदनेन तीर्थेन[2] घटेत तत्प्रतिच्छन्दकमुपोद्धाताय[3] माधवान्तिकमुपेयादित्यभिप्रायः ।

**अव०**—माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मकरन्दोद्यानमद्य प्रभातेऽनुप्रेषितः । तत्र किल मालती गमिष्यति । ततोऽन्योन्यदर्शनं भवत्विति । ( माहवो वि कोदूहलं उप्पादिअ मए पउत्तमअणमहूसवं मअरन्दुज्जाणं[4] अज्ज पभादे अणुप्पेसिदो । तत्थ किल मालदी गमिस्सदि तदो अण्णोण्णदंसणं होदु त्ति । )

**काम०**—साधु वत्से साधु । अनेन मत्प्रियाभियोगेन स्मारयसि मे पूर्वशिष्यां सौदामिनीम् ।

**अव०**—भगवति सा सौदामिन्यधुना समासादिताश्चर्यमन्त्रसिद्धिप्रभावा श्रीपर्वते कापालिकव्रतं धारयति । ( भअवदि सा सोदामिणी अहुणा समासादिदअच्चरिअमन्तसिद्धिप्पहावा सिरीपव्वदे कावालिअव्वदं धारेदि । )

**काम०** — कुतः पुनरियं वार्ता ।

**अव०**—अस्त्यत्र नगर्यां महाश्मशानप्रदेशे कराला[5] नाम चामुण्डा । ( अत्थि एत्थ णअरीए महामसाणप्पदेसे करालो णाम चामुण्डा । )

---

रूपकम् । तावत्पदेन मन्दारिकाहस्तनिधानस्य प्रकृतकार्योपक्रमः सूचितः । अत एव कामन्दक्या सुविहितमित्युक्तम् । **कामन्दकी** । विहारः सौगतप्रव्राजिकानामालयः । तत्र व्यापृता दासी विहारदासी । एतेन प्रकरणबाह्यत्वमुक्तम् । यदाह दण्डी–' शकारः कुट्टिनी दासी धर्मशास्त्रबहिष्कृताः । विटचेष्टादयो नित्यं बाह्याः प्रकरणे मताः ॥ तीर्थेन द्वारा उपायेन वा । ' तीर्थमुपायद्वारमन्त्रिषु ' इति विश्वः । उपोद्धातेन प्रसङ्गेन । अभिप्रायस्तावदिति वादिन्यास्तवेति शेषः ॥ **अवलोकिता** । ' कौतुकं तु कुतूहलम् ' इत्यमरः । मदनमहोत्सवेन वसन्तकालः सूचितः । तस्य च वैवाहिकत्वम् । यदाह-'शरत्सङ्ग्रामविषये विवाहे ज्येष्ठमाधवौ । इति । किल प्रसिद्धौ । इति हेतौ । अनुप्रेषणे तत्र किलेत्यादेर्हेतुत्वम् । अन्योन्यदर्शनेनोभयानुरागे विवाहनिर्वाहः ॥ प्रिये प्रीतिविषये कार्येऽभियोग आसङ्गः । अत्र कपालव्रतं महाव्रतम् । कुत इत्यादिना श्मशानाङ्कसूचनम् ॥

---

१ ०हंसो नाम. २ तीर्थेन तत्; घटते. ३ उपोद्धातेन ( टी ). ४ मअणज्जाणं (मदनो०). ५ कराली.

**काम०**—अस्ति यां किल विविधजीवोपहारप्रियेति साहसिकानां प्रवादः।

**अव०**—तत्र खलु श्रीपर्वतादागतस्य रात्रिविहारिणो नातिदूरारण्यवासिनः साधकस्य मुण्डधारिणोऽघोरघण्टनामधेयस्यान्तेवासिनी महाप्रभावा कपालकुण्डला नामानुसन्ध्यं समागच्छति। तत इयं प्रवृत्तिः। ( तहिं क्खु सिरीपव्वदादो आअदस्स रत्तिविहारिणो णादिदूरारण्णवासिणो साहअस्स मुण्डधारिणो अघोरघण्टणामहेअस्स अन्देवासिणी महाप्पहावा कवालकुण्डला णाम अणुसंज्झं समाअच्छदि! तदो इअं पउत्ती। )

**काम०**—सर्वं सौदामिन्यां सम्भाव्यते।

**अव०**—अलं तावदेतेन। भगवति सोऽपि सहचरो माधवस्य बालमित्रं मकरन्दो नन्दनस्य भगिनीं मदयन्तिकां यदि समुद्वहति तदपि माधवस्य द्वितीयं प्रियं कृतं भवति। ( अलं दाव एदिणा। भअवदि सो वि सहअरो माहवस्स बालमित्तं मअरन्दो णन्दणस्स वहिणिं मदअन्तिअं जइ समुव्वहदि तं वि माहवस्स दुदीअं पिअं किदं होदि। )

**काम०**—नियुक्तैव तत्र मया तत्प्रियसखी बुद्धरक्षिता।

**अव०**—सु विहितं भगवत्या। ( सु विहिदं भअवदीए। )

**काम०**—( विचिन्त्य ) तदुत्तिष्ठ। माधवप्रवृत्तिमुपलभ्य मालतीमेव पश्यावः।

---

**कामन्दकी**। किल प्रसिद्धौ। विविधा नानारूपा जीवा मानुषादय उपहारा बलयः प्रिया यस्याः सा। अनेन मालत्युपहारः सूचितः। आत्मनिरपेक्षं कर्म साहसं तेन वर्तन्ते ते साहसिकाः। प्रवादः प्रसिद्धिः। इह प्रियेत्यस्यानन्तरमिति पदं देयमन्यथा पूर्वापरानन्वयात्। तथा च प्रियेत्यनेनाकारेण साहसिकानां प्रवाद इत्यर्थः। अत एव वाक्यार्थकर्मोदावितेरध्याहारः ॥ **अवलोकिता**। इह खलु प्रसिद्धौ। तस्याश्चामुण्डाया नातिदूरेणात्यासन्ने वस्तुं शीलं यस्य तस्य। एतेन देवकुलस्य लोकसङ्कुलतया किंचिद्विप्रकृष्टं साधकसंस्थानमुक्तम्। साधकस्य योगिनः। मुण्डधारिणः कापालिकस्य। **अघोरघण्टेति**। 'कापालिकास्तु घण्टान्तनामानः समुदाहृताः।' इति भरतः। अघोरोऽविमृष्यकारीति नामव्युत्पत्तिः। अनुसन्ध्यं सन्ध्यायाम्। प्रवृत्तिर्वार्ता। सर्वमघोरघण्टनाशनमाधवरक्षणादिकम्। अत्रैतेन कापालिकादेः कथनेनालं निष्फलमधुनानुपयोगात्॥ **अवलोकिता**। बालमिति भावप्रधानम्। तेन बाल्यान्मित्रमित्यर्थः। समुद्वहति विवहति ॥ **कामन्दकी**। बुद्धरक्षितेत्यनेन भिक्षुकीत्वं सूचितम्। अत एव दौत्ये नियुक्ता ॥ **कामन्दकी**। उत्तिष्ठेत्यत्रोर्ध्वकर्मत्वान्न तङ् ॥

---

१ सा. २ साधकानां. ३ इदो नादिदूरमसाणबा०. ४ मुण्डमालाधा०. ५ महानुभावा. ६ णअेर समा०. ७ सर्वं हि. ८ पास्स ( पार्श्व० ).

( उभे उत्तिष्ठतः । )

**काम०**—( विचिन्त्य । ) अत्युदारप्रकृतिर्मालती । तन्निपुणं निसृष्टार्थदूतीकल्पः सूत्रयितव्यः । सर्वथा

**शरज्ज्योत्स्ना कान्तं कुमुदमिव तं नन्दयतु सा**
**सुजातं कल्याणी भवतु कृतकृत्यः स च युवा ।**
**वरीयानन्योन्यप्रगुणगुणनिर्माणनिपुणो**
**विधातुर्व्यापारः फलतु च मनोज्ञश्च भवतु ॥ १६ ॥**

( इति निष्क्रान्ते । )

**विष्कम्भकः ।**

---

( ततः प्रविशति गृहीतचित्रफलकोपकरणः कलहंसः । )

**कलहंसः**—कुत्रेदानीं तुलितमकरध्वजावलेपरूपविभ्रमावाक्षिप्तमालतीहृदयमाहात्म्यं नाथमाधवं प्रेक्षिष्ये । ( परिक्रम्य ) परिश्रान्तोऽस्मि ।

---

**कामन्दकी** । अत्युदात्ता गभीरा प्रतिपन्नार्थासंवादिनी प्रकृतिर्यस्याः सा तथा । निसृष्टार्थेति । नायिकाया नायकस्य वा मनोरथं ज्ञात्वा स्वमत्या कार्यं साधयति सा निसृष्टार्था दूती तस्याः कल्पो व्यापारः प्रस्तावनीय इत्यर्थः । दूती च त्रिविधा । यदाह—'निसृष्टार्था मितार्था च तथा शासनहारिका । सामर्थ्यात्पादिताहीना दूती तु त्रिविधा मता ॥' इति । **शरदित्यादि** । सा मालती तं माधवं नन्दयतु प्रीणातु । यथा शरच्चन्द्रिका कुमुदं नन्दयति । तथा चन्द्रिकाकुमुदयोर्नित्यं प्रीतिस्तथा तयोरप्यस्त्विति भावः । कीदृशम् । कान्तं रम्यम् । सुजातं शोभनजन्मानम् । शोभनता च गुणवत्वेन । यद्वा कान्तमन्यस्त्रीभोगचिह्नशून्यम् । यदाह भरतः—'अन्यस्त्रीभोगसम्भूतं चिह्नं यस्य न विद्यते । देहे वाप्यधरे वापि स कान्त इति कीर्तितः ॥' सा कीदृशी । कल्याणी । निरवद्या । स च युवा कल्याणी विवाहकल्याणयोगी संस्तां प्राप्य कृतकृत्यः कृतार्थो भवतु । युवेत्यनेन कन्यायां मदनमदोद्दीपकतायोगित्वमुक्तम् । एवं सति विधातुः प्रयत्नः सफलो भवतु मनोहरश्च भूपनन्दनाविरोधेन सर्वावर्जकोऽस्त्वित्यर्थः । कीदृशः । अन्योन्यं कामिनोः प्रगुणा अनुरूपा ये गुणास्तेषां निर्माणे कुशलोऽत एव वरीयाञ्श्रेष्ठो गरीयान्गुरुर्वा । यद्वा अन्योन्यं प्रगुणा उत्कृष्टा ये गुणास्तेषां निर्माणे कुशलः ॥ १६ ॥ निष्क्रान्ते कामन्दक्यवलोकिते । **विष्कम्भक इति** । 'कुतोऽपि स्वेच्छया प्राप्तः सम्बन्धेनोभयोरपि । विष्कम्भकः स विज्ञेयो यस्तु काव्यार्थसूचकः ॥ विष्कम्भस्तु द्विधा सोऽयं शुद्ध सङ्कीर्ण एव च । शुद्धो मध्यमपात्रेण सङ्कीर्णो मध्यमाधमैः ॥' इति भरतः ॥ उपकरणमुपढौकनम् ॥ **कलहंसः** ।

---

१ इत्यु. २ मालती नाम. ३ तन्त्रयितव्यः. ४ गरीयान्. ५ मिश्रवि०. ६ चित्रोपकरणः, गृहीतचित्रफलकः, चित्रफलकहस्तः.

यावदस्मिन्नुद्याने मुहूर्तं विश्रम्य मकरन्दनन्दनं नाथमाधवं प्रेक्षिष्ये ।
( कहिं दाणिं तुलिदमअरद्धवलेअरूवविब्भमावक्खित्तमालदीहिअअमाहप्पं णाहमाहवं पेक्खिस्सं । परिस्सन्तो ह्मि । जाव इमस्सिं उज्जाणे मुहुत्तं विस्समिअ मअरन्दणन्दणं णाहमाहवं पेक्खिस्सं । ) ( इति प्रविश्योपविशति । )-

( ततः प्रविशति मकरन्दः । )

**मकरन्दः**—कथितमवलोकितया मदनोद्यानं गतो माधव इति । भवतु । तत्रैव गच्छामि । ( परिक्रम्यावलोक्य च । ) दिष्ट्यायं वयस्य इत एवाभिवर्तते । ( निरूप्य । ) अस्य तु

**गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं**
**श्वसितमधिकं किं न्वैतत्स्यात्किमन्यदितोऽथ वा ।**
**भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं**
**ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ १७ ॥**

---

अत्र तुलितो मकरध्वजस्य कामस्यावलेपो गर्वो येन रूपविभ्रमेण सौन्दर्यविलासेन तेनावक्षिप्तं तिरस्कृतं मालतीहृदयस्य माहात्म्यं गाम्भीर्यं येन तम् । 'अवलेपः स्मृतो गर्वः' इति शाश्वतः । मकरन्दस्य नन्दनं हर्षकम् । कलहंसो राजहंसः । स च शरदि विराजमानोऽपि योगिनीप्रभावाद्वसन्ते मिलित इति नामाभिप्रायः ॥ **मकरन्दः** । दिष्ट्येत्यव्ययं हर्षे । माधवस्य वसन्तस्य मकरन्दः पुष्परसः सहचरो युज्यत एव । इत एवात्रैव । इह शृङ्गारो द्विविधः । यदाह भरतः 'सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः' । सम्भोगोऽपि विप्रलम्भपूर्वक एव स्वदते यदाह—'न विना विप्रलम्भेन सम्भोगः पुष्टिमर्हति । कषायिते हि वस्त्रादौ भूयान्रागोऽभिजायते ॥ स च दशारम्भः । यदाह भरतः—'अप्राप्तरतिभोगस्य नवस्त्रीरागजन्मनः । दश स्थानानि कामस्य काममन्तर्विसर्पतः ॥ अभिलाषोऽत्र प्रथमे द्वितीये चिन्तनं तथा । अनुस्मृतिस्तृतीये च चतुर्थे गुणकीर्तनम् ॥ उद्वेगः पञ्चमे ज्ञेयो विलापः षष्ठ उच्यते । उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाष्टमे । नवमे जडता प्रोक्ता दशमे मरणं भवेत् ॥ इति । तदिहानुस्मृत्यवस्थो माधवो मकरन्देन कथ्यते—**गमनमिति** । अस्य गमनमलसं मन्दं न तु शरीरम् । हस्तादेराकुञ्चनप्रसारणात् । अन्तरान्तरा विलम्बस्यात्यन्तासक्तिवशाज्जायमानत्वाच्च । इदमनुस्मृतिचिह्नम् । यदाह—' मुहुर्मुहुर्निःश्वसितैरधोमुखविचिन्तनैः । प्रद्वेषादन्यकार्याणां कथितानुस्मृतिर्यथा ॥' तथा यतो मामपि न पश्यति ततोऽन्तःकरणं क्वापि लग्नम् । तथा च चिन्तासन्ततिपरतया ध्यानावधानेन शून्या बाह्यार्थाग्राहिणी दृष्टिरस्य । यदाह—' शून्या दृष्टिः स्मृता चिन्तासंमोहप्रणया-

---

१ ० रद्धरूआवलेअवि. २ इह. ३ सहअरं (सहचरं). ४ णाहं. ५ किंत्वे. ६ न्यदतो. ७ नैने-

( ततः प्रविशति यथानिर्दिष्टो माधवः । )[1]

**माधवः**—( स्वगतम् )

**तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य**
**चेतः कथं कथमपि व्यपवर्तते मे ।**
**लज्जां विजित्य विनयं विनिवार्य धैर्य-**
**मुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ १८ ॥**

---

दिषु ' शून्यदृष्टिलक्षणमप्याह—' निश्चला समतारा च ध्यानाद्ग्राह्यमगृह्णती । तथा सम-पुटोपेता शून्या दृष्टिरुदाहृता ॥ ' तथा मनस्तापवतो ग्लानिः । सा च क्षीणकपोलता-दिनोन्नीयते । अत उक्तं शरीरमसौष्ठवं विकलम् । इष्टजनालाभभावनार्थमाह—श्वसितम-धिकम् । एतत्किं नु स्यात् । एतदलसगमनत्वादिकं रोगजं कामकृतं वेति वितर्क इत्यर्थः । रोगलिङ्गाभावादनङ्गलिङ्गसङ्गाच्च निश्चयमाह—किमन्यदिति । अथवा पक्षा-न्तरे । इतः कामात्किमन्यत् । नान्यदित्यर्थः । किंशब्दो निषेधे । अत्र पांशुक्रीडनात्प्र-भृत्यनुभूतमाधवशरीरे तत्तद्विकारदर्शनात्तर्कविद्याविदो मकरन्दस्य परिच्छेदो युज्यत एवेति । निश्चयलिङ्गमाह—भुवने कंदर्पाज्ञा भ्रमति सर्वं जनमास्कन्दति । विकर्तुं शीलमस्येति विकारि । पूर्वदशात्यागेन दशान्तरयोगो विकारस्तद्योगि यौवनम् । अयं तु युवेत्यर्थः । अत्र भ्रमतिपदेनानवच्छिन्नक्रियता तद्द्वारा सर्वकालता भुवनपदेन सर्वदे-शता आज्ञापदेन युक्तिजिज्ञासां विना स्वीकारः विकारिपदेन माधवाङ्गीकारिता च ध्वनिता । ललिताः सुन्दरा मधुराः परिभाव्यमानास्ते ते प्रसिद्धा भावा रमणीवदन-विभ्रमादया धीरतां धैर्यं क्षिपन्त्यपनयन्ति । तदनेन कामकृतमेतदुन्नीयत इति भावः । प्रकृतिमधुराः ' इत्यपि पाठः । तत्र प्रकृत्या स्वभावत एव मधुरा मनोहराः ॥ १७ ॥ माधवप्रवेश इह द्विपदिकया । यदाह—' शोकविभ्रमयुक्ते तु व्याधिचिन्तासमाश्रिते । श्रुतवार्तादिवैरूप्ये योज्या द्विपदिका बुधैः ॥' इति । **स्वगतमिति** । ' यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते । ' इति भरतः ॥ अनुस्मृतिमाह—**तामित्यादि** । तां नायिकामचिरमधुनैव विचिन्त्य मम चेतः । कर्तृ । कथं कथमपि महता कष्टेन व्यपव-र्तते व्यावर्तते नागच्छति वा । तस्यां लग्नं तामेव धावतीत्यर्थः । किं कृत्वा । बालत्वेन कुलीनत्वेन च या लज्जा तामकाण्ड एवाप्रस्ताव एव विजित्य । रभसकाल एव हि लज्जाद्यभावप्रस्तात्र इति भावः । विनयं मनोमलक्षालनोपदेशं दूरीकृत्य । महानायकतया साहजिकं धीरत्वमुन्मूल्य । कीदृशम् । मन्थरो मन्दो विवेक इतिकर्तव्यता यत्र तत् । क्रियाविशेषणं वा । कीदृशीम् । इन्दोश्चन्द्रात्सुन्दरं मुखं यस्यास्ताम् । वैयधिकर-ण्येऽपि गमकत्वात्समासः । इह तामित्यनुस्मृतिः इन्दुसुन्दरेति गुणकीर्तनम् वि-

---

१ निर्दिष्टरूपः; प्रविशति माधवः.

आश्चर्यम् ।

> यद्विस्मयास्तिमितमस्तमितान्यभाव-
> मानन्दमन्दममृतप्लवनादिवाभूत् ।
> तत्संनिधौ तदधुना हृदयं मदीय-
> मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ १९ ॥

**मकरन्दः**—( उपसृत्य ) सखे माधव इत इतः ।

**माधवः**—( परिक्रम्य ) कथं प्रियवयस्यो मम मकरन्दः ।

**मकरन्दः**—सखे माधव ललाटंतपस्तपति तपनस्तदस्मिन्नुद्याने मुहूर्तमुपाविशावः ।

**माधवः**—यदभिरुचितं वयस्याय । ( उभौ परिक्रामतः । )

**कलहंसः**—( दृष्ट्वा ) कथं मकरन्दसहचर इदमेव बालबकुलोद्यानमलंकरोति नाथमाधवः । तद्दर्शयाम्यस्य मदनवेदनाखिद्यमानमालतीलोचनसुखावहमात्मनः प्रतिच्छन्दकम् । अथवा मुहूर्तं विश्रामसौख्यं

---

भाव्येति चक्षुःप्रीतिः कथमपीत्युद्वेगः लज्जां विजित्येत्युन्मादः मन्थरविवेकमिति जडतेत्यनेकावस्थोक्ता ॥ १८ ॥ **यदित्यादि** । तत्संनिधौ यन्मदीयं हृदयं विस्मयेनाद्भुतरसेन स्तिमितं निश्चलम् । एतेन स्तम्भ उक्तः । अत एवास्तमितो नाशं प्रापितोऽन्यो भावो विस्मयातिरिक्तो धर्मो यत्र तत् । अनेन जडतोक्ता । यदाह—' इष्टं वानिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् । तूष्णीकः परवशगः स भवति जडसंज्ञकः पुरुषः ॥ ' आनन्देन निरन्तरसुखेन मन्दं मन्थरं चाभूत् । अमृतप्लवनादिव सुधासेकादिव । अथ च योगाभ्यासेन कुण्डलिन्याचरणेनामृतसेकादिवेत्यर्थः । तत्रापि परमानन्दसंदोहो भवत्येव । एतेनाद्भुतनायिकादर्शनजातभावभरमन्थरता दर्शिता । तद्धृदयमधुना तद्वियोगेऽङ्गारचुम्बितमिवाङ्गारावसृष्टमिव व्यथमानं पीडायुक्तमास्त इत्याश्चर्यम् । न च प्रियासङ्गे सुखं तद्वियोगे दुःखमिति दृष्टचरमेव तत्कथमाश्चर्यमिति वाच्यम् । अननुभूतरसस्य तस्य शिशुत्वेन किमिदं यदकाण्ड एव व्यथेति तत्संभवात् ॥ १९ ॥ **मकरन्दः** । इत इतः । इहागच्छेत्यर्थः । आद्यादित्वात्तसिः । एतेन माधवस्य बाह्यार्थाग्रहान्मित्रादर्शनं सूचितम् ॥ **मकरन्दः** । ललाटं तपति ललाटंतपः । ' असूर्यललाटयोः ' इति खश्प्रत्ययः । खित्त्वान्मुम् । माधवीयमन्मथोन्मादमपहोतुकामस्येदं वचनम् ॥ **माधवः** । वयस्यायेति ' रुच्यर्थानां प्रीयमाणः ' इति संप्रदानता । **कलहंसः** । अत्र मकरन्देन पुष्परसेन सहचरो माधवो वसन्तो बालबकुलमलंकरोतीति ध्वनिरप्युन्मिषति । मुहूर्तं चेत्यत्र सुस्थिते चित्ते वक्तुं युक्तमिति भावः ॥

---

१ सान्द्र. २ आसीत्. ३ घर्मांशुः, इयं च ते शरीरावस्था ( इत्यधिकं क्वचित् ). ४ यथा प्रियवयस्याय रोचते. ५ इत्युभावुपविशतः ।

तावदनुभवतु । ( कधं मअरन्दसहअरो इदं ज्जेव्व बालवउलुज्जाणं अलंकरोदि णाह-माहवो । ता दंसेमि से मअणवेअणाक्खिज्जमाणमालदीलोअणसुहावहं अत्तणो पडिच्छन्दअं । अहवा मुहुत्तं विस्सामसोक्खं दाव अणुहोदु । )

**मक०**—तदस्यैव तावदुच्छ्वसितकुसुमकेसरकषायशीतलामोदवासितोद्यानस्य काञ्चनार[1]पादपस्याधस्तादुपविशावः ।

( उभौ तथा कुरुतः )

**मक०**—वयस्य माधव अद्य[2] किल सकलनगराङ्गनाजनप्रवर्तिमहोत्सवाभिरामकामदेवोद्यान[4]यात्राप्रतिनिवृत्तमन्यादृशं[5] भवन्तमवधारयामि । अपि नाम मनागवतीर्णोऽसि रतिरमणबाणगोचरम्[6] ।

( माधवः सलज्जमधोमुखस्तिष्ठति )

**मक०**—( विहस्य । ) तत्किमवनत[7]मुग्धमुखपुण्डरीकः स्थितोऽसि । पश्य ।

**अन्येषु जन्तुषु रजस्तमसावृतेषु**
**विश्वस्य धातरि समः परमेश्वरे च ।**
**सोऽयं प्रसिद्धविभवः खलु[8] चित्तजन्मा**
**मा लज्जया तव कथंचिदपह्नुतिर्भूत् ॥ १० ॥**

---

**मकरन्दः**। उत्फुल्लपुष्पाणां ये केसराः किञ्जल्कास्तैः कषायो लोहितः शीतलश्च य आमोदस्तेन वासितं सुगन्धीकृतमुद्यानं येन तस्य । 'कषायः सुरभौ लोहितेऽन्यवत् ।' इति मेदिनीकरः । कषायादिसम्बन्धेन सौरभस्यातिगभीरतोक्ता । आमुद्यतेऽनेनेत्यामोद इति । कषायादिसम्पदे काञ्चनारेत्युक्तम् ॥ प्रवर्तितः कृतः । अभिरामेति यात्रान्वयि । इह मकरन्दवचनेन नर्मरूपः प्रतिमुखसन्धिरुक्तः । यदाह 'शृङ्गारार्थं त्रपाकारि वाक्यं गोष्ठीषु नर्म तत् ।' इति । अपिः समुच्चये । नाम सम्भावनायाम् । इदं सम्भाव्येतापीत्यर्थः । मनागल्पम् । रतिरमणः कामः । **मकरन्दः**। मुग्धं किंकर्तव्यताशून्यम् । पुण्डरीकं सितपद्मम् । विरहधूसरत्वेन मुखस्य पुण्डरीकसाम्यम् । तस्य लज्जयाऽकथनमाशङ्क्याह—**अन्येष्वित्यादि**। माधव तवापह्नुतिर्लज्जया कथंचिदपि मा भूत् । लज्जयापह्नवं मा कृथाः । एवमप्रतीकारः स्यादिति भावः । खलु यतः सोऽयं चित्तजन्मा कामः प्रख्यातपौरुषः । चित्तोन्माथविषय इति भावः । कीदृशः । विश्वस्य धातरि जगत्स्रष्टरि

---

१ एतन्नास्ति क्वचित्. २ काञ्चनपाद०. ३ अद्यैव तावत्. ४ मदनो०. ५ दृशमिव. ६ गोचरताम्. ७ अवनम्र. ८ च यः, बहिः. ९ अपि. १० किल.

**माधवः**—वयस्य किं न कथयामि श्रूयताम् । गतोऽहमवलोकिता-जनितकौतुकः[1] कामदेवायतनम् । तत्र चेतस्ततः परिक्रम्यावलोक्य च परिश्रमादुल्लसितमदिरामोदमधुरपरिमलाकृष्टसकलामिलदलिपटलसंकुला-कुलितमुकुलावलीमनोहराभरणरमणीयस्याङ्गनभुवो बालबकुलस्या[2]लवाल-परिसरे स्थितः । तस्य च यदृच्छया निरन्तरनिपतितानि विकसितानि[3] कुसुमान्यादाय[4] विदग्धरचनामनोहरां स्रजमभिनिर्मातुमारब्धवानस्मि[5] । अनन्तरं च संचारिणीव देवस्य मकरकेतनस्य[6] जगद्विजयवैजयन्तिका निर्गत्य गर्भभवनादुज्ज्वलविदग्धमुग्धनेपथ्यविरचनाविभावितकुमारीभावा[7] महानुभावप्रकृतिरत्युदारपरिजना कापि तत एवागतवती ।

---

हरेऽन्येषु जन्तुषु मानुषादिषु च रजस्तमोगुणप्रधानेषु समस्तुल्यव्यापारः । यद्वा अन्येषु मानुषादिषु रजस्तमसावृतेषु च तिर्यग्योनिषु विश्वस्य धातरि ब्रह्मणि परमेश्वरे हरे च सम इति भिन्नमेव योज्यम् । अतो लज्जां त्यक्त्वा कथयेति भावः ॥ २० ॥ **माधवः** । परिश्रमात्स्थित इत्यन्वयः । परिश्रमात्स्थितोऽहं न तु साकाङ्क्षत्वादिति भावः । मदिरामोदवन्मनोहरो यः परिमलः शुभगन्धः । 'स्याच्छुभगन्धे परिमलः' इति विश्वः । मिलन्मिलितम् । संकुलेन व्याप्ताकुलिता या बकुलमुकुलावली विकासाभिमुखकलिकाराजिः सैव मनोहरमाभरणं तेन रमणीयस्य । यद्वा मदिरामोदेन मधुर इति समासः । तेन मदिरामोदस्य बकुलपुष्पोद्गमं प्रति दोहदत्वमाह । अङ्गनभुवोऽङ्गनस्थस्य । अनेन निकटवर्तिनः सेकादिना मनोज्ञता दर्शिता । इहाङ्गनपदेऽनुविधायकाभावाण्णत्वश्रुतिरयुक्ता पृषोदरादित्वाण्णत्वमित्यपि वचोऽमूलकमेव । प्रत्युत ' अङ्गनं प्राङ्गणे जाले कामिन्यामङ्गना मता । ' इति विश्वादिकोषात्तवर्गपञ्चमोपात्तमङ्गनं केवलमिति शब्दप्रकाशाच्च नान्त्यत्वमेवेत्यवधेयम् । आलवालं खल इति ख्यातम् 'स्यादालवालमावालमम्भसां यत्र धारणम्' । इत्यमरः । **विदग्धेति** । मालानिर्माणं कामशास्त्रवैदग्ध्यद्योतनाय । उक्तं च मालाग्रथनविकल्पा इत्यादिनेति भावः । अतिसुकुमारतया कामिनोर्मनोहरतया सुगन्धितया सुन्दरतया चान्यपुष्पाणि त्यक्त्वा बकुलपुष्पैर्मालाग्रथनमिह । अत एव दमयन्तीस्वयंवरादावपि बकुलमालासममधूकमालापरिग्रहः । संचारिणी गमनशीला मकरकेतोः कामस्य वैजयन्तिका पताका । गर्भभवनान्मध्यावासादुज्ज्वलया निर्मलयाग्राम्यया च शिशुप्रसाधनविरचनयोन्नीतः कुमारीभावः कुमारीत्वं यस्याः । कुमारीत्वेनावगुण्ठनपटाद्यभावात्तदुन्नयनमिति भावः । महानुभावप्रकृतिरतिप्रभावस्वभावा । अत्युदारो महान्दक्षिणो वा । 'उदारो महति दक्षिणे'

---

[1] कौतूहलः. [2] बकुलमु०. [3] निरन्तरविक०, विकसितनिर०. [4] आदायादाय कुसु०. [5] विदग्धविरचनया स्रजं. [6] मकरकेतोः. [7] मुग्धबाल.

सा रामणीयकनिधेरधिदेवता वा
सौन्दर्यसारसमुदायनिकेतनं वा ।
तस्याः सखे नियतमिन्दुसुधामृणाल-
ज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ २१ ॥

अथ सा प्रणयिनीभिरनुचरीभिरविरलकुसुमसंचयावचयलीलादोहदिनीभिरभ्यर्थ्यमाना तमेव बकुलपादपोद्देशमागतवती । तस्याश्च कस्मिन्नपि महाभागधेयजन्मनि बहुदिवसोपचीयमानमिव मन्मथव्यथाविकारमुपलक्षितवानस्मि । यतोस्याः

---

इति शाश्वतः । परिजनदाक्षिण्यं सान्निध्यानयनेन ज्ञेयम् । तत एव तत्रैव ॥ तद्गुणकीर्तनमाह—**सेत्यादि** सा स्त्री रामणीयकस्य मनोहरताया निधेराधारस्याधिदेवताधिष्ठात्री देवता । यद्वा रामणीयकमेव निधिस्तस्याधिष्ठात्री रक्षिका देवता । सौन्दर्यसारसमुदायस्य कान्तिनिर्यासपूरस्य निकेतनं गृहं वा । निकेतनस्याजहल्लिङ्गतया सामानाधिकरण्यम् । मनोहरत्वं कान्तिमत्त्वं च तत्रैव दृष्टमिति भावः । वा समुच्चये । यद्वा वा विकल्पे । तत्र निर्णेतुं न शक्यत इति विकल्पार्थः । यद्वा वेवार्थे । रामणीयकनिधेर्देवतेवेत्यर्थः । 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये ।' इति विश्वः । यद्वा रामणीयकं रूपादिसम्पत्तिस्तन्निधेरधिदेवता । अनेन शोभोक्ता । यदाह–'रूपयौवनलावण्यैरुपभोगोपबृंहितैः । अलङ्करणमङ्गानां शोभेति परिकीर्तिता ॥' सौन्दर्येत्यादिना कान्तिरुक्ता । यदाह—'शोभैव कुसुमास्त्रेण पूरिता कान्तिरुच्यते ।' अतोऽनयोर्भेदः । अत्यन्तविलक्षणां तामालोक्योत्प्रेक्षते । नियतं नूनं तस्याः कारणं समवायिकारणमिन्दुसुधामृणालज्योत्स्नादिकमभूत् । चन्द्रो मुखस्य सुधाधरस्य मृणालं भुजयोः ज्योत्स्ना लावण्यादीनामिति भावः । आदिपदेन पद्मे पादयोः किसलयौ चरणयोरिति ग्राह्यम् । सर्वोपमाद्रव्यघटितेयमिति भावः । एवं मदन एवास्या वेधाः स्रष्टाभूत् । चकारोऽवधारणे । वेदजडस्य पुराणस्य ब्रह्मणो नात्र निर्माणकौशलमिति भावः । अत्र कामस्य स्रष्टृत्वेनाश्रुतत्वात्कथमिति न देश्यम् । अस्या मोहनीत्वेन मोहनपटुकामजन्यत्वोत्प्रेक्षणात् । अदृष्टचरत्वस्योत्प्रेक्षायामनुकूलत्वात् । असदारोपणस्योत्प्रेक्षात्वात् । नियतपदमुत्प्रेक्षाव्यञ्जकम् । 'नूनमित्येवमादिभिः' इति वचनात् ॥ २१ ॥ प्रणयिनी स्निग्धा । अनुचरी दासी । सञ्चयः समूहः । अवचयस्त्रोटनम् । दोहदोऽभिलाषः । सहर्षमाह—**तमेवेति** । स्वोद्देशमाह—**कस्मिन्नपीति** । 'भागधेयं भाग्यम्' इत्यमरः । इहानुमानरूपो गर्भसन्धिः कस्मिंश्चिदित्यनेनोक्तः । यदाह—'व्याप्येन व्यापकज्ञानमनुमानमुदीरितम्' । इति ॥ विकारचिह्नमाह—

---

१ कला. २ अनवरत. ३ कुतूहलिनीभिः, अभिलाषिणीभिः. ४ बालबकुल. ५ कस्मिंश्चिदपि. ६ उपलब्धवा.

**परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः**
**कथमपि परिवारप्रार्थनाभिः क्रियासु ।**
**कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-**
**मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥ २२ ॥**

सा पुनर्मम प्रथमदर्शनात्[2]प्रभृत्यमृतवर्तिरिव चक्षुषो[3]र्निरतिशयमा[4]नन्द-मुत्पादयन्त्ययस्कान्तमणिशलाकेव लोहधातुमन्तःकरणमाकृष्टवती[5] सर्वथा । किं बहुना ।

**सन्तापसन्ततिमहाव्यसनाय तस्या-**
**मासक्तमेतदनपेक्षितहेतु चेतः ।**
**प्रायः शुभं च विदधात्यशुभं च जन्तोः**
**सर्वंकषा भगवती भवितव्यतैव ॥ २३ ॥**

---

**परिमृदितेति** । यथास्या अङ्गं परिमृदिता मर्दनविषयीकृता या मृणाली बिसलता तद्वन्म्लानम् । क्रियासु ताम्बूलभक्षणादिषु परिजनयाचनाभिरस्याः कथमपि प्रवृत्तिः । इह मृणालीपदेन तनुता म्लान्या निद्राच्छेदः कथमपीत्यादिना विषयनिवृत्तिः कथिता । तनुत्वम्लानत्वमान्द्यैर्ग्लानिरुक्ता । यदाह—ग्लानौ तनुत्ववैवर्ण्यमन्दतादिनिदर्शनम् ।' ननु तनुत्वादिना व्यभिचारिणा कथं कामविकारोन्नयनमत आह—कलयतीति । तस्याः कपोले हिमांशोः शोभां कलयति । अनेन पाण्डुता दर्शिता । कीदृशः । नूतनदान्ति-दन्तखण्डगौरः । छिद्यत इति च्छेदः खण्डः । इहाभिनवपदेन सपुलकत्वं ध्वनितम् । तथा च कपोलपाण्डुत्वसपुलकत्वादिना कामविकारव्याप्तेन तदुन्नयनमिति भावः । विरहे पाण्डुतापि । यदाह—'अङ्गस्यासौष्ठवं तापः पाण्डुता कृशता रतिः ।' ॥२२॥ वर्तिर्ने-त्राञ्जनलेखा । अयस्कान्तो लोहाकर्षको मणिः । लोहधातुर्लोहरूपं द्रव्यम् । अन्तःकरणं मनः । ममान्तःकरणं कृष्टवतीत्यर्थः । किं बहुनेत्यनेन सखेदनिःश्वाससूचनम् । **सन्ता-पेत्यादि** । ममैतच्चेतस्तस्यां विषय आसक्तं समन्ताल्लग्नमस्तीत्यर्थः । सन्तापपरंपरैव महाव्यसनं तदर्थम् । तादर्थ्ये चतुर्थी । सन्ततिपदेन मालतीलाभमन्तरेण यावज्जीवम-विच्छेदस्तदलाभे प्राणहानिश्चोक्ता । कीदृशम् । अनपेक्षितनिमित्तम् । एतेन विषया-लाभेऽप्यस्य स्वाभाविकी प्रीतिरुक्ता । यदाह—' अभ्यासादभिमानाच्च तथा संप्रत्यया-दपि । विषयेभ्यश्च तत्त्वज्ञा विदुः प्रीतिं चतुर्विधाम् ॥' अनेन निजमुच्छृङ्खलत्वमपि निरस्तम् । अत एवाह—प्राय इति । बाहुल्येन भगवती भवितव्यतावश्यंभावि प्राक्तन-कर्म जीवानां शुभमशुभं च विदधाति । अत एव सर्वंकषा सर्वहरा । तथा च ममा-वश्यकं दुःखं त्वं तु यथोचितं कुर्या इति भावः । आसक्तेत्याङ्पूर्वात् षञ्ज् समवाये क्तः ।

---

१ कान्तः. २ दर्शनक्षणात्. ३ नयनयोः. ४ शयानन्दं, निरन्तरमा०. ५ उपसंहृतवती.

**मकरन्दः**—वयस्य माधव स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् । पश्य ।

> व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
> र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
> विकसति हि पतङ्गस्योदये पुण्डरीकं
> द्रवति च हिमरश्मावुद्गते[1] चन्द्रकान्तः ॥ २४ ॥

ततस्ततः[2] ।

**माधवः**—ततश्च तत्र

> सभ्रूविलासमथ सोऽयमितीरयित्वा
> सप्रत्यभिज्ञमिव मामवलोक्य तस्याः ।
> अन्यो[3]न्यभावचतुरेण सखीजनेन
> मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः ॥ २५ ॥

---

सर्वंकषेति खच्प्रत्यये खित्वान्मुम् ॥ २३ ॥ **मकरन्दः** । माधवोक्तप्रीतेरनिमित्तकत्वमुपपादयति—**स्नेह इति** । निमित्तमिह द्वयं बाह्यमाभ्यन्तरं च । तदिह बाह्यहेत्वपेक्षः स्नेहोऽस्थिर एव । निमित्तानिवृत्तौ तन्निवृत्तेरावश्यकत्वात् । अत आन्तरनिमित्तापेक्षैव स्नेहस्येति भावः । विप्रतिषिद्धं विरुद्धम् । बाह्यनिमित्तापेक्षया विरोध इति भावः । स्वोक्ते युक्तिमाह—**व्यतिषजतीत्यादि** । आन्तरो हेतुः कोऽप्यनिर्वचनीयः पदार्थान्नरनारीप्रभृतीन्व्यतिषजति विशेषतो मेलयति । यतः प्रीतयो बहिरुपाधीन्बाह्यहेतून्सौन्दर्यादीन्न संश्रयन्ते प्रकर्षेणावलम्बन्ते । अत्र कोऽपीत्यनेन जन्मान्तरानुभवजनितसंस्कारताध्वनिः । न खल्वित्यनेन दृष्टश्रुतानुमितसकलैहिकोपाधिनिषेधात्तथावसायः । अत एव विशेषप्रकर्षद्योतकाभ्यामुपसर्गाभ्यामासङ्गस्य जीवितावधित्वमुक्तम् । उक्तं द्रढयति—यतः पतङ्गस्य सूर्यस्योदये पुण्डरीकं विकसति । चन्द्र उद्गत उदिते सति चन्द्रकान्तो द्रवति क्षरति च । तथा च तीक्ष्णकरोदये कोमलकमलदलविकासादमृतकरोदये पाषाणदारणाच्च सहजसिद्ध एव हेतुः । इह किं बाह्यं कारणं दृश्यते । तद्वत्प्रकृतेऽपि स्वाभाविक एव स्नेह इति भावः । पुण्डरीकपदमिह पद्ममात्रपरम् । अर्थान्तरन्यासोऽयम् ॥ २४ ॥ ततस्तत इति कथोपक्रमरीतिः ॥ **माधवः** । तत्र स्थाने । **सभ्रूविलासमित्यादि** । अथ तस्याः सखीजनेन तदा सोऽयमित्युक्त्वा सप्रत्यभिज्ञमिव पूर्वदृष्टमिव मामवलोक्य सभ्रूविलासं सभ्रूभङ्गं यथा तथा कटाक्षाः क्षिप्ताः । एतेन कटाक्षाणां पूर्वदृष्टप्रत्यभिज्ञाकारार्पणत्वमुक्तम् । कीदृशेन । अन्योन्याशयविज्ञेन । अनेन नायिकाव्युत्पत्त्यतिशय उक्तः । कीदृशाः स्मितमीषद्धसितमेवामृतं तेन मनोज्ञाः । 'ईषत्प्रफुल्लितैर्गण्डैः

---

१ वुद्यते. २ इतीव नाम. ३ न्यमेव.

**मकरन्दः**—( स्वगतम् ) कथं प्रत्यभिज्ञापि नाम ।

**माधवः**—अथ ताः सलीलमुत्तालकरकमलतालिकातरलवलयाव-लीकमुत्रस्तमत्तकलहंसविभ्रमाभिरामचरणसंचरणझणझणा[१]यमानमञ्जुमञ्जीर-रसितानुविद्धमेखलाकलापकलकिङ्किणीरणत्कारमुखरं परि[२]वृत्य 'भर्तृदारिके दिष्ट्या [३]वर्धामहे । यदत्रैव कोऽपि [४]कस्यापि तिष्ठति' इति मामङ्गुली-दलविलासेनाख्यातवत्यः ।

**मकरन्दः**—( स्वगतम् )। हन्त म[६]हतः प्रा[७]गनुरागस्योद्भेदः ।

---

कटाक्षैः सौष्ठवान्वितैः । अदृष्टदन्तकुसुमैरुत्तमानां स्मितं मतम् ॥' इति भरतः । स्वस्या-दृष्टचरत्वेन संभावनायामिहेवशब्दः । अवलोक्येति । ललिता दृष्टिरियम् । यदाह—'मधु-राकुञ्चितारा च सभ्रूक्षेपा च सस्मिता । समन्मथविकारा च दृष्टिः सा ललिता मता ॥' इह तु हर्षादियमुचिता यदाह—'धृतौ हर्षे च ललिता' । भ्रूविलासेत्यनेन मोट्टायित-मपि कटाक्षितम् ॥ २५ ॥ **मकरन्दः** । प्रत्यभिज्ञैकस्य तत्तेदन्तावैशिष्टयम् । अस्या एवाकारः सोऽयमिति । नाम संभावनायाम् । अदृष्टचरत्वेन माधवप्रत्यभिज्ञाया असम्भ-वादिति भावः । तामेव स्फोटयति—**अथेति** । अनन्तरं ताः सख्यो हे भर्तृदारिके स्वामिपुत्रि हर्षेण वयं वर्धामहे यतोऽत्रैव स्थाने कस्यापि कोऽपि तिष्ठतीत्युक्त्वा माम-ङ्गुलीखण्डलीलया कथितवत्यः । किं कृत्वा । सलीलं सविलासचेष्टितं यथा तथा प्रति-निवृत्य । 'स्त्रीणां विलासचेष्टितं लीला' इति भरतः । उत्तालमुद्भटम् । विभ्रमो विलासो विशिष्टभ्रमणं वा । मञ्जुर्मनोज्ञः । मञ्जीरो नूपुरः । रसितानुविद्धः शब्दानुगतः । मेख-लायाः कलापो गुच्छः । यद्वा मेखला च कलापश्च तयोः किङ्किणी क्षुद्रघण्टिका ॥ 'मेखला च कलापश्च भवेच्छ्रोणिविभूषणम् । एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ॥ रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥' इति भरतः । इदं सर्वं निवर्तनक्रियावि-शेषणम् । गतिरियं विकला । यदाह—'आवेगे चैव हर्षे च कार्ये च त्वरयान्विते । एतेषु च गतिं प्राज्ञो विकलां संप्रयोजयेत् ॥' इति । 'राजा भट्टारको देवस्तत्सुता भर्तृदारिका' । राजपदमीश्वरमात्रपरम् । तेनामात्यकन्यापि भर्तृदारिकेत्युच्यत इत्यव-धेयम् । कोऽपि कस्यापीत्यनेनानुद्भटोद्भावनेन तासां चातुर्यमुक्तम् । अत एव कस्या-पीति सामान्यनिर्देशात्क्लीबत्वम् । अन्यथा स्त्रीलिङ्गनिर्देशः स्यात् । कोऽपीति पुंलि-ङ्गनिर्देशस्तु स्पष्टार्थः । अन्यथा किमपीति निर्देशे पुष्पादिप्रतिपत्त्या संशयः स्यादिति भावः । अङ्गुलीदलपदेन सविलासाख्यानमुक्तं सङ्गसमाख्यानं वा ध्वनितम् । इद-माख्यानं नर्मवाक्यम् । यदाह—'सहास्यवचनप्रायं नर्मेच्छन्ति मनीषिणः' ॥

---

१ रणरणायमान. २ प्रतिनिवृत्य. ३ वर्धसे. ४ कस्या अपि वल्लभः. ५ दर्शितवत्यः. ६ महतः खलु. ७ प्रथमानु०. प्रियानु०.

**कलहंसः**—( आकर्ण्य ) कथं सरसरमणीयानुबन्धिनी स्त्रीजनकथा ।
( कधं सरसरमणिज्जाणुबन्धिणी इत्थीअणकहा । )

**मकरन्दः**—ततस्ततः ।

**माधवः**—

अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य-
माचार्यकं विजयि मान्मथमाविरासीत् ॥ २६ ॥

ततश्च ।

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किंचिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ २७ ॥

---

**मकरन्दः** । हन्त हर्षे । उद्भेदः प्रकाशः ॥ **कलहंसः** । अनुबन्धिनी प्रतीयमाना ॥ **अत्रान्तर इत्यादि** । सखीनां दर्शनावसर एव पद्माक्ष्याः संबन्धि तन्मान्मथं कामजमाचार्यकमुपदेशकर्माविरासीत्प्रकटीभूतम् । कीदृशम् । किमप्यनिर्वचनीयमत एव वाग्विभवाद्वचनप्रपञ्चादतिवृत्तमतिशयितं वैचित्र्यं यस्य तत् । उल्लसित उत्थितो विभ्रमो भावभेदो यत्र तत् । 'यच्चित्तवृत्तेरनवस्थितत्वं शृङ्गारजो विभ्रम उच्यतेऽसौ । भेदात्रयस्तस्य महानुबन्धकार्कश्यसंज्ञाः कथिता विदग्धैः ॥' इति भरतः । भूरि प्रचुरः सात्त्विकविकारो यत्र तत् । सत्त्वं मानसं किमपि तेन निर्वृत्तः सात्त्विको भावः । यदाह—'सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका निगदिताः कविभिः पुराणैः ।' तेच—'स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः॥' इति । अपास्तं क्षिप्तं धीरत्वं येन तत् । महाभिजनत्वाद्यनपेक्षत्वादिति भावः । विजयि सर्वत्राप्रतिहतम् । कुमार्या अपि शिशुत्वाद्विजय इति भावः । उत्पलाक्ष्या इत्यनेन बहुविधे नेत्रविकारे प्रीतिगो हाव इहोक्तः । यदाह—'भ्रूनेत्रादिविकाराद्यः शृङ्गाराकारसूचकः। स्थायिभावः स्थितो हाव ईर्ष्यातः प्रीतिगोऽपि च ॥' इह श्लोके विलास उक्तः । यदाह—' दयितावलोकनादौ विशेषोऽङ्गक्रियासु यः । शृङ्गारचेष्टासहितो विलासः समुदीरितः ॥ २६ ॥ सम्प्रति 'हेला हावत्समुत्थिता' इति भरतानुसारेण हावानन्तरं हेलामाह—**स्तिमितेत्यादि** । 'नारीणां प्रियसम्भोगलज्जासाध्वसकौतुकैः । स्वभावाविष्कृतो वेगो हेलेति परिकीर्तितः ॥' इति भरतः । श्लोकार्थस्तु तस्या आलोकितानां सहसा दर्शनानां पात्रं योग्योऽहमभूवं वृत्तोऽस्मि । 'सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते । ' इति भरतः । कीदृशानाम् । मदीयरूपनिरूपणाश्चर्येण । स्तिमितानि निश्चलानि हर्षेण विकसितानि प्रफुल्लानि च तेषाम् । दृष्टिरियमद्भुता ।

---

१ एदाणं ( अनयोः ). २ वातिवृत्ति—वर्ती. ३ आयताक्ष्याः. ४ मनसि. ५ प्रीति.

तैश्च[1] ।

अलसवलित[2]मुग्धस्निग्धनिष्पन्द[3]मन्दै-
रधिकविकसदन्तर्विस्मयस्मेरतारैः ।
हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षै-
रपहृतमप[4]विद्धं पीतमुन्मूलितं च ॥ १८ ॥

---

यदाह—'समाकुञ्चितपक्ष्माग्रा विस्मयोद्धततारका । सौम्या विकसितान्ता च दृष्टिः स्यादद्भुताभिधा ॥' यद्वा स्तिमितं मन्दं यथा तथा विकसितानां प्रकाशितानां प्रथमं नायकदर्शनेन शनैः शनैः प्रसारणमिति भावः । अनेनोत्तरोत्तरदर्शनाभिलाषः सूचितः । उल्लसन्ती चपला भ्रूर्लतेव येषु तेषां । दीर्घत्वेन भ्रूलतयो रूपकम् । अनेन कान्तादृष्टिरुक्ता । यदाह—'हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा । सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥' मसृणानि चिक्कणानि लज्जया मुकुलितानि च तेषाम् । दृष्टिरियं मुकुलिता—'मुग्धा निमीलितान्ता च मुकुला दृष्टिरिष्यते ।' इति भरतः । यद्वा सुखभावनया मसृणं मन्दं यथा भवति तथा मुकुलितानाम् । एतेन दर्शनजनितानन्दसंपत्पर्यवसानं सूचितम् । पुनः पुनर्दर्शनकाङ्क्षया तिर्यगायतत्वेन प्रान्ते निकटे च विस्तारवताम् । शङ्किता दृष्टिरियम् । यदाह—'किंचिच्चलत्स्थिरा किंचिन्नमिता तिर्यगायता । गूढा चकिततारा च शङ्किता दृष्टिरुच्यते ॥' अनेन कटाक्षपर्यवसानमुक्तम् । प्रतीपदिगायतमन्नेत्रपाते सति लज्जया दर्शनोत्सुकतया च किंचिदाकुञ्चितानां मुद्रितानाम् । आकुञ्चितेयं दृष्टिः । यदाह—'अनाकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा । सन्निकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥' न च 'कुञ्चिता सूचिता नष्टदुष्प्रेक्षाक्षिव्यथासु या'। इति भरते नियमादिह कुञ्चितदृष्टिकथनमयुक्तमिति वाच्यम् । लज्जया माधवे दुष्प्रेक्षत्वसंभवात् । पात्रं कीदृशम् । विविधं नानाप्रकारम् । स्तिमितदृष्टिप्रयोगेऽपि मयापि तथैव दृष्टिप्रयोगः कृत इत्यर्थः । 'योग्यभाजनयोः पात्रम्' इत्यमरः । अभूवमिति भुवो लुङि सिचि रूपम् ॥ २७ ॥ **अलसेत्यादि** । पक्ष्मलाक्ष्याः प्रशस्तपक्ष्मयुक्तायास्तैरवलोकितैः कटाक्षतामापन्नैर्मम हृदयमपहृतं स्ववशीकृतम् । इह रक्षकबाहुल्येन गमनत्वरया शङ्कया वावलोकितानामेव कटाक्षत्वमुक्तम् । कटाक्षास्तिर्यग्विलोकनात्मकः । कर्णाभ्यर्णसंचारितारकः सर्वानङ्गरङ्गजनक इति भावः । तथा निश्चलत्वेनापविद्धं मथितम् । मथ्यमानतया द्रवरूपत्वेन पीतम् । अत एवोन्मूलितम् । तदा किमपि मया न ज्ञातमित्यर्थः । अत एवाशरणं रक्षकशून्यं जातम् । ततो

---

१ ततः. २ चलित. ३ निष्यन्द. ४ अपि. ५ अस्यानन्तरमिदं पद्यं पुस्तकान्तरे—

तद्वक्त्रं नयने च ते स्मितसुधासिक्तं च तद्वाचिकं
सा वेणी स भुजक्रमोतिसरलो लीलालसा सा गतिः ।
तन्वी सेति च सेति सेति सततं तद्ध्यानबद्धात्मनो
नो निन्दा न रतिर्न चापि विरतिः शून्यं मनो वर्तते ॥

एवमहं तु तस्याः सर्वाकारहृदयङ्गमायाः संभाव्यमानस्नेहरसेनाभिसंधिनो विधेयीकृतोऽपि पारिप्लवत्वमात्मनोऽपनिह्नोतुकामः प्राक्प्रस्तुतस्य बकुलदाम्नो यथाकथञ्चिदवशेषं ग्रथितवानेव । ततो मिलितवेत्रशास्त्र-

---

यथार्हं कुर्विति भावः । कीदृशैः । लज्जयालसैर्मन्दैः कौतुकेन वलितैश्चलितैः । अथ मुकुलनेन मुग्धै रम्यैः । प्रीत्या स्निग्धैः । रूपदर्शनाद्भुतचिन्ताभ्यां निष्पन्दैरनिमेषैः पुनः कोऽयं द्रष्टव्य इति विषादान्मन्दैरित्यर्थः । इयं विषादिनी दृष्टिः । यदाह— 'विषादविस्तीर्णपुटा पर्यस्तान्तानिमेषिणी । किञ्चिन्निष्टब्धतारा च नार्या दृष्टिर्विषादिनी॥' यद्वा अलसं मन्दं यथा तथा वलितैः । इयं निर्विकारा दृष्टिः। यदाह–'ललिता कुञ्चिता या च या च धीरावलोकिनी । निर्विकारा दृगिष्टा सा साध्व्येवाकारगुप्तिषु ॥' तथा प्रथमदर्शनापेक्षयाधुना विशेषदर्शनादधिकं विकसतान्तर्विस्मयेन स्मेरा मुग्धा तरा येषां तैः । इयं दृष्टिः स्निग्धा । यदाह—'किंचित्सहासेव सविस्मयेन सभ्रूसमुत्क्षेपकटाक्षयुक्ता । स्निग्धा निकामं प्रमदैकनिष्ठा शृङ्गारजा दृष्टिरिह प्रदिष्टा ॥ यद्वा कटाक्षैर्मम हृदयमपहृतमित्यनेन प्रीतिरुक्ता । अन्यस्यापि चक्षुष्प्रीतिहेतोर्मनोहरत्वं भवत्येव । अपविद्धामित्यनेन चित्तासङ्ग उक्तः । अपव्यधेरत्यन्तासङ्गवाचित्वादिति भावः । पीतमात्मायत्ततां नीतम् । अनेन संकल्प उक्तः । मानसव्यापारस्यात्मवशत्वादिति भावः । उन्मूलितमित्यनेन विषयनिवृत्तिः सूचिता । अशरणमित्यनेन चित्तापहरणादिनिवारकाभाव उक्तः । नायिकाया निरवद्यरूपता च सूचिता । अलसेत्यनेन निद्रोच्छेदः वलित इत्यनेन त्रपानाशः मुग्धत्वेन मधुरता स्निग्धत्वेन साभिलाषत्वम्, अभिलषणीयस्य स्नेहविषयत्वान्निष्पन्दतया निकोचवैमुख्यं मंदत्वेन सहर्षत्वम् अधिकेत्यादिनान्तर्विकासिनी स्मेरतारा चेत्युक्तम् । एवं चालसवलितैरपहृतम् । योऽपि हि चौरादिः किञ्चिदपहरति स मन्दं मन्दं वलत इति भावः । मुग्धैः सहजरूपदर्शनातिमोहवद्भिः स्निग्धैर्मद्विषयस्नेहसूचकचेष्टावद्भिरपविद्धं क्षिप्तम् । पराभूतमिति यावत् । 'विद्धक्षिप्तेरिताः समाः' इत्यमरः । अनेन चेतसोऽनायत्तिर्दर्शिता । ननु चित्तावक्षेपनिवारकं तदनुध्यानादिकं किमिति न कृतमत आह—निष्पन्दैर्विमुखैर्मदेकविश्रान्तैश्च पीतं तदितरानुसंधानशून्यं कृतम् । तथा च नान्यविषयपरिशीलनकथेति भावः । अधिकेत्यादिनोन्मूलितम् । अनेन मनोनिग्रहाभावो मित्रोपदेशानवसरश्च सूचितः । इह पूर्वश्लोकेन नार्थपौनरुक्त्यम् । आलोकितावस्थाकटाक्षावस्थयोर्भेदात् । नायकस्य रसाक्षिप्तचित्तत्वाद्वा ॥ २८ ॥ **एवमिति**–तथाविधभावदर्शनेन हृदयङ्गमत्वम् । संभाव्यते । अपदेऽपि प्रेम्णोऽनिष्टाशङ्कित्वादिति भावः । अभिसंधिरभिप्रायः । यथाकथञ्चिदिति । चेतसस्तदपहृतत्वादिति भावः । वर्षवराः क्लीबास्तत्प्रायास्तत्प्रधानाः ।

---

१ सांनिधिना. २ विषयीकृतः. ३ अपह्नोतु. ४ बकुलपुष्प ५ कथं कथंचित्.

पाणिर्वर्षवरप्रायपुरुषपरिवारा गजवधूमारुह्य नगरगामिनं मार्गमिन्दुवदनालंकृतवती। तदा च

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः॥ २९॥

ततः प्रभृति

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते॥ ३०॥

अपि च।

---

यद्वा 'विनीताः सर्वसत्त्वाश्च क्लीबाश्चैव स्वभावतः। जात्या न दोषिणश्चैव ते वै वर्षवरा मताः॥' इति परिभाषिता वर्षवराः। हस्तिनीसमारोहणादिना महावंशजत्वेन मालत्या उत्तमस्त्रीत्वं सूचितम्। यद्वा हस्तिनीसमारोहणेनात्युच्चयानतया दूरदर्शित्वं सूचितम्। तत्रापि मन्थरगतिसूचनाय हस्तिनीग्रहणम्। हस्तिजातावपि स्त्रिया मन्थरगतिमत्त्वात्। एतदुभयं चिरं माधवालोकनायेति भावः। **यान्त्येत्यादि**। तया पक्ष्मलाक्ष्या यान्त्या मम हृदये गाढं यथा तथा कटाक्षो निखात इव दत्त इव। तदा तदवलोकनं मम हृदये लग्नमिवेत्यर्थः। निखात इत्यनेन कटाक्षस्य दुःसहत्वमुक्तम्। कीदृश्या। तदाननं वहन्त्या। कीदृशम्। मुहुर्वलिता वक्रिता कन्धरा घाटा यत्र तत्। क्षणं क्षणं व्यावर्तमानम्। पश्यन्त्येत्यर्थः। आवृत्तवृन्तमावर्जितनालं यच्छतपत्रं पद्मं ततो निरतिशया भा दीप्तिर्यस्य तत्। तन्निभं तत्तुल्यमिति वा। वृन्तादारभ्यावर्तनेन पद्मविवर्तनासिद्धिः। कीदृशः। प्रथममानन्दहेतुतयामृतेन दिग्ध उपचितः पश्चाद्दर्शनानन्दविच्छेदाद्विषेण दिग्धः॥२९॥ ततः प्रभृति तस्मादारभ्य। **परिच्छेदेत्यादि**। विकारः कामजो भावोऽन्तर्जडयति मोहयति तापं च कुरुते व्यथयति। यदा तत्प्राप्तिचिन्ता तदा जडतेतरकार्याप्रतिपत्तिः यदा च तद्व्यतिरेकचिन्ता तदा ताप इति कालभेदेन जाड्यतापयोर्न विरोधः। तदुभयजनकवस्तुनोऽभावमाशङ्क्याह–कोऽपि विशिष्यानिर्वचनीयः परिच्छेदमियत्तामतीतोऽतिक्रान्तो निर्वक्तुमशक्यश्च। यः पुनरस्मिञ्जन्मन्यनुभवपथं न गतवानत एव परिच्छेत्तुं निर्वक्तुं चाशक्य इति भावः। साम्प्रतं तदनुभवेन तद्द्वयं किमिति न क्रियत इत्याशङ्क्याह—विवेकप्रध्वंसात्प्रशस्तज्ञानाभावादुपचितमहामोहेन गहनः संकटः। तदानीं विवेकाभाव इति भावः। अनेन जडता

---

१ वेत्रधर व०. २ परिवृता, परिवारा. ३ करेणुका. ४ नगरमार्गम्. ५ करणानां. ६ पदे. ७ संतापयति च. ८ तनुते.

**परिच्छेदव्यक्तिर्न भवति पुरःस्थेपि विषये**
**भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।**
**न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा**
**मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥३१॥**

**कलहंसः**—दृढं खल्वेष कयाप्यपहृतः । अपि नाम मालत्येव सा भवेत् । ( दिढं क्खु एसो कए वि अवहरिदो । अवि णाम मालदी एव्व सा भवे । )

**मकरन्दः**—( स्वगतम् । ) अहो अभिष्वङ्गः । तत्किं निषेधयामि सुहृदम् । अथवा ।

**मा मूमुहत्खलु भवन्तमनन्यजन्मा**
**मा ते मलीमसविकारघना मतिर्भूत् ।**
**इत्यादि नन्विह निरर्थकमेव यस्मा-**
**त्कामश्च जृम्भितगुणो नवयौवनं च ॥ ३२ ॥**

( प्रकाशम् । ) अपि वैयस्येन विदिते तदन्वयनामनी ।

---

दर्शिता ॥ ३० ॥ **परिच्छेदव्यक्तिरित्यादि** सन्निकृष्टेऽपि घटादौ परिच्छेदव्यक्तिर्निर्णयाभिव्यक्तिर्न भवति । घटादिकमपि निर्णेतुं न शक्नोमीत्यर्थः । अनेन बाह्येन्द्रियाणां विषयव्यावृत्तिरुक्ता । अभ्यस्तेऽपि वारंवारमनुभूतेऽपि स्मरणमतथाभावेन खण्डस्फुटिततया विरसं वैरस्यवत् । एतेन मनसोऽपटुत्वमुक्तम् । इयमनुस्मृत्यवस्था । विषयनिवृत्त्या सन्तापः शीतलसेवनादपि नापैतीत्याह—हिमसरसि शीतलसरोवरे चन्द्रमस्यमृतकरकिरणे वा मे न सन्तापहानिः । चन्द्रमःपदं लक्षणया स्वकिरणमाह । इयमुद्वेगावस्था । यदाह—' आसने शयने वापि न तिष्ठति न तुष्यति । औत्सुक्यं च भवेन्नित्यमुद्वेगस्थान एव च ॥ ' निष्ठाशून्यं धैर्यरहितं मनो भ्रमति च स्वल्पत्वात् । किमपि मनोरथमालिखत्यालिङ्गति । अनेनोन्मादावस्थोक्ता ॥ ३१ ॥ **कलहंसः** । अपहृतो वशीकृतः । अपिः संभावनायाम् । नाम प्राकाश्ये ॥ **स्वगतमिति** । ' यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते । ' इति भरतः । अभिष्वङ्ग आसक्तिरूपो मनःपराभवः । ' आक्रोशशापाभिभवेष्वभिष्वङ्गपदं विदुः । ' इति शाश्वतः ॥ **मा मूमुहदिति** । अनन्यजन्मा कामः खल्वत्यर्थं मा मूमुहत् । न चित्तविप्लवसहितमजीजनत् । एवं च ते मतिर्मलीमसविकारेण कामजेन घना निबिडा मा भूदित्यादि निषेधवाक्यमिहानर्थकमेव । ननुपदमनन्वये । यतः कामो जृम्भितो वलयितो गुणो ज्या यस्य सः । जृम्भितगुण उपचितव्यापारो वा कामः । नवयौवनं च जृम्भितगुणम् । प्रकाशितरूपादिकमस्तीत्यर्थः । अतस्तत्पराधीनोऽयं न निषेद्धुं शक्य इत्यर्थः ॥ ३२ ॥ **प्रकाशमिति** ' यत्तु सर्वजनश्राव्यं प्रकाशं तदिहेष्यते ।

---

१ अयथा. २ ०षंगः, महानभि. ३ प्रियसु. ४ यस्मिन्. ५ वयस्य अपि.

**माधवः**—सखे श्रूयताम् । अथ तस्याः करेणुकारोहणसमय एव महेतः सखीकदम्बकादन्यतमा वारयोषिद्विलम्ब्य बालबकुलकुसुमावचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीडव्याजेन मामेवमुक्तवती—'महाभाग सुश्लिष्टगुणतया रमणीय एष वः सुमनसां संनिवेशः । कुतूहलिनी च नो भर्तृदारिकास्मिन्वर्तते । तस्यां अभिनवो विचित्रः कुसुमेषु–व्यापारः तद्भवतु कृतार्थता वैदग्ध्यस्य फलतु निर्माणरमणीयता विधातुः समासादयतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घताम् ' इति ।

**मकरन्दः**—अहो वैदग्ध्यम् ।

इति भरतः । अन्वयो वंशः ॥ **माधवः** । करेणुका हस्तिनी । अन्यतमान्या । स्वार्थे तमप् । यद्वा एकपर्यायोऽयमव्युत्पन्न एवान्यतमशब्दः । वारयोषिद्गणिका । तस्या ईदृक्त्वादुपादानमिह । विलम्ब्यैकाकिनी भूत्वा । नेदीयसी निकटस्था च भूत्वा । उभयत्र पुष्पत्रोटनक्रमेणेति योज्यम् । कुसुमापीडव्याजेन पुष्पदामच्छलेन । अभ्यर्थनाभङ्गभयेन छलेन मामाहेति भावः । अथ च कुसुमेनापीडयति कुसुमापीडः कामः । तद्व्याजेन मां प्रणम्येत्यर्थः । महाभाग महाभाग्य । 'भागो भाग्यार्थयोरपि' इति विश्वः । सुश्लिष्टगुणतया सुलग्नसूत्रत्वेन । संनिवेशो रचनाभेदः । कुतूहलिनी पुष्पदाम्नि कौतुकवती । भर्तृदारिकेत्यनेन कन्यात्वाद्दर्शनौत्सुक्यमुक्तम् । यद्वा भरतेन कन्याया विस्रम्भपात्रत्वस्वीकारादिह कन्यात्वेन तत्सूचनम् । अभिनवो लोकोत्तरो विचित्रो बहुप्रकारः । कुसुमेषु पुष्पेषु व्यापारो रचनाप्रबन्धः । एतेन माल्यग्रथनकुशलाद्भुतकौशलकुतूहलिनी सेत्युक्तम् । वैदग्ध्यस्य ग्रथनचातुर्यस्य । कृतार्थता कृतप्रयोजनता । विदग्धप्रेयसीयं प्रशंसयेति भावः । फलतु सफलोस्तु । विदग्धजनाय दानात् । सरस एवाम्लान एव स्रक्संनिवेशः । महार्घतां बहुमूल्यताम् । पक्षे वो युष्माकं संनिवेशः संयोगः परस्परानुरूपादिना रमणीयः क्रीडार्होऽर्हणीय एव । इह वं इति 'युष्मदो गुरावेकेषाम्' इति गौरवे बहुवचनम् । कुतूहलिनी दूतसमाजे साकाङ्क्षा । अभिनवोऽभूतपूर्वः तदेकासक्तत्वात् । विचित्रः साधुः । विविधविकारकारित्वेनाश्चर्यजनको वा । कुसुमेषोः कामस्य व्यापारो मोहनम् । वैदग्ध्यस्य सकलकलाभिज्ञतायाः सार्थकत्वम् । विदग्धप्रीतिजनकत्वात् । निर्माणरमणीयता घटनसौन्दर्यम् । फलतु अनुरूपजनसंसर्गात् । नो चेदिदं सर्वं व्यर्थमिति भावः । रसः शृङ्गारोऽनुरागो वा । कण्ठावलम्बनमालिङ्गनम् । महार्घता दुर्लभत्वम् । तदिह श्लिष्टपदेन नायकव्युत्पत्तिमभिप्रायं च ज्ञात्वा दूतीव्यापारः प्रसरतीति ध्वनितम् ॥ **मकरन्दः** । वैदग्ध्यं श्लिष्टपदप्रयोगादिति भावः ।

१ धिरो. २ ततः दारिका वर्तते । ३ तस्या माभि· कुसुमेषुव्या. ३ स्त्रीक, कदम्बाम्. ४ माभिहित.

**माधवः**—तया च मदनुयुक्तया समाख्यातम्—इयममात्यभूरिवसोः प्रसूतिर्मालती नामाहं च भर्तृदारिकायाः प्रसादभूमिर्धात्रेयिका लवङ्गिका नामेति ।

**कलहंसः**—( सहर्षम् । ) किं नाम मालतीति । दिष्ट्या विलसितं खलु भगवता देवेन कुसुमायुधेन । जित[2]मस्माभिः । ( किं णाम मालदित्ति । दिट्ठिआ विलसिदं क्खु भअवदा देवेण कुसुमाउहेण । जिदं अह्मोहिं ।)

**मकरन्दः**—( स्वगतम् ) अमात्यभूरिवसोरात्मजेत्यपर्याप्तिर्बहुमानस्य । अपि च मालती मालतीति मोदते भगवती कामन्दकी । तां च । राजानन्दनाय प्रार्थयते[4] इति किंवदन्ती श्रूयते ।

**माधवः**—तया चा[5]हमनुरुध्यमानस्तां बकुलमालामात्मनः कण्ठादवतार्य दत्तवान् । असौ पुनरभिनिविष्टया दृशा मालतीमुखावलोकनविहस्ततया विषमविरचितैकभागां तामेव बहुमन्यमाना महानयं प्रसाद इति गृहीतवती । अनन्तरं च यात्राभङ्गप्रचलितस्य महतः पौर[7]जनस्य संकुलेन विघटितायां तस्यामागतोऽस्मि ।

**मकरन्दः**—वयस्य मालत्या अपि स्नेहदर्शनात्सुश्लिष्टमेतत् । योपि हि कपोलपाण्डुतादिर्चिह्नसूचितः प्राक्प्रवृद्धस्तस्याः कामाभि[10]ष्वङ्गः सोऽपि त्वन्निबन्धन इति व्यक्तमेवैतत् । एतत्तु न ज्ञायते क्व दृष्टपूर्वस्तया वयस्य इति । न खलु तादृश्यो महाभागधेयाः[11] कुमार्योऽन्यत्रासक्तचेतसो भूत्वापरत्र चक्षू[12]रागिण्यो भवन्ति । अपि च ।

---

**माधवः** । अनुयुक्तया पृष्टया । प्रसूतिरपत्यम् । प्रसादभूमिर्विश्वासस्थानं तस्याः । तव च प्रसादभूमिरनुकम्पापात्रं मालादानात् । **कलहंसः** । अत्र विलसितं विजृम्भितम् । अनयोरन्योन्यानुरागादिति भावः । **मकरन्दः** । बहुमानस्य गौरवस्यापर्याप्तिरनवधिकत्वम् । अनभियोज्यत्वरक्षत्वादियोगादिति भावः । **माधवः** । अनुरुध्यमानो मुहुर्याच्यमानः असौ लवङ्गिका । अभिनिविष्टयातियत्ननिवेशितया । विहस्ततया व्याकुलतया । **महानयं प्रसाद इति** । यतो न वस्तुनि प्रेम किंतु गुणेष्विति भावः । **मकरन्दः** । सुश्लिष्टं निश्चितम् । दृष्टपूर्वः पूर्वं दृष्टः । चक्षूरागानुरागयोरेकविषयत्वं भरतमतम् । अन्यदप्यनु- तादृश्यो महाकुलजाः ।

---

१ एकापत्यरतं. २ तज्जित०. ३ च किल. ४ याचते. ५ चानुबध्य०,अभ्यर्थ्य०. ६ प्रतिगृ. ७ पौरनैगम, पौराङ्गना. ८ चिह्नैः. ९ प्रागनुरागः. १० भिषङ्गः. ११ धेयजन्मानः । १२ चानुरागिण्यः.

अन्योन्यसंभिन्नदृशां सखीनां
तस्यास्त्वयि प्रागनुरागचिह्नम् ।
कस्यापि कोऽपीति निवेदितं च
धात्रेयिकायाश्चतुरं वचश्च ॥ ३३ ॥

**कलहंसः**—( उपसृत्य । ) इदं च । (एदं[3] अ । ) ( इति चित्रफलकं दर्शयति । )

( उभौ पश्यतः । )

**मकरन्दः**—कलहंसक केनैतन्माधवस्य प्रतिच्छंदकमभिलिखितम् ।

**कलहंसः**—येनैवास्य हृदयमपहृतम् । ( जेण जेव्व से हिअअं अवहरिदं । )

**मकरन्दः**—अपि मालत्या ।

**कलहंसः**—अथ किम् । ( अह इं । )

**माधवः**—वयस्य मकरन्द प्रसन्नप्रायस्ते वितर्कः ।

**मकरन्दः**—कलहंसक कुतोऽस्याधिगमः ।

**कलहंसः**—मया तावन्मन्दारिकाहस्तात् । तयापि लवङ्गिकासकाशात् । ( मँए दाव मन्दारिआहत्थादो ताए वि लवङ्गिआसआसादो । )

**मकरन्दः**—अथ किमाह मन्दारिका माधवालेख्यप्रयोजनं मालत्याः ।

**कलहंसः**—उत्कण्ठाविनोद इति । ( उक्कण्ठाविणोदो त्ति । )

**मकरन्दः**—वयस्य माधव सर्वथा समाश्वसिहि ।

---

रागचिह्नमाह—**अन्योन्येत्यादि** । त्वयि तस्याः प्रागनुरागचिह्नं व्यक्तमेवास्ति । कथम् । सखीनामन्योन्यसंगतदृशां कस्यपि कोऽपीति निवेदनमेकम् । कथमन्यथा सखीजनस्त्वां वीक्ष्य कटाक्षयति तां कथं वा सखीजनो वदत्येवमिति भावः । अपरं लवङ्गिकाया व्युत्पन्नं वचनम् । कथमन्यथा कुतूहलिनीत्यादि वदतीयमिति भावः । 'संगते दारिते भिन्नः' इति विश्वः ॥ ३३ ॥ **कलहंसः** । अत्र येन जनेनापहृतम् । यन्निबन्धनोऽस्य कामविकार इति भावः ॥ **मकरन्दः** । मालत्या लिखितमित्यर्थः ॥ **कलहंसः** । अथ किं स्वीकारे ॥ **माधवः** । वितर्क ऊहः । **मकरन्दः** । अधिगमः प्राप्तिः ॥ **कलहंसः** । उत्कण्ठाविनोद इति । माधवानुरक्ता मालती तमननुप्रासवती चित्रलिखितालोकनेनापि रमत इति भावः ॥

---

१ कोप्येष इतीहितं. २ अस्मात्परम्—माधवः-किं चान्यत् । मकरन्दः-धात्रे० इति केचित्. ३ एदं चित्तम्. ४ अपि नाम. ५ मह ( मम ).

**या कौमुदी नयनयोर्भवतः सुजन्मा**
**तस्या भवानपि मनोरथबन्धबन्धुः ।**
**तत्संगमं प्रति सखे न हि संशयोऽस्ति**
**यस्मिन्विधिश्च मदनश्च कृताभियोगः[1] ॥ ३४ ॥**

द्रष्टव्यस्वरूपा च भवतो[2] विकारहेतुस्तदत्रैवालिख्यतां मालती ।

**माधवः**—यदभिरुचितं वयस्याय । तदुपनय चित्रफलकं चित्रवर्तिकाश्च[3] । ( मकरन्द उपनयति । )

**माधवः**—( लिखन् । ) सखे मकरन्द

**वारं वारं तिरयति दृशोरुद्गमं[4] बाष्पपूर-**
**स्तत्संकल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।**
**सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः**
**पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ३५ ॥**

---

**येत्यादि** । हे सखे तत्संगमं प्रति नैव संशयोऽस्ति । भवतो नयनयोर्या कौमुदी ज्योत्स्ना आनन्दकारित्वात् । तस्या मनोरथबन्धुरभिलाषनिबन्धनाय प्रियः शोभनजन्मा भवानपि । ननु परस्परानुरागेऽपि विधिकामवैमुख्यान्न सिद्धिरत आह—यस्मिन्संगमे विधिमदनौ कृतप्रयत्नौ । चक्षुष्प्रीत्या काम एतद्देशानयनाद्विधिः कृताभियोग इत्यर्थः । अभियोगाच्च कन्यालाभः । यदाह—'अभियोगाद्धि कन्याया लाभो निश्चित एव च ।' इति ॥ ३४ ॥ चित्रेण माधवचित्तानुरागमुद्दीपयति—**द्रष्टव्येति** । **माधवः** । वयस्यायेत्यत्र 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानता । अधुना मनःसङ्गे हर्षात्सात्त्विकभावमाह **वारं वारमित्यादि** । अयं मम पाणिर्लेखाविधिषु चित्रनिर्माणेषु नितरामत्यर्थं वर्तत एव न तु लिखति । अत्र किं करोमि । यथा तथा लिखामीत्यर्थः । 'नतराम्' इति पाठे नैव वर्तत इत्यर्थः । यतो बाष्पपूरस्तदनुध्यानादानन्दाश्रुप्रवाहो वारंवारं दृशोरुद्गमं प्रचारं तिरयति छादयति । तस्याः संकल्पेन चिन्तनेनोपहितो जडिमा सर्वकार्याप्रतिपत्तिर्यस्य तद्गात्रं शरीरं स्तम्भं निश्चलत्वमभ्येति । 'हर्षभयरोगविस्मयविषादमददोषसंभवः स्तम्भः ।' इति भरतः । कीदृशः । सद्यो लिखनोपक्रमकाल एव स्विद्यन्नार्द्रीभवन् । अविरतोत्कम्पेनाधिकचलनेन लोलाङ्गुली यत्र सः । अङ्गुल्या लिखनहेतुतया तच्चापल्यादलिखनं सूचितम् । तदिहाश्रुस्तम्भस्वेदकम्पा उक्ताः । रोमाञ्चादिकं च नोक्तम् । तेषां लिखनाप्रतिकूलत्वात् । सर्वमिदं सात्त्विकं हर्षात् । यदाह—'क्रोधभयहर्षलज्जादुःखश्रमरोगतापपीडाभ्यः । व्यायामसाध्वसादेः स्वेदः स्यात्पीडनेनापि ॥ शीतभयहर्षरोधस्पर्शजरारोगजः कम्पः ॥' इति ॥ ३५ ॥ अधुना मालती चित्रं

---

१ योगौ. २ तत्रभवतः. ३ वर्तिं. ४ दृशावुद्गतः.

तथापि व्यवसितोऽस्मि । ( चिरादालिख्य दर्शयति । )

**मकरन्दः**—( चित्रं निर्वर्ण्य । ) उपपन्नस्तावदत्रभवतोऽभिष्वङ्गः । ( सकौतुकम् । ) कथमचिरेणैव निर्माय लिखितः श्लोकः । ( वाचयति )

**जगति जयिनस्ते ते भावा नवेन्दुकलादयः**
**प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।**
**मम तु यदियं याता लोके विलोचनचन्द्रिका**
**नयनविषयं जन्मन्येकः स एव महोत्सवः ॥ ३६ ॥**

( प्रविश्य सत्वरं )

**मन्दारिका**—कलहंसक पदानुसारेणोपलब्धोऽसि । ( माधवमक-

---

द्रक्ष्यतीति सानुरागोपालम्भं श्लोकं लिखति—**जगतीत्यादि** । ते ते नवेन्दुकलादयो भावाः पदार्था जयिनो मदजनने सर्वत्राप्रतिहताः स्वभावतो मनोज्ञा अन्ये सन्त्येव ये मनो मदयन्ति । मम पुनर्न मदहेतवः प्रत्युत दाहहेतव एवेति भावः । अत्र जयिन इत्यनेन कालविशेषे देशविशेषे च जयशालिन आनन्दसंदोहदा इत्युक्तम् । भाव्यन्ते भावनामर्हन्ति सुन्दरतयेति भावाः । मालतीभिन्नाः सहृदयहृदयाह्लादकाः । ते त इति वीप्सया चन्द्रादयो देवादयश्च प्रसिद्धा एवेति दर्शितम् । सर्वनाम्ना च ये यत्र चेतःप्रतिष्ठास्ते तत्र गृह्यन्त इति ध्वनितम् । तुशब्देनान्येषां तथात्वं तत्संप्रतिपत्तिद्वारेत्युक्तम् । कस्तर्हि मदहेतुरत आह—मम पुनरियं चित्रलिखिता मालती नयनयोर्ज्योत्स्ना यन्नेत्रगोचरं प्राप्ता स एवैकोऽत्र जन्मनि महोत्सवः । अत्र किं पुनः संभोगादिकमित्यनुरागः । स एव महोत्सवः । अनुरागो भवतु मा वा भूदित्युपालम्भः । एतेनात्यन्तानुरागो मालत्यां दर्शितः । एकपदेनान्येषामाविर्भावेऽपि नानन्दकत्वम् । अत एव स एवेत्यनेन तत्पोषः । जन्मनीति सामान्यनिर्देशेन समस्तजन्मनि मालतीतुल्या नास्तीति व्यज्यते । वाचिकोऽयं रसः । यदाह—' रसानुरूपैरालापैः श्लोकैर्वाक्यैः पदैस्तथा । नानालंकारसंयुक्तैर्वाचिको रस उच्यते ॥ ' इति । इह प्रकृतिमधुरत्वेऽपि मालत्या एव मदजननाद्व्यतिरेकालंकारः । प्रियाख्यानात्प्रियोऽलंकारः । विलोचनचन्द्रिकेति रूपकम् । न चात्र नवेन्दुकला प्रतिपच्चन्द्रकला सा च न मदहेतुरिति वाच्यम् । यतो नूयत इति नवः । प्रशस्तेन्दुरित्यर्थः । यद्वा नवं नूतनमिन्दुकलादिकं चेति द्वन्द्वः । यद्वा नवः सागरादुत्थितमात्रः । पूर्ण एवेत्यर्थः ॥ ३६ ॥ **प्रविश्येति** । यत्र पटीक्षेपेण प्रवेशस्तत्र प्रविश्येत्युक्तिः । अनुसारोऽनुसरणम् । एतेऽपि ये चित्रफलके लिखिताः । इह गौरवादेकत्वे बहु-

---

१ अवहितः. २ विलोक्य. ३ जाता. ४ मनोरथ. ५ पटाक्षेपेण. ६ कलहंस कलहंस चोर चोर.

रन्दौ विलोक्य[4] सलज्जम् । ) कथमेतावपि महानुभावाविहैव । ( उपसृत्य । ) प्रणमामि । ( कलहंसअ पआणुसारेण उवलद्धोसि । कधं एदे वि महाणुहावा इहे जेव्व । ) ( पणमामि । )

**उभौ**—मन्दारिके इत आस्यताम्[3] ।

**मन्दा०**—( उपविश्य । ) कलहंसक उपनय मे चित्रफलकम् । ( कलहंसअ उवणेहि मे चित्तफलअं )

**कल०**—गृहाणैतत् । ( गेह्ण एदं । )

**मन्दा०**—( विलोक्य[4] । ) कलहंसक केन किंनिमित्तं वात्र मालत्यालिखिता । ( कलहंसअ केन[5] किंणिमित्तं वा एत्थ मालदी आलिहिदा । )

**कलहंसः**—य एव यन्निमित्तं मालत्या । ( जो जेव्व जंणिमित्तं मालदीए । )

**मन्दा०**—( सहर्षम्[6] । ) दिष्टचा दर्शितफलमिदानीं विज्ञानं प्रजापतेः । ( दिट्ठिआ दंसिदफलं दाणिं विण्णाणं पआवइणो । )

**मक०**—मन्दारिके यदत्र वस्तुन्येष ते वल्लभः कथयति अपि तत्तथा ।

**मन्दा०**—महाभाग अथ किम् । ( महाभाअ अधं इं । )

**मक०**—क्व पुनर्मालती माधवं प्राग्दृष्टवती ।

**मन्दा०**—लवङ्गिका भणति वातायनगतेति । ( लवङ्गिआ भणादि वादाअणगदत्ति । )

**मक०**—वयस्य नन्वमात्यभवनासन्नरथ्ययैव बहुशः संचरावहे । तदुपपन्नमेतत् ।

**मन्दा०**—अनुमन्येतां मां महानुभावौ[11] । यावदेतद्भगवतो देवस्य

---

वचनम् । द्वित्वे वा बहुवचनम् ॥ मालत्या अभिलिखित इति शेषः । तथा च मालत्या विनोदाय माधवो लिखितस्तेनापि सा तदर्थं लिखितेत्यर्थः । **मन्दारिका** । अत्र विज्ञानं शिल्पिकौशलम् । अनुरूपानुरागादनयोरिति भावः । अवितथं सत्यम् । **तत्त-थेति** । एवमेतन्मालत्यैव माधवप्रतिच्छन्दकं लिखितमित्यर्थः । वातायनगता दृष्टव-

---

१ दृष्ट्वा. २ एत्थ ( अत्र ). ३ आगम्यताम्. ४ गृहीत्वा वि०, निरूप्य. ५ केन उण ( पुनः ). ६ सह० स्वगतं. ७ वइणा. ८ सखि मन्दा०. ९ अप्यवितथं तत्. १० तत्तहा. ११ महाभागौ.

मदनस्य सुचरितं प्रियसख्यै लवङ्गिकायै निवेदयामि । (अणुमणन्तु मं महाणुभाआ । जाव एदं भअवदो देवस्स मअणस्स सुचरिदं पिअसहीए लवङ्गिआए णिवेदेमि[1])

**मक०**—प्राप्तावसरमेतद्भवत्याः ।

( मन्दारिका चित्रफलकं गृहीत्वा निष्क्रान्ता । )

**मकरन्दः**—वयस्य खैरतरकिरणोयं भगवान्सहस्रदीधितिरलंकरोति मध्यमह्नस्तदेहि संस्त्यायमेव गच्छावः । ( इत्युत्थाय परिक्रामतः । )

**माधवः**—एवं हि मन्ये ।

**घर्माम्भोविसरविवर्तनैरिदानीं**
**मुग्धाक्ष्याः परिजनवारसुन्दरीणाम् ।**
**तत्प्रातर्विहितविचित्रपत्ररेखा-**
**वैदग्ध्यं जहति कपोलकुङ्कुमानि ॥ ३७ ॥**

अपि च ।

**उन्मीलन्मुकुलकरालकुन्दकोश-**
**प्रश्च्योतद्घनमकरन्दगन्धबन्धो ।**
**तामीषत्प्रचलविलोचनां नताङ्गी-**
**मालिङ्गन्पवन मम स्पृशाङ्गमङ्गम् ॥ ३८ ॥**

---

तीत्यर्थः । लवङ्गिकाया द्वारा माधवानुरागो मालत्यामस्त्वित्यर्थः ॥ **मकरन्दः** । संस्त्यायो गृहम् । 'संस्त्यायः संनिवेशे च संघातेऽपि च दृश्यते ।' इति मेदिनीकरः ॥ **घर्मेत्यादि** । मालत्याः परिजनवारसुन्दरीणां कपोलकुङ्कुमानि प्रातर्विरचितविचित्रपत्रावलीवैदग्ध्यं यत्तदधुना मध्याह्ने जहति त्यजन्ति । कैः घर्माम्भसो विसरस्य समूहस्य विवर्तनैर्विविधजलकणैः करणैः । अनेन नायिकायाः सुकुमारतया निःसहत्वमुक्तम् । मालत्याः कन्यात्वेन पत्रावल्यभावात्परिजनेत्युक्तम् । माङ्गल्यतया प्रातरेव कुङ्कुमेन पत्रावलीलिखनम् । अत एव वसन्तकालस्य शीतत्वात्कुङ्कुमेन भूषाकरणमिति मतमपास्तम् । 'धारासिक्तवसुंधरासुरभयः' इत्यभिधानाद्वर्षाकालप्रस्तावात् । 'समूहनिवहव्यूहसंदोहविसरव्रजाः ।' इत्यमरः । इहोन्मादावस्था । अत एवात्र तत्संबद्धा कथा यदाह—'तत्संबद्धां कथां युङ्क्ते सर्वावस्थागतामिह ।' इति ॥ ३७ ॥ **उन्मीलदिति** । हे पवन उन्मीलन्मुकुलेन विकचकोरकेण करालाद्विषमात्कुन्दगुच्छात्क्षरन्निबिडमकरन्दश्च गन्धश्च तयोर्बन्धो । मकरन्दस्य यो गन्धस्तद्बन्धो तत्सह-

---

१ अणुमणादु महाभाओ; महाभाआ. २ णिवेदिस्सामि. ३ भाण्डम्. ४ मध्यान्हो वर्तते । तदेहि. ५ ०रीभिः. ६ कुण्डलानि. ७ गुच्छ, कोषात्. ८ प्रच्यो०. ९ ललित, प्रचलितलो०.

**मकरन्दः**—( स्वगतम् । )

> **अभिहन्ति हन्त कथमेष माधवं**
> **सुकुमारकायमनवग्रहः[1] स्मरः ।**
> **अचिरेण वैकृतविवर्त[2]दारुणः**
> **कलभं कठोर इव कूटपाकलः[3] ॥ ३९ ॥**

**तदत्र[4] भगवती कामन्दकी नः शरणम् ।**

**माधवः**—( स्वगतम्[5] । ) आश्चर्यम् ।

> **पश्यामि तामित इतः पुरतश्च पश्चा-**
> **दन्तर्बहिः[6] परित एव विवर्तमानाम् ।**
> **उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-**
> **मासक्त[7]तिर्यगपवर्तित[8]दृष्टि वक्त्रम् ॥ ४० ॥**

---

चरेति वा । ईदृशोऽपि त्वं मे न सुखाय किंतु तापायातस्तां मालतीमिषदालिङ्गन्ममाङ्गमङ्गं प्रत्यङ्गं स्पृश । अमृतमयतदङ्गसङ्गशीतस्त्वं मम तापशान्तये भविष्यसीति भावः । यद्वा तदीयतापशान्तिर्भवत्वित्यनुरागात्तामालिङ्गन्नित्युक्तम् । तां कीदृशीम् । प्रचलनेत्रां विरहे पवनस्य दुःसहत्वेन भयादितस्ततः क्षिप्तनेत्राम् । अत एव नम्रीभवदङ्गां च । इह विषमकुन्दकोशसंचरणेन गतिप्रतिबन्धान्मान्द्यं मकरन्दसङ्गाच्छैत्यं गन्धबन्धुतया सौगन्ध्यं च वायोरुक्तम् । ईषदालिङ्गन्नित्यनेन सुरभिपदेनाभिघातनिःसहत्वं मालत्या-मुक्तम् । ‘ करालो दन्तुरे तुङ्गे ’ इत्यमरः ॥ ३८ ॥ माधवस्यानङ्गदुःसहत्वमाह **अभिहन्तीत्यादि** । एष स्मरोऽनवग्रहः प्रतिरोधशून्यः कोमलकायं माधवं कथमचिरेणैवाभिहन्ति । हन्तानुकम्पायाम् । ‘ हन्त हर्षेऽनुकम्पायाम् ’ इत्यमरः । कीदृशः । विकृतस्य भावो वैकृतं तस्य विवर्तोऽन्यथावस्थानं तेन दारुणो दुःखदः । यथा कलभं करिबालकं मृदुकायं कठोरो दुःसहः कूटपाकलो हस्तिवातज्वरः अचिरेण हन्ति तथेत्यर्थः । सोऽप्यनवग्रहोऽप्रतिकरणीयो विकृतिविवर्तदारुणश्च भवति । ‘ गजं वातज्वरो हन्ति तथा वै कूटपाकलः । ’ इति वैद्यके ॥ ३९ ॥ **मकरन्दः** । इदं स्वगतम् । स्वयमनध्यवसायादाह—**तदत्रेति** । अत एव भगवती ज्ञानसंपन्नेह शरणं रक्षिका । द्वितीयाङ्कावतारोऽयम् । यदाह—‘ अङ्कावसाने यत्रैव भाविनोऽङ्कस्य सूच्यते । वस्तुबीजमुपोद्घातैः सोऽङ्कावतार इष्यते ॥ ’ इदानीमु-न्मादावस्थोद्भावनाबलात्तन्मयत्वमाह—**पश्यामीत्यादि** । तामेकामेव विवर्त-मानां प्रपञ्चरूपां परितः सर्वत्र पश्यामीत्याश्चर्यम् । विवर्तमानत्वमेवाह । इत इत उभयपार्श्वे । पुरतोऽग्रे । पश्चात्पृष्ठे । अन्तर्मनसि । बहिस्त्वग्भागे । अनेन तदा-वेशात्सर्वत्र तन्मयत्वमुक्तम् । यदाह—‘ यो येन भावेनाविष्टः सुखदेनेतरेण वा । स

---

१ ग्रहस्मरः. २ विवर्ण. ३ पालकः. ४ अत्रभवती. ५ आत्म०. ६ बहिश्च परितश्च. ७ मासङ्ग,–ङ्गि. ८ वर्जित.

( प्रकाशम् ) वयस्य मम हि संप्रति

प्रसरति परिमाथी कोऽप्ययं देहदाह-
स्तिरयति करणानां ग्राहकत्वं प्रमोहः[1] ।
रणरणकविवृद्धिं बिभ्रदावर्तमान[2]
ज्वलति हृदयमन्तस्तन्मयत्वं च धत्ते ॥ ४१ ॥

( इति निष्क्रान्ताः सर्वे । )

इति[3] बकुलवीथी नाम प्रथमोऽङ्कः ।

---

तदाहितसंस्कारः सर्वं पश्यति तन्मयम् ॥ ' परित इत्यत्र ' पर्यभिभ्यां च ' इति तसिः । कीदृशीम् । वक्रं वहन्तीम् । उद्बद्धं विकसितं मुग्धं कान्तं यत्सुवर्णपद्मं ततो निरतिशया भा दीप्तिर्यस्य तत् । तन्निभं तत्तुल्यमिति वा । एतेन गौरीत्वमुक्तम् । आसक्तेन मय्यासक्त्या तिर्यगपवर्तिता दृष्टिर्यस्य तत् । यथा यान्त्या तयाहं दृष्टस्तथैव तां पश्यामीति भावः ॥ ४० ॥ अधुना सर्वाकारेण पीडामाह—**प्रसरतीत्यादि** । वयस्य पश्य । संप्रति मम कोऽप्यनिर्वचनीयस्वरूपो देहदाहः प्रसरति व्याप्नोति । अत एव परिमाथी सर्वतो मथनशीलः । करणानामिन्द्रियाणामर्थग्राहकत्वं मे प्रमोहस्तिरयति पिदधाति । सर्वेन्द्रियसंमोहो ममेत्यर्थः । मम गात्रं शरीरम् । कर्तृ । रणरणकस्य वियोगतरोर्वृद्धिमुपचयं बिभ्रदावर्ति भ्राम्यदस्ति । यद्वा रणरणकः कामस्तस्य विवृद्धिमधिकाधिकदशागामित्वम् ' मारो रणरणः कामो विषयः ' इत्युत्पलिनी । तथा मम हृदयम् । कर्तृ । अन्तर्दहति । ज्वलतीत्यर्थः । तन्मयत्वं मालतीमयत्वं च धत्ते । ईदृशी मम दशा सद्य एव विपत्तिमादधाति । तदत्र यथावत्त्वमाचरेति भावः । अत्रावर्तीति व्याधिः । ज्वलतीत्युद्वेगः । तन्मयत्वमित्युन्मादः । हृदयस्य तु तन्मयत्वधारणेन दुःसहदशायामपि जीवनाशा दर्शिता । ' करणं क्षेत्रगात्रेन्द्रियेष्वपि ' इत्यमरः ॥ ४१ ॥ **निष्क्रान्ता इति** । बीजार्थं युक्तं कृत्वा निष्क्रमो भवति । यदाह—' बीजार्थं युक्तियुक्तं च कृत्वा कार्यं यथारसम् । निष्क्रमं तत्र कुर्वीत सर्वेषां रङ्गवर्तिनाम् ॥ ' इति ॥ **बकुलवीथीति** । 'नानारससमायुक्ता सन्धिद्वयविभूषिता । अर्थप्रकृतिभिः पूर्णा स्यादेकाङ्का तु वीथिका ॥ त्रिभिः पात्रैः प्रयोज्येयमुत्तमाधममध्यमैः । कर्तव्या नायिका चात्र शृङ्गारद्वयसंयुता ' ॥ इति भरतः ॥

प्रासूत यं रत्नधरो गुणाढ्यो गुणाढ्यरूपा दमयन्तिका च ।
जगद्धरं तत्कृतटिप्पणेऽङ्को गतोऽयमाद्यो रसराजराजी ॥

इति प्रथमोऽङ्कः ।

---

१ प्रमोदः. २ बिभ्रदावर्ति गात्रम्. ३ इति मालतीमाधवे ब०, श्रीमन्मालतीमाधवनाम्नि नाटके ।

# द्वितीयोऽङ्कः ।

( ततः प्रविशतश्चेट्यौ । )

**प्रथमा**—हला संगीतशालापरिसरेऽवलोकिताद्वितीया त्वं किं मन्त्रयन्त्यासीः । ( हला[1] संगीदसालापरिसरे अवलोइदादुदीआ तुमं किं मन्तअन्ती आसी । )

**द्वितीया**—सखि तेन किल माधवप्रियवयस्येन मकरन्देन सकल एव मदनोद्यानवृत्तान्तो भगवत्यै निवेदितः । ( सहि तेण किल माहवप्पिअवअस्सेण मअरन्देण सअलो ज्जेव्व मअणुज्जाणवुत्तन्तो भअवदीए णिवेदिदो । )

**प्रथमा**—ततः किम् । ( तदो किं । )

**द्वितीया**—ततो भर्तृदारिकां द्रष्टुकामया भगवत्या प्रवृत्तिनिमित्तमवलोकितानुप्रेषिता । मयापि तस्यै कथितं यथा लवङ्गिकाद्वितीया विविक्ते भर्तृदारिका वर्तत इति । ( तदो भट्टिदारिअं दट्ठुकामाए भअवदीए पउत्तिणिमित्तं अवलोइदा अणुप्पेसिदा । मए वि ताए कधिदं जधा लवङ्गिआदुदीआ विवित्ते भट्टिदारिआ वट्टदि त्ति । )

**प्रथमा**—हला लवङ्गिका खलु केसरकुसुमान्यवचिनोमीति मदनोद्यानादेव नागता तत् किं सांप्रतं संप्राप्ता । ( हला[3] लवङ्गिआ क्खु केसरकुसुमाइं अवइणुम्मि त्ति [4]मअणुज्जाणादो ज्जेव्व णागदा ता किं संपदं संपत्ता । )

---

अधुना बकुलमालादानाय लवङ्गिका गता तां प्रतीक्षमाणा मालती सौधारूढा तन्मार्गं पश्यति मकरन्दश्च ' कामन्दकी नः शरणम् ' इत्युक्त्वा तां तत्कथनाय गतः इति स्थिते चेट्योः प्रवेशः । चेटीभाषा सौरसेनी । यदाह—' नायिकायां च चेट्यां च सौरसेनी प्रयुज्यते ' । न च ' नाटकप्रकरणयोरङ्काः कार्याः प्रत्यक्षनायकाः । इति भरतादिह माधवप्रवेशाभावात्कथमङ्कावतार इति देश्यम् । मालत्या नायकत्वेन तत्सत्त्वात् । यदाह— ' गुरुः पुरोहितोऽमात्यो नायको नायिकापि च । सार्थवाह इति प्रोक्ताः षडेते नायका बुधैः ॥ ' इति ॥ **प्रथमा** । अत्र हला सखि । परिसरे निकटे ॥ **द्वितीया** । अत्र वृत्तान्तो वार्ता ॥ **द्वितीया** । भर्तृदारिका मालती । प्रवृत्तिर्वार्ता । विविक्तं विजनम् । इह मकरन्दाज्ज्ञातमाधवावस्थया कामन्दक्या प्रकृतसिद्धयेऽवसरज्ञानार्थं मालतीवार्तां ज्ञातुं प्रहितावलोकितेति भावः ॥ **प्रथमा** । अत्र केसरो बकुलः । अवचिनोमि त्रोटयामि । इति

---

१ सहि. २ भअवदी कामन्दई किं वि. ३ सहि. ४ गआ मअणुज्जाणं किं संपदं णिउत्ता.

**द्वितीया**—अथ किम् । तां खलु परिवर्तमानामेव हस्ते गृहीत्वा प्रतिषिद्धपरिजना भर्तृदारिकोपर्यलिन्दकं समारूढा । ( अध इं । तं खु परावट्टन्तीं जेव्व हत्थे गेह्णिअ पंडिसिद्धपरिअणा भट्टिदारिआ उआरिअलिन्दअं समारूढा । )

**प्रथमा**—नूनं तस्य महानुभावस्य संकथयात्मानं विनोदयति । ( णूणं तस्स महाणुहावस्स संकधाए अत्ताणं विणोदेदि ।

**द्वितीया**—( निःश्वस्य । ) कुतस्तस्या आश्वासः । एतेनाद्य सविशेषदर्शनेनातिभूमिं खलु तस्या अभिनिवेशो गमिष्यति । अन्यच्च । कल्य एव नन्दनस्य कारणान्महाराजो भर्तृदारिकां प्रार्थयमानोऽमात्येन विज्ञप्तः । ( कुदो से आस्सासो । एदिणा अज्ज सविसेसदंसणेण अदिभूमिं क्खु ताए अहिणिवेसो गमिस्सदि । अण्णं अ । कल्ले एव्व णन्दणस्य कारणादो महाराओ भट्टिदारिअं पत्थअन्तो अमच्चेण विण्णत्तो । )

**प्रथमा**—किमिति । ( किं त्ति । )

**द्वितीया**—प्रभवति निजस्य कन्यकाजनस्य महाराज इति । तज्जात आमरणं खलु मालत्या हृदयशल्यं माधवानुराग इति तर्कयामि । ( पहबदि णिअस्स कण्णआजणस्स महाराओ त्ति । ता जादो आमरणं खु मालदीए हिअअसल्लं माहवाणुराओ त्ति तक्केमि । )

**प्रथमा**—अपि नाम भगवत्यत्र किमपि भगवतीत्वं दर्शयिष्यति । ( अवि णाम भअवदी एत्थ किं वि भअवदित्तणं दंसइस्सदि । )

**द्वितीया**—अयि असंबद्धमनोरथे एहि । ( अइ असंबद्धमणोरहे एहि । )

---

हेतौ । **द्वितीया** । अत्र परापतन्ती सत्वरमागच्छन्ती । कृतकार्यत्वेन सत्वरमागमनं भूतधर्मः । उपर्यलिन्दकम् । बाह्यपट्टशालाया उपरीत्यर्थः ॥ **द्वितीया** । अत्रातिभूमिमुत्कर्षम् । अभिनिवेश आसक्तिः । कल्यं प्रातः । 'कल्लि' इति पाठे कल्लिशब्दो देशी पूर्वदिनवाचकः । अत एव 'कल्लि पल्लीनिवासिनः' इति ॥ **प्रथमा** । किं विज्ञप्तमित्यर्थः ॥ **द्वितीया** । इदमभूताहरणं वाक्यम् । यदाह—'अभूताहरणं तत्स्याद्यद्वाक्यं कपटाश्रयम्' ॥ वाक्यतत्त्वमज्ञात्वाह । अत्र दुःखदत्वे शल्यमिव शल्यम् । अजहल्लिङ्गम् ॥ **प्रथमा** । अत्रापि नाम संभावनायाम् । भगवतीत्वं ज्ञानादिवैभवम् । निष्क्रान्ते

---

१ परापतन्तीं ( टी. ). २ अपरि०. ३ एतन्नास्ति क्वचित् । ४ अदो आमरणं जादो.

[ इति परिक्रम्य निष्क्रान्ते । ]

## प्रवेशकः ।

( ततः प्रविशत्युपविष्टा सोत्कण्ठा मालती लवङ्गिका च । )

**मालती**—हुं सखि ततस्ततः । ( हुं सहि तदो तदो । )

**लवङ्गिका**—ततस्तेन महानुभावेनोपनीता म इयं बकुलमाला । ( इति मालामर्पयति । ) ( तदो तेण महाणुभावेण उवणीदा मे इअं बउलमाला । )

**माल०**—( गृहीत्वा सहर्षं निर्वर्ण्य । ) सखि एकपार्श्वविषमप्रतिबद्धा खल्वेषा विरचना । ( सहि एक्कपासविसमपडिबद्धा क्खु एसा विरअणा । )

**लव०**—अत्र तावदरमणीयत्वे त्वमेवापराद्धासि । ( एत्थ दाव अरमणिअत्तणे तुमं जेव्व अवरद्धासि । )

**माल०**—कथमिव । ( कहं विअ । )

**लव०**—येन स दूर्वाश्यामलाङ्गस्तथा विहस्तीकृतः । ( जेण सो दुव्वासामलङ्गो तह विहत्थीकिदो । )

**मालती**—प्रियसखि लवङ्गिके सर्वथाश्वासनशीलासि । ( पिअसहि लवङ्गिए सव्वहा आसासणसीलासि । )

---

चेष्यौ । **प्रवेशक इति** । वक्तव्यस्य च बहुत्वाद्रसभङ्गप्रसङ्गेनान्योक्त्या प्रवेशकः । यदाह—' यस्तु प्रयोगबाहुल्यादङ्केऽर्थो न समाप्यते । बहुवृत्तान्तोऽल्पकथैः स विधेयः प्रवेशकैः ॥ अङ्कानामन्तरालेषु संक्षिप्तार्थप्रयोजनैः । भृत्यवर्गे कथाबद्धो विज्ञेयोऽयं प्रवेशकः ॥ ' **मालती** । हुं प्रश्ने । लवङ्गिकाकथितबकुलमालाप्रार्थनापर्यन्तश्रुतवार्तया मालत्याग्रिमवार्ताकर्णनोत्कया पृच्छ्यत इत्यर्थः । विरहोत्कण्ठितेयम् । यदाह— ' अनेककार्यसंयुक्तो यस्या नागच्छति प्रियः । तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ॥' प्रियकथापरत्वे मोट्टायितभावोऽयम् । यदाह—' श्रुत्वा कथां प्रियजनस्य सखीमुखेभ्यः कर्णोदरस्थितचलत्तनुतर्जनीकम् । यत्साङ्गभङ्गमिह जृम्भितमङ्गनानां मोट्टायितं तदुदितं कविभिः पुराणैः ॥ ' **मालती** । प्रतिबद्धा घटिता ॥ **मालती** । मालती माधववचेष्टाकर्णनाकाङ्क्षयाजानतीवाह—**कथमिव** । कथं ममापराध इत्यर्थः ॥ **लवङ्गिका** । अत्र दूर्वेत्यादिना शृङ्गारित्वे तात्पर्यमुक्तम् । तथानिर्वचनीयप्रकारेण । विहस्तो

---

१ इअं. २ अवरज्झसि ( अपराध्यासि ). ३ मुद्ध (मुग्ध) दुव्वा.

**लव०**—सखि कात्राश्वासनशीलता । ननु भणामि सोऽपि प्रियसख्या मन्दमारुतोद्वेल्लत्प्रफुल्लपण्डरीकविभ्रमाभ्यां प्रथमारब्धबकुलावलीविरचनापदेशसंयमितबलात्कारविस्तृताभ्यां लोचनाभ्यां विजृम्भमाणविस्मयस्तिमितदीर्घपर्यन्तपरिवर्तनाविलासताण्डवितभ्रूलताविडम्बितानङ्गशारङ्गविभ्रमविदग्धमवलोकयन्प्रत्यक्षीकृत एव । ( सहि का एत्थ आसासणसीलदा । णं भणामि । सो वि पिअसहीए मन्दमारुदुव्वेल्लन्तपफुल्लपुण्डरीअविब्भमेहिं[1] पढमारद्धवउलावलीविरअणावदेससंजमिदबलामोडिअवित्थरन्तेहिं[2] लोअणेहिं विअम्भमाणविम्हअत्थिमिददीहपेरन्तपरिअत्तणाविलासतण्डाविदभूलदाविडम्बिदाणङ्गसारङ्गविब्भमविअड्ढं[3][4] अवलोअअन्तो पच्चक्खीकिदो ज्जेव्व । )

**मालती**—( लवङ्गिकां परिष्वज्य । ) आम् । प्रियसखि किं तावत्तस्य महानुभावस्य स्वाभाविका एव ते मुहूर्तसंनिधायिनो जनस्य विप्रलम्भयितृका विलासा आहोस्विद्यथा प्रियसखी संभावयति । ( आम् । पिअसहि किं दाव तस्स महाणुभावस्स साहाविआ ज्जेव्व ते मुहुत्तसंणिधाइणो जणस्स विप्पलम्भइत्तआ[5] विलासा आदु जहा पिअसही संभावेदि । )

---

व्याकुलः । **लवङ्गिका । सोपीति** । अत्र स त्वयापि विलोचनाभ्यां पश्यन् प्रत्यक्षीकृतो दृष्ट एवेत्यन्वयः । अपिर्भिन्नक्रमः । उद्वेल्लत्कम्पमानम् । विभ्रमो विशिष्टा भ्रान्तिः सोऽयमित्याकारा । सादृश्यं वा विभ्रमः । माधवस्य पुण्डरीकाक्षत्वात् । विरचनापदेशेन घटनव्याजेन यः संयमोऽन्यादर्शनं तं प्रापिताभ्यां बलामोड्या बलात्कारेण विस्तरं गच्छद्भ्याम् । बलामोडिर्बलात्कारे देशी । यद्यप्यवलोकयन्नित्यनेन लोचनाभ्यामिति प्राप्तं तथापि विशिष्टलोचनप्रतिपादनार्थं तदुक्तम् । विजृम्भमाणो वर्धमानः । स्तिमितः स्निग्धः । दीर्घपर्यन्तमतिदीर्घम् । परिवर्तना पुनःपुनर्गमनं तत्र विलासो विशिष्टदृष्टिव्यापारस्तेन ताण्डवितया नर्तितया भ्रूलतया विडम्बितः समीकृतोऽनङ्गशारङ्गविभ्रमः कामधनुर्विलासस्ततो विदग्धमिति क्रियाविशेषणम् । ' गमनासनपाणिपादचेष्टा सविशेषं नयनभ्रुवां च कर्म । दयितोपगमे यदप्रयत्नात् क्रियते नूनमयं विलास उक्तः ॥ ' इति भरतः । शारङ्गरङ्गत इति प्रयोगाच्छारङ्गेति भिन्नो रेफः ॥ 'शारङ्गं धनुषि स्मृतम्' इति शाश्वतः । ततस्त्वदवलोकनाविकलता मालारम्यत्वे हेतुरिति तात्पर्यमिह ॥ **मालती** । आमिति तदुक्तस्वीकारे । ' अम्मो ' इति पाठे अम्मो हर्षे वितर्के वा । विप्रलम्भितो विप्रलम्भं

---

१ मारुअप्पआलिअ ( प्रचलित ). २ संअमण ( संयमन ). ३ विलासुल्लसिअ ( सोल्लसित ). ४ लदाविमाविदानङ्गसंरम्भावि०. ५ हेतुआ ( हेतुकाः ), विप्रलम्भितकाः ( टी० ).

**लव०**—( विहस्य सासूयमिव । ) त्वमपि स्वभावेनैव तस्मिन्नवसरेऽसंगीतकं नर्तितासि । ( तुमं वि सहावेण जेव्व तस्सिं अवसरे असंगीदअं णत्तिदासि । )

**मालती**—( सलज्जं विहस्य । ) हुं ततस्ततः । ( हुं तदो तदो । )

**लव०**—ततः प्रतिनिवर्तमानयात्राजनसंकुलेनान्तरिते तस्मिन्मन्दारिकाया गृहमुपगतास्मि । तस्याः खलु चित्रफलकं प्रभाते हस्तीकृतमासीत् । ( तदो पडिणिउत्तमाणजत्ताजणसंकुलेण अन्तरिदे तस्सिं मन्दारिआए घरं उवगदह्मि । ताए क्खु[१] चित्तफलअं पभादे हत्थीकिदं आसी । )

**मालती**—किंनिमित्तम् । ( किंणिमित्तम् । )

**लव०**—तां खलु माधवानुचरः कलहंसको नाम कामयते । सा तस्य दर्शयिष्यतीति । ततः प्रियनिवेदिका मन्दारिका संवृत्ता । ( तं क्खु माहवाणुअरो कलहंसओ णाम कामेदि । सा तस्स दंसइस्सदित्ति । तदो पिअणिवेदिआ मन्दारिआ संउत्ता । )

**मालती**—( स्वगतम्[२] ) नूनं तेनापि कलहंसकेन तत्प्रतिच्छन्दकमात्मनः प्रभोर्दर्शितं भविष्यति । ( प्रकाशम् । ) सखि किमिदानीं ते प्रियम् । ( णूणं देण वि कलहंसएण [३]तं पडिच्छन्दअं अत्तणो [४]पहुस्स दंसिदं भविस्सदि । ) ( सहि किं दाणिं दे पिअं । )

**लव०**—एतत्खलु संतापितस्य संतापकारिणो दुर्लभमनोरथावेशदुःसहायासदह्यमानचित्तस्य क्षणमात्रनिर्वापकं तव प्रतिच्छन्दकम् । ( इति चित्रं[५] दर्शयति । ) ( एदं क्खु संदाविदस्स[६] संदावआरिणो दुल्लहमणोरहावेसदूसहाआसदज्झन्तचित्तस्स खणमेत्तणिव्वाव[७]अं तुह पडिच्छन्दअं । )

---

प्रापितः । तारकादित्वादितच् ततः स्वार्थे कः । आदुशब्दोऽत्राहोस्विद्वाचकः । शीलस्य बहुकालपरिच्छेयतया मुहूर्तमात्रसंनिधाने विप्रलम्भचिन्ता । किमिदं नयनविकारादिस्वाभाविकमानुरागिकं वेति ज्ञातुं न शक्यत इति भावः । 'विप्पलम्भइत्तकाः' इति पाठे विप्रलम्भचिन्तका इति ज्ञेयम् ॥ **लवङ्गिका** । अत्र मन्मथेनेति शेषः । असंगीतकं निभृतनृत्यं यथा तथा नृत्यं कारितासीत्यर्थः । सासूयं परद्वेषसहितम् । **मालती** । हुमिति प्रणयकोपे ॥ **लवङ्गिका** । अत्र कामयत इच्छति । **लवङ्गिका** । अत्र दुर्लभायां त्वयि मनोरथाभिनिवेशस्तेन यो दुःसहायासस्तेन दह्यमाने चित्ते क्षणमात्र-

---

१ एतन्नास्ति क्वचित्. २ स्वगतं सानन्दम्. ३ एदं. ४ णाहस्य, पहुणः. ५ चित्रफलकं. ६ ०वदस्स तुह. ७ ०व्वावइत्तकं ( यितृकं ).

**मालती**—( सहर्ष निर्वर्ण्य । ) अहो इदानीमपि हृदयस्य मेऽनासङ्गो येनैवमप्याश्वासनं विप्रलम्भ इति संभावयामि । कथमक्षराण्यपि । ( इति वाचयति । 'जगति जयिनः' इत्यादि (१।३६) पूर्वोक्तं पठित्वा सानन्दम् । ) महाभाग सदृशं खलु ते निर्माणस्य वचनं मधुरतया लक्ष्यते । दर्शनं पुनस्तत्कालमनोहरं परिणामदीर्घसंतापदारुणम् । धन्याः खलु ताः कन्यका यास्त्वां न प्रेक्षन्ते । प्रेक्ष्य वात्मनो हृदयस्य प्रभवन्ति । ( इति रोदिति । ) ( अह्मो दाणिं वि हिअअस्स मे अणासङ्गो जेण एदं वि आसासणं विप्पलम्भोत्ति संभावेमि । कधं अक्खराइं पि । महाभाअ सरिसं क्खु दे णिम्माणस्स वअणं महुरदाए । दंसणं उण तक्कालमणोहरं परिणामदीहसंदावदारुणं । धण्णाओ क्खु ताओ अम्मकाओ जाओ तुमं ण पेक्खन्दि । पेक्खिअ वा अत्तणो हिअअस्स पहवन्दि । )

**लव०**—सखि किमेवमपि ते नास्त्याश्वासः । ( सहि किं एवं वि दे णत्थि आसासो । )

**मालती**—कथमिव । ( कधं विअ । )

**लव०**—यस्य कारणादुत्खण्डितबन्धनमिव कङ्केल्लिपल्लवं क्लाम्यन्नवमालिकाकुसुमनिःसहा परिखिद्यसे सोऽपि ज्ञापितो भगवता मन्मथेन संतापस्य दुःसहत्वमिति । ( जस्स कारणादो उक्खण्डिअबन्धणं विअ कङ्केल्लिपल्लवं किलम्मन्तणोमालिआकुसुमणीसहा परिक्खिज्जसि सो वि जाणाविदो भअवदा मम्महेण संदावस्स दूसहत्तणं त्ति । )

---

निर्वापकमिति ॥ **मालती** । अत्रानासङ्गोऽनाश्वासः । लवङ्गिका स्वयं लिखित्वा माधवलिखितत्वेन बोधयतीति भावः । **सदृशमिति** । मधुरतया निर्माणस्य सदृशं वचनमित्यर्थः ॥ तवाकृतिर्मधुरा यथा तथा वचोऽपि मधुरमित्यर्थः । यस्येदृशं वचस्तस्य कथमेवं दर्शनमित्युपालम्भपूर्विका पृच्छा । यदाह—'यत्र भावनयोपेतमात्मानमथवा परम् । पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिधीयते ॥' नाट्यधर्मत्वेन परोक्षस्यापि प्रत्यक्षीकरणम् । यदाह-परोक्षेऽपि च वक्तव्यो नार्यो प्रत्यक्षवत्प्रियः'॥ अम्मकाशब्दः स्त्रियां कन्यायां वा देशी ॥ **लवङ्गिका** । अत्रोत्खण्डितं छिन्नम् । बन्धनं वृन्तशाखासंयोगः । कङ्केल्लिरशोकः ।

---

१ सहर्षं चिरं चित्रं, संहर्षोच्छ्वासं. २ अणासासो. ३ संभाविअदि ( संभाव्यते ). ४ लक्खीअदि (लक्ष्यते) इत्य०. ५ ०हारि. ६ इत्थिआओ. ७ एतन्नास्ति पुस्तकान्तरे. ८ तहि कधं. ९ तुमं उक्ख० णं कङ्के-त्तं विअ हिअअं धारेन्दी ०णीसहा कुसुमाउहेण पडिहिज्जसि ( परिहीयसे )

**मालती**——कुशलमिदानीं तस्य महानुभावस्य भवतु । मम पुनः दुर्लभ आश्वासः । ( सास्रम् ) विशेषतोद्य प्रियसखि ( कुसलं दाणिं तस्स महाणुभावस्स होदु । मह उण दुल्लहो आसासो । विसेसदो अज्ज पिअसहि )-( संस्कृतमाश्रित्य । )

**मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं**
**प्रमाथी निर्धूमो ज्वलति विधुतः पावक इव ।**
**हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो**
**न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥ १ ॥**

**लव०**——एवमेव प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः सज्जनसमागमा भवन्ति । अपि च । यस्य वातायनान्तरमुहूर्तदर्शनेनापि सविशेषसमिद्धहुतवहायमानपूर्णचन्द्रोदया निष्करुणकामव्यापारसंश——

निःसहाक्षमा । परिखिद्यसे परिहीयसे । एतेन कामावस्था तनुतोक्ता ॥ **मालती** । अस्रं नेत्रजलम् । **संस्कृतमिति** । आसन्नमरणतया प्रकृतिविपर्ययद्योतनाय स्त्रियाः संस्कृताश्रयणम् । यद्वा मरणसमये प्राकृतस्मरणस्य हीनयोनिजन्मफलकत्वेन बोधनात्तत्काले स्त्रियाः संस्कृताश्रयणम् । यद्वा वैदग्ध्यद्योतनाय तत् । यदाह—संस्कृतभाषावाचः प्रायो नाट्ये खलु स्त्रियाः श्लाघ्याः । क्वचिदपि विदग्धतायाः प्रबोधनार्थं प्रशस्यन्ते ॥ **मनोराग इत्यादि** । प्रियसखि मामद्य त्रातुं न तातः प्रभवति न वा माता न वा त्वम् । कुतः । मनोराग आधिरविरतं प्रमाथी क्षोभकारी यथा तीव्रं विषं तथा विसर्पति व्याप्नोति । यथा धातुत्वगादिषु विषं व्याप्नोति तथाङ्गानि म उद्वेग इत्यर्थः । यद्वा सविशेषदर्शनाच्चित्तानुराग इच्छाभेदस्तीव्रं यथा तथा मनो विसर्पति व्याप्नोति दाहकारित्वाद्विषमिव । तथा विधुतः संधुक्षितोऽग्निर्यथा ज्वलति विधूननान्निर्धूमं यथा तथा स एव रागो ज्वलति ज्वालामालाकुलीभवति । इत इतः सर्वत्र प्रत्यङ्गं हिनस्ति पीडयति गरीयाञ्ज्वर इव । तं त्यक्त्वा ममाधिस्त्वया समाधातुं न शक्यत इति भावः । यद्वा तातस्त्रातुं न शक्नोति । नन्दननिरासेन माधवाय मददानात् । अम्बापि न तथा । तथानुवर्तमानस्य तातस्यानिषेधात् । लवङ्गिकायाश्च तयोः समशीर्षिकया गणनं स्वाच्छन्द्येन स्वमतप्रकाशनाय ॥ १ ॥ **लवङ्गिका** । अत्र भणितव्यं युज्यत एवेत्यर्थः । यस्याव्यक्तं दर्शनं चन्द्रस्याग्नित्वं जीवितसंशयं च कुरुते तस्य व्यक्तं दर्शनं त्वदुपन्यस्तप्रकारं तापं कुरुत इति किमत्र चित्रम् । चन्द्रेऽग्नित्वेन ज्ञानान्निद्राच्छेद उक्तः । सुकुमारायामस्यामतिपीडाकारित्वेन निष्करुणत्वम् । व्यापारो दशावस्थः । किमत्र क-

१ सखि कु०. २ महापहावस्स. ३ मनोरोगस्तीव्रो...विसर्पन्. ४ निर्धूमं. ५ बलीयान्. ६ समृद्ध.

यितजीविता ते शरीरावस्था तस्यैव संप्राप्तसविशेषदर्शना भूत्वाद्य संतप्यसीति किमत्र भणितव्यम् । तत्प्रियसखि श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य यद्गुरुकानुरागसदृशो महानुभाववल्लभसमागम इत्येतावज्जानीमः । ( एवं ज्जेव्व पच्चक्खसोक्खदाइणो परोक्खदुक्खदूसहा सज्जणसमाअमा होन्दि । अवि अ । जस्स वादाअणन्दरमुहुत्तदंसणेण वि संविसेससामिद्धहुदवहाअन्तपुण्णिमाचन्दोदआ णिक्करुणकामव्वावारसंसइदजीविदा दे सरीरावत्था तस्स जेव्व संपत्तसविसेसदंसणा भविअ अज्ज संतप्पासि त्ति किं एत्थ भणिदव्वं । ताँ पिअसहि सलाहणिज्जं दुल्लहमणोरहफलं जीअलोअस्स जं गुरुआणुराअसरिसो महाणुभाअवल्लहसमाअमो त्ति एत्तिअं जाणीमो । )

**मालती**—सखि दयितमालतीजीविते साहसोपन्यासिनि अपेहि । ( सास्रम् । ) अथ वा अहमेव वारंवारं विलोकयन्ती दुःखव्यवस्थापितधीरत्वावष्टम्भेनात्मनो दूरविगलितलज्जेन दुर्विनयलघ्वी अत्रापराध्यामि । तथापि प्रियसखि । ( सहि दइदमालदीजीविदे साहसोवण्णासिणि अवेहि । अह वा अहं ज्जेव्व वारंवारं विलोअअन्ती दुक्खव्ववत्थाविदधीरत्तणावठ्ठम्भेण अत्तणो हिअएण दूरंविअलिदलज्जेण दुव्विणअलहुआ एत्थ अवरद्धम्मि । तहावि पिअसहि । ) ( भूयः संस्कृतमाश्रित्य । )

> **ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी**
> **दहतु मदनः किं वा मृत्योः परेण विधास्यति ।**
> **मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया**
> **कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥ १ ॥**

---

तव्यमित्यत आह—**तदिति** । तथा च गुरुतरानुरागस्यैतत्फलं यत्सखीद्वारा वल्लभसमागमः कारयितव्य इति भावः ॥ **मालती** । अत्र दयितं प्रियम् । महाकुलकलङ्कशङ्कया साहसम् । अत एव रोदनम् । तथा च त्वमपेह्यपगच्छ । प्रियभाषिणीं त्वां किमधिक्षिपामि यदहमेवात्र वाच्येत्याह—**अथवेति** । अत्र क्षणं क्षणमालोकनाकुलत्वाद्दुःखव्यवस्थापितं यद्धीरत्वं तस्यावष्टम्भोऽविद्यमान एवैतदारोपस्तेनेत्यर्थः । लघ्वी लघुतां गता । अहमत्रापराध्यामीति येन तवैतादृशसाहसोपन्यास इति भावः । तथापि प्रियसखि । अधुना साहसाकरणं हृदि निधाय सनिर्वेदमाह—**ज्वलत्वित्यादि** । प्रतिरात्रं पूर्णश्चन्द्रो ज्वलतु तापयतु तथापि न साहसं करोमीति भावः । गगन इत्यनेनाप्राप्यत्वादनुपागमनीयतोक्ता । तर्हि कामस्त्वां

---

१ एदं. २ दूसहाआसकारिणो. ३ मुहुत्तमत्त. ४ सुसमि० पुण्णचं०. ५ संपदं ( सांप्रतं ). ६ दंसणादो अज्ज. ७ ता एत्थ. ८ जं...सारिसं. ९ पलाअन्तपडिट्ठाविद ( पलायमानप्रतिष्ठापित ). १० दूरविज्जम्भमाणदुव्विणअलहुएण ( दूरविजृम्भमाणदुर्नयलघुकेन ); दूरं विलीअन्तलज्जत्तेण ( विलीयमानलज्जात्वेन ).

**लव०**—( स्वगतम् । ) अत्रेदानीं क उपायः । ( एत्थ दाणिं को उवाओ । )

( अथ नेपथ्यार्धप्रविष्टा )

**प्रतीहारी**—एषा भगवती कामन्दकी । ( एसा भअवदी कामन्दई । )

**उभे**—किं भगवती । ( किं भअवदी । )

**प्रती०**—भर्तृदारिकां द्रष्टुकामागता ( भट्टिदारिअं दट्ठुकामा आअदा । )

**उभे**—ततः किं विलम्ब्यते । ( तदो किं विलम्बीअदि । )

( प्रतीहारी निष्क्रान्ता । मालती चित्रं[1] प्रच्छादयति । )

**लव०**—( स्वगतम् । ) सुसमीहितं खलु जातम् । ( सुसमीहिदं[2] क्खु जादम् । )

( ततः प्रविशति कामन्दक्यवलोकिता च । )

**काम०**—साधु सखे भूरिवसो साधु । प्रभवति निजस्य कन्यकाजनस्य महाराज[3] इत्युभयलोकाविरुद्धं वचनमुप[4]न्यस्तम् । अपि च । अद्य मन्मथोद्यानवृत्तान्तेन भगवतो विधेरप्यनुकूलतामवगच्छामि । बकुला-

---

पीडयिष्यतीत्यत आह । मदनो दहतु । मृत्योर्मरणात्परं स किं करिष्यति । मरणे सति दुःखस्यापि त्यागादिष्टमेव तदिति भावः । परेणेति । 'प्रकृत्यादिभ्य उपसंख्यानम् ।' इति तृतीया । इदं नायिकायाः सत्त्वजधैर्यम् । यदाह—'चापलेनानुपहतं चित्तं धैर्यमुदीरितम् ।' ननु दुःखहानाय माधवानुसरणमेव वरमत आह—मम पुनस्तातः पिता दयित इष्टः । कीदृशः । श्लाध्यः सर्वश्लाघाविषयः । अमलवंशा मातेष्टा । निर्मलं कुलं चेष्टम् । अयं हृदिस्थो जनो माधवो नैवेष्टः । साहसक्रिययेति शेषः । तर्हि कथं जीवनमत आह—न च जीवितमिष्टम् । अत्र जीवितद्वेषादुद्वेगावस्था । यदाह—'प्रद्वेषः प्राणितव्ये यः स उद्वेगः स्मृतो बुधैः ।' इति ॥ २ ॥ **लवङ्गिका** । उद्वेगनाशोपायं चिन्तयन्ती लवङ्गिकाह—अत्रेदानीं क उपायः ॥ **प्रतीहारी** । एषा भगवती कामन्दकी । मालतीजीवनोपाय इति भावः । प्रतीहारीत्यनेन संबन्धघटनं सूचितम् । यदाह—'संधिविग्रहसंबन्धनानाचारसमन्वितम् । निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ता मताः ॥' प्रतीहारीत्यत्र बहुलवचनान्मनुष्येऽपि दीर्घः । **उभयोर्वाक्ये** । किमर्थमागतेत्यर्थः । अत एवाग्रिमवाक्ये तद्व्यापारकथनम् । **लवङ्गिका** । सुसमीहितं खलु जातम् । इदानीं यत्कामन्दक्यागमनमिति भावः । **कामन्दकी** । उभयेति । इहलोकाविरुद्धं साक्षादप्रतिषेधेन राजकोपाजननात् ।

---

१ चित्रफलकम्. २ सुसमाहिदं. ३ देवः. ४ उत्तरम्.

वलीचित्रफलकव्यतिकर[1]संविधानकौतुकमद्भुतं प्रमोदमुल्लासयति । इतरेतरस्‍-
नुरागो हि दा[2]रकर्मणि परार्ध्यं मङ्गलम् । गीतश्चायमर्थोऽङ्गिरसा यस्यां
मनश्चक्षुषोरनुबन्ध[3]स्तस्यामृद्धिरिति ।

**अव**—एषा मालती । ( एसा मालती । )

**काम०**—( [4]निर्वर्ण्य । )

> **निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा**
> **कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी ।**
> **अवस्थामापन्ना मदनदहनोद्दा[5]हविधुरा-**
> **मियं नः कल्याणी रमयति मनः कम्पयति च ॥ ३ ॥**

अपि च ।

> **परिपाण्डुपांसुलकपोलमाननं**
> **दधती मनोहरतरत्वमागता ।**
> **रमणीयजन्मनि जने परिभ्र[6]म-**
> **ल्ल[7]लितो विधिर्विजयते हि मान्मथः ॥ ४ ॥**

[8]नियतमनया संकल्पनिर्मितः प्रियसमागमोनुभूयते । तथा ह्यस्याः

> **नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः**
> **स्वेद[9]श्चक्षुर्मसृणमधुरा[10]केकरास्निग्धमुग्धम्[11] ।**
> **गात्रस्तम्भः स्तनमुकु[12]लयोरुत्प्रबन्धः प्रकम्पो**
> **गण्डाभोगे पुलकपटलं मूर्च्छना चेतना च ॥ ५ ॥**

---

परलोकाविरोधस्त्वात्मीयस्य कुमारीजनस्य प्रभुर्न परस्येति साधारणोक्त्यासत्यानु-
दीरणादित्यर्थः । व्यतिकरो मिलनं तद्रूपं संविधानम् । दारकर्मणि परिणये । परार्ध्यं
श्रेष्ठम् । अनुबन्धो रतिः । ऋद्धिरुपचयः ॥ **निकाममित्यादि** । इयं कल्या-
ण्यस्माकं मनो रमयति । कुतः । अत्यर्थं क्षीणाङ्गी । सरस आर्द्रः । अपर्युषित इति
यावत् । कदल्या गर्भो मज्जा तद्वद्रम्या क्षीणत्वपाण्डुत्वाभ्याम् । इह गर्भपदेनाति-
पाण्डुत्वं चोक्तम् । कलाशेषा शशिनो मूर्तिरिव द्वितीयाचन्द्रलेखेव । अत एव
प्रस्तुतकार्यसंपादकत्वेन रमयति । उद्दाहेनोत्कटदाहेन विह्वलां दशामापन्ना सती
मनः कम्पयति । अतिपीडनादनिष्टशङ्कित्वादिति भावः । इह तनुताख्या काम-
दशा सूचिता ॥ ३ ॥ **परीत्यादि** । पांसुलं रूक्षम् । पाण्डुरूक्षकपोलवदनापीयं
रम्या । यतो मनोज्ञजन्मनि जने वलन्कायस्य विकारो यादृशस्तादृश ईप्सितः सन्वि-
जयी भवति ॥ ४ ॥ संकल्पो मनोव्यापारः । **नीवीत्यादि** । जघनवस्त्रब-

---

१ करस्तु कमप्यद्भुततमं. २ विवाहक०. ३ निबन्धः; अनुराग; ऋद्धिः—सिद्धिः. ४ दृष्ट्वा नि०, विलोक्य. ५ नोन्माद, नोद्दाम. ६ परिस्फुरन्. ७अथ वा निय०. ८ मितप्रिय. ९ खेदः. १० मुकुलाकेकर. ११ तारम्. १२ कलशयोः.

( इत्युपसर्पेति । )

( लवङ्गिका मालतीं चालयति । उभे उत्तिष्ठतः )

**मालती**—भगवति वन्दे । ( भवअदि वन्दामि । )

**काम०**—महाभागे समीहितफलभाजनं भूयाः ।

**लव०**—सुविहितमासनम् । अत्रोपविशतु भगवती । ( सुविहिदं आसणं । एत्थ उवविसदु भअवदी । )

( सर्वा उपविशन्ति )

**मालती**—कुशलं भगवत्याः । ( कुशलं भअवदीए । )

**काम०**—( निःश्वस्य । ) कुशलमिव ।

**लव०**—( स्वगतम् । ) प्रस्तावना खल्वेषा कपटनाटकस्य ।

---

न्धनं नीवी । तस्या बन्धस्य ग्रन्थेरुच्छ्रसनं शिथिलता । वासःश्लथतानुरागादपि । यदाह—' स्वेदोत्कम्पपथुस्तम्भाः श्लथता जघनच्छदे । आविर्भवति नारीणामनुरागवशात्मनाम् ॥ ' अधरस्पन्दनमधरकम्पनम् । एतत्तु स्फुरितचुम्बने । यदाह—' रदने विशान्तमोष्ठं ग्रहीतुं या समिच्छति । निजोष्ठः कम्पते यच्च स्फुरितं चुम्बनं मतम् ॥ ' दोर्विषादो बाह्वोर्निःसहत्वमालिङ्गनसौख्यात् । स्वेद आयासात् । मसृणं कोमलम् । मधुरं ललितम् । संकल्पलब्धस्य दुरालोकत्वादाकेकरम् । शृङ्गारात्स्निग्धम् । सुखभावनया मुग्धम् । चक्षुः—संकल्पमात्रलब्धतया प्रियेऽसूयायोगाज्जिह्मा दृष्टिः । जिह्मा दृष्टिरसूयायाम् । यदाह—' ललिताकुञ्चितपुटा शनैस्तिर्यग्विसर्पिणी । निगूढागूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ' लब्धे सति धृतिहर्षाभ्यां ललितम् । तल्लक्षणं तूक्तमेव । आकेकरा घनालोके विच्छेदे प्रोषितेषु च । आकुञ्चितपुटापाङ्गसंगतार्धनिमेषिणी ॥ मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा मता ॥ ' ' दोर्दोषा भुजा भुजः ' इति शब्दभेदः । गात्रस्तम्भः शरीरनिश्चलता । अतिहर्षात् । यदाह—' अतिहर्षभयरोषरागेभ्यः स्तम्भसंभवः ॥ ' मुकुलाकारत्वात्स्तनावेव मुकुलौ । तयोरुत्प्रबन्धो विच्छेदरहितः कम्पः । प्रियस्य गाढालिङ्गनात् । गण्डाभोगे गण्डमण्डले पुलकपटलं रोमाञ्चसंघः । प्रियचुम्बनसंकल्पात् । आत्यन्तिकत्वार्थं पटलग्रहणम् । मूर्च्छना मोहः । निरतिशयानन्दयोगात् । यदाह—' स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम् ' । रतिविलाससंकल्पेनान्तरा चेतना च ॥ ५ ॥

**मालती** । बौद्धानां प्रव्रजितं प्रति वन्दामीति नतिसंप्रदायः । यद्वा वन्दामि वन्द इति सामान्यत एव ॥ **कामन्दकी** । मालतीचित्तविनोदाय स्वस्य च तद्विषयावष्टम्भदर्शनायाह—भाजनमिति । **लवङ्गिका** । कपटमेव नाटकम् । अत्र

---

१ चालयित्वा. २ काम०-( निःश्वस्य ). ३ वत्से; महाभागधेयजन्मतायाः फलस्य. ४ अभिमनफल०; ०फलस्य भा०. ५ भअवदि एदं पवित्तं आसणम्.

( प्रकाशम् । ) गुरुकबाष्पस्तम्भमन्थरितकण्ठप्रतिलग्ननिःश्वासमन्यादृशमेवाद्य भगवत्या वचनम् । तत्किमिदानीमुद्वेगकारणं भविष्यति । ( पत्थावणा क्खु एसा कवडणाडअस्स । ) ( गुरुअबाहत्थम्भमन्थरिदकण्ठप्पडिलग्गणीसासं अण्णारिसं ज्जेव्व अज्ज भअवदीए वअणम् । ता किं दाणीं उव्वेअकारणं भविस्सदि । )

**काम०**—नन्वयमेव चीरचीवरविरुद्धः परिचयः ।

**लव०**—कथमिव । ( कधं विअ । )

**काम०**—अयि त्वमपि किं न जानासि ।

**इदमिह मदनस्य जैत्रमस्त्रं सहजविलासनिबन्धनं शरीरम् ।**
**अनुचितवरसंप्रदानशोच्यं विफलगुणातिशयं भविष्यतीति ॥ ६ ॥**

( मालती वैचित्त्यं नाटयति । )

**लव०**—अस्त्येतन्नरेन्द्रवचनानुरोधिनामात्येन नन्दनस्य प्रतिपन्ना मालतीति सकलो जनोऽमात्यं जुगुप्सते । ( अत्थि एदं णरेन्दवअणाणुरोहिणा अमच्चेण णन्दणस्स पडिवण्णा मालदित्ति सअलो जणो अमच्चं जुगुच्छेदि । )

**मालती**—( स्वगतम् । ) कथमुपहारीकृतास्मि राज्ञस्तातेन । ( कधं उवहारीकिदह्मि राइणो तादेण । )

**काम०**—आश्चर्यम् ।

---

बाष्पं नेत्रजलम् । स्तम्भः प्रतिबन्धः । मन्थरितो मन्दीकृतः । तादृशकण्ठे प्रतिलग्नो निःश्वासो यत्र तत् ॥ **कामन्दकी** । परिचयो मालत्यभिष्वङ्गः । उद्वेगकारणमिति शेषः । **इदमित्यादि** । मालत्या इदं शरीरं विफलगुणातिशयं भविष्यतीति त्वं किं न वेत्सि । अनुचितजामातृसंबन्धशोचनावहम् । यतः । इह जगति यत्कामस्य जैत्रं जयनशीलमस्त्रं सहजविलासस्य निबन्धनं कारणं च । एतेनैव सहजविलासा जायन्त इत्यर्थः । 'वरो जामातरि श्रेष्ठे' इति विश्वः ॥ ६ ॥ वैचित्यं विमनस्कत्वम् । नाटयति करोति ॥ **लवङ्गिका** । पितृनिन्दैव पूर्वश्लोकार्थ इति द्योतयति लवङ्गिका । अत्र जुगुप्सते निन्दति । **मालती** । अत्रानुपहरणीयाप्युपहारीकृतेत्यनेन च्व्यर्थेन पितुर्गुणानभिज्ञत्वं सूचितम् । उपहारश्च मरणशरणच्छागादिः क्रियत इति मरणतुल्यतास्य दर्शिता । इह पश्चात्तापनामा नाट्यालंकारः । यदाह—' अनुतापातिरेकस्तु पश्चात्ताप उदाहृतः ' ॥ इति । बालत्वात्ले-

---

१ बाहम्भर. २ णिग्गमं. ३ विअ. ४ अयि किं, जा०–जानीषे. ५ संप्रयोग. ६ वैचित्र्यं. ७ रोहेण.

गुणापेक्षाशून्यं कथमिदमुपक्रान्तमथ वा
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ।
इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः
सुतादानान्मित्रं भवतु स[1] हि नो नन्दन इति ॥ ७ ॥

**मालती**—( स्वगतम् । ) राजाराधनं खलु तातस्य गुरुकं[2] न पुनर्मालती । ( राआराहणं क्खु तादस्स गुरुअं ण उण मालदी । )

**लव०**—एवं यथा भगवत्याज्ञप्तम्[3] । अन्यथा तस्मिन्वरे दुर्दर्शनेऽतिक्रान्तयौवने किमिति न विचारितममात्येन । ( एव्वं जधा भअवदीए आणत्तं । अण्णधा तस्सिं वरे दुद्दंसणे अदिक्कन्दजोव्वणे किं ति ण विआरिदं अमच्चेण । )

**मालती**—( स्वगतम् । ) हा हतास्मि समुपस्थितानर्थवज्रपतना मन्दभागिनी । ( हा हदह्मि समु[4]पत्थिदाणत्थवज्जपडणा मन्दभाइणी । )

**लव०**—तद्भगवति प्रसीद परित्रायस्वास्माज्जीवितमरणात्प्रियसखीम् । तवाप्येषा दुहितैव । ( ता भअवदी पसीद परित्ताहि इमादो जीविदम[5]रणादो पिअसहिं । तुह वि एसा दुहिदा जेव्व । )

**काम०**—अयि सरले किमत्र मया भगवत्या शक्यम् । प्रभवति

---

ह्मच्च तातस्य गुणानभिज्ञत्वं मालती न जानातीत्याशयेनाह—**गुणेत्यादि** । इदं कार्यं गुणनिरपेक्षममात्येन कथमारब्धम् । रूपादिमति पुरजने सति तद्रहितनन्दनाय मालतीदानं कथमुपक्रान्तमिति भावः । अत एवाश्चर्यम् । अथ वा पक्षान्तरे । कुटिलनये परवञ्चननीतौ कुशलचित्तानां कुतोऽपत्यस्नेहः । नैवेत्यर्थः । स्नेहस्य निरुपाध्युपकारेच्छारूपस्य नृपानुरञ्जनादावुपाधावभावादित्यर्थः । इदं यदुपक्रान्तं तदैदंपर्यमिदंपरम् । एतदभिप्रायकमिति यावत् । चतुर्वर्णादित्वादिदंपरशब्दे ष्यञ् । उत निश्चये वितर्के वा । यन्नृपतेर्नर्मसचिवो नन्दनः कन्यादानादस्माकं मित्रमनपकारी भवत्वित्येवमुपक्रान्तम् । निष्णात इत्यत्र 'निनदीभ्यां स्नातेः कौशले इति षत्वम् । 'उत निश्चयवितर्कयोः' इति धरणिः । कामोपचरणं नर्म । यदाह—'उपचारः स्त्रीपुंसयोर्मनोजन्मनिबन्धनः । स एवात्र परिज्ञेयो नर्मसंज्ञः प्रयोक्तृभिः ॥' इति भरतः ॥ ७ ॥ **लवङ्गिका** । इतीति दुर्दर्शनादिकम् ॥ **लवङ्गिका** । अत्र जीवितमपि निष्फलत्वदुःखबहुलत्वाभ्यां मरणकल्पं जीवितमरणम् ॥ **कामन्दकी** । उक्तप्रबन्धेन मालतीनैराश्यं विधायाह—**अयीति** । भगवत्येति 'कृत्यानां कर्तरि

---

१ स हि मे; स भवान्. २ बहुमदं. ३ जहा भअवदी आणवेदि तं तह एव्व । ४ समुत्थि०. ५ जीवन्द, जीवण.

प्रायः कुमारीणां जनयिता दैवं च। यच्च किल कौशिकी शकुन्तला दुष्यन्तमप्सरा उर्वशी पुरूरवसं चकम इत्याख्यानविद आचक्षते वासवदत्ता च संजयाय राज्ञे पित्रा दत्तमात्मानमुदयनाय प्रायच्छदित्यादि तदपि साहसाभासमित्यनुपदेष्टव्य एवायमर्थः। सर्वथा

**राज्ञः प्रियाय सुहृदे सचिवाय कार्या-**
**द्दत्वात्मजां भवतु निर्वृतिमानमात्यः।**
**दुर्दर्शनेन घटतामियमप्यनेन**
**धूमग्रहेण विमला शशिनः कलेव॥ ८॥**

**मालती**—(सास्रं स्वगतम्।) हा तात त्वमपि मम नामैवमिति सर्वथा जितं भोगतृष्णया। (हा ताद तुमं वि मम णाम एव्वं त्ति सव्वधा जिदं भोगतिण्हाए।)

**अव०**—चिरायितं भगवत्या। ननु भणाम्यस्वस्थशरीरो महाभागो माधव इति। (चिराइदं भअवदीए। णं भणामि अस्सत्थसरीरो महाभाओ माहवोत्ति।)

**काम०**—इदं गम्यते। वत्से अनुजानीहि माम्।

**लव०**—(जनान्तिकम्) सखि मालति सांप्रतं भगवत्याः सकाशात्तस्य महानुभावस्योद्गमं जानीमः। (सहि मालदि संपदं भअवदीए सआसादो तस्स महाणुभावस्स उग्गमं जाणीमो।)

---

वा' इति तृतीया न तु षष्ठी। अशक्यमित्यकारप्रश्लेषसंभवात्। गान्धर्वविवाहे कन्यावरौ प्रभवत इति प्रायःपदतात्पर्यम्। जनयितेति। न राजेति भावः। माधवविवाहे भूरिवसुरेव सानुग्रहः। अत एव सरल इत्युक्तम्। किल प्रसिद्धौ। कौशिकी कुशिकवंशजा। चकमे कामयते स्म। आख्यानं पुरावृत्तम्। इहाख्याननामा नाट्यालंकारः॥ यदाह—'आख्यानं तु तदुद्दिष्टं यत्पुरावृत्तकीर्तनम्॥' इति। निदर्शननामा नाट्यालंकारोऽपि। यदाह—'कथनादन्यचेष्टानां साध्यसिद्धिर्निदर्शनम्॥ इति। कल्पपदेनोपदेष्टव्यत्वसूचनम्॥ अधुना साहसेऽपि प्रवृत्त्यर्थं मालत्यनुशयाय पितुर्वरस्य च दोषमाह—**राज्ञ इति**। कार्यादाराधनादेर्न त्वदृष्टार्थमित्यर्थः। अनेन सचिवेन। वार्धक्यात्कौरूप्याच्च दुर्दर्शनेन। धूमग्रहेण राहुणोत्पातधूमग्रहेण वा। पीडाकारित्वादुर्दर्शनेन वा। ग्रहणं ग्रहः॥ ८॥ **मालती**। मालती जातानुशयाह—एवं निःस्पृह इत्यर्थः। भोगेति। स्वभोगाय। त्वमेवं करोषीत्यर्थः। **अवलोकिता**। अत्र चिरायितं बहुकालमागतम्। इतीति। अतः शीघ्रं गम्यतामिति भावः॥

---

१ एतन्नास्ति क्वचित्. २ साहसकल्पम्. ३ ०देष्टव्यमेव. ४ भार्याम्. ५ चित्तो. ६ ०वदीस०. ७ महाभाअस्स.

**माल०**—( अपवार्य ) सखि अस्ति मे कौतूहलम् । ( सहि अत्थि मे कोदूहलम् । )

**लव०**—( प्रकाशम् ) क एष माधवो नाम यस्य भगवती स्नेहगुरुकमात्मानं धारयति । ( [१]को एसो माहवो णाम जस्सँ भअँवदी सिणेहगुरुअं अत्ताणं धारेदि । )

**काम०**—अप्रास्ताविकी महत्येषा कथा ।

**लव०**—तथाप्याचष्टां भगवती । प्रसादं करोतु । ( तधा वि आचक्खेदु भअवदी । प्रसादं करेदु । )

**काम०**—श्रूयताम् । अस्ति विदर्भाधिपतेरमात्यः समग्रधुर्यपुरुषप्रकाण्डचक्रचूडामणिर्देवरातो नाम यमशेषभुवनमहनीयपुण्यमहिमानमात्मनः सतीर्थ्यं पितैव ते जानाति योऽसौ यादृशश्चेति । अपि च ।

> **व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः**
> **सुकृतविलसितानां स्थानमूर्जस्वलानाम् ॥**
> **अकलितमहिमानः केतनं मङ्गलानां**
> **कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ ९ ॥**

---

**लवङ्गिका** । जनान्तिकमिति । 'उक्तस्याश्रवणं कार्यात्पार्श्वस्थैः स्याज्जनान्तिकम् ।' इति भरतः । लवङ्गिका मालतीं साकाङ्क्षयति । उद्गममुत्पत्तिम् ॥ **मालती** । अस्ति मे कुतूहलम् । तत्पृच्छेत्यर्थः । **लवङ्गिका** । अत्र यस्य कृत इति शेषः ॥ **कामन्दकी** । सकृत्रिमावहित्थमाह—अप्रास्ताविकीति । अयमाशयः—माधवगुणस्तुतावुपाधिमाशङ्क्य मालत्या अनादरे मम तटस्थता न घटेत ॥ **लवङ्गिका** । अतः सानुबन्धं पृच्छत्विति सानुबन्धमियमप्याहेति ॥ **कामन्दकी** । समग्रः संपूर्णः । धुरि कार्यभारे साधुर्धुर्यो मन्त्री । प्रकाण्डं प्रशस्तम् । चूडामणिरिव चूडामणिः श्लाध्यः सर्वमन्त्रिप्रधानमित्यर्थः । महनीयं पूज्यम् । पुण्यं प्रशस्तम् । यद्वा महनीयौ पुण्यमहिमानौ यस्य तम् । सतीर्थ्य एकगुरुः । समानं तीर्थमुपाध्यायो यस्य । 'समानतीर्थे वासी' इति यप्रत्ययः । **व्यतिकरितेत्यादि** । इह जगति कथमपि शापादिना तादृशाः स्वर्गिणः संभवन्ति । कीदृशाः । यशोभिर्व्याप्तदिक्स्वरूपाः । श्वेतमानैरिति वर्तमाननिर्देशेन तेषामभिनवयशोयोगित्वमुक्तम् । बलवतां पुण्यविपाकानां त एव स्थानम् । त एव महासुकृतिन इत्यर्थः । यद्वा पुण्यविलासानां बलवतां च त एव स्थानम् । तथा च पुण्यवन्तो बलवन्तश्च त एवेत्यर्थः । अत एवाधिकमहत्त्वाः । मङ्गलानामर्थसिद्धीनां केतनं निवासः ।

---

१ जनान्तिकम्. २ भअवदि को. ३ जस्सिं. ४ वदी एव्वं. ५ आअक्खिअ (आख्याय.) ६ ०भराजस्य, विदर्भाधिपस्य नरपतेः. ७ समग्र-स्त-पुरुष०. ८ सातीर्थ्यात्. ९ अगणित. १० कथमिष.

**माल०**—( जनान्तिकम् । ) सखि तं खलु भगवतीगृहीतनामधेयं सर्वदा तातः स्मरति । ( सहि तं क्खु भअवदीगहीदणामहेअं सव्वदा तादो सुमरेदि । )

**लव०**—सखि समं किल विद्याधिगमः कृत इति तत्कालवेदिनो जना मन्त्रयन्ते । ( सहि समं किल विज्जाहिगमो किदो त्ति तक्कालवेदिणो जणा मन्तअन्दि । )

**काम०**—

तत उदयगिरेरिवैक एव
स्फुरितगुणद्युतिसुन्दरः कलावान् ।
इह जगति महोत्सवस्य हेतु-
र्नयनवतामुदियाय बालचन्द्रः ॥ १० ॥

**लव०**—( जनान्तिकम् । ) सखि अपि नाम माधवो भवेत् । ( अवि णाम माहवो हवे । )

**काम०**—

असौ विद्याधारः शिशुरपि विनिर्गत्य भवना-
दिहायातः संप्रत्यविकलशरच्चन्द्रमधुरः ।
यदालोकस्थाने भवति पुरमुन्मादतरलैः
कटाक्षैर्नारीणां कुवलयितवातायनमिव ॥ ११ ॥

---

'केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोः ।' इति विश्वः ॥ ९ ॥ **मालती** । अत्र नामाग्रहणं श्वशुरत्वेनाङ्गीकारात् । 'गुरोर्नाम न गृह्णीयात्' इति स्मृतेः । तं देवरातम् ॥ **लवङ्गिका** । अत्र समं तुल्यं यथा तथा पाठः कृतो देवरातभूरिवसुभ्याम् । मन्त्रयन्ते कर्णाकर्णिकया वदन्ति । **कामन्दकी** । प्रकृतसिध्यर्थं पितृगुणानुक्त्वा नायकगुणानाह—**तत इत्यादि** । ततो देवरातादेक एव बालश्चन्द्र उदियाय । एको बालो जात इत्यर्थः । यद्वा बालश्चन्द्र इव बालचन्द्रः । एकापत्यतया स्नेहाधिक्यसूचनार्थमेकग्रहणम् । धरायामेकाधिपत्यकथनाय वा । कीदृशः । स्फुरिता व्यक्तीकृता गुणानां शीलादीनां या द्युतिरौज्ज्वल्यं तया सुन्दरः । यद्वा स्फुरितगुणद्युतिश्चासौ सुन्दरश्चेति । कलावांश्चतुःषष्टिकलायुक्तः । 'नायके वर्णयेद्दूती कलावत्त्वं च रम्यताम् ।' इति भरतः । नयनवतां चक्षुष्मतां महोत्सवस्य कारणम् । नेत्रप्रीतिजनकत्वात् । यथोदयगिरेरेको बालचन्द्रोऽभिनवशस्युदेति । सोऽपि स्फुरितगुणोन्मीलनैर्नैर्मल्यादिका या द्युतिः प्रभा तया सुन्दरः कान्तः कलावान्नेत्रानन्दहेतुश्च भवति ॥ १० ॥ बालत्वादितस्तदागमनमाशङ्क्याह—**असावित्यादि** । असौ शिशुरपि बालोऽपि संप्रतीहागतः । अस्तीवि

---

१ अपवार्य. २ भअवदीए. ३ सव्वहा [ सर्वथा ]. ४ किल भअवदीए गुरुसआसादो विज्जा०...वेदिणो मन्तअन्ति. ५ एष. ६ अपवार्य. ७ शाली, ८ षवनः.

अत्र बालसुहृदा मकरन्देन सह विद्यामान्वीक्षिकीमधिगच्छति। एष माधवो नाम।

**मालती**—( सानन्दं जनान्तिकम्। ) सखि श्रुतं त्वया। (सहि सुदं तुए।)

**लव०**—( जनान्तिकम्। ) सखि कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः। ( सहि कुदो वा महोदहिं वज्जिअ पारिजाअस्स उग्गमो। )

[ नेपथ्ये शङ्खध्वनिः ]

**काम०**—अहो कालातिपातः। संप्रति हि

**क्षिपन्निद्रामुद्रां मदनकलहच्छेदसुलभा-**
**मवाप्तोत्कण्ठानां विहगमिथुनानां प्रथमतः।**
**दधानः सौधानामलघुषु निकुञ्जेषु घनता-**
**मसौ संध्याशङ्खध्वनिरनिभृतः खे विचरति ॥ १२ ॥**

---

शेषः। कीदृशः। विद्याधारः। त्रयीतदङ्गविद्यावित्। बालः पञ्चदशवर्षवयस्कः। 'बालो वाप्यूनषोडशः' इति वचनात्। भवनाद्विनिर्गत्य बहिर्भूय। अनेन पथिकत्वमपास्तम्। यौवनमाह—अविकलः पूर्णो यः शारदशशी तस्मान्मनोज्ञः। तद्वद्वा मनोज्ञः। यद्दृष्टिविषये पुरं नारीणां कटाक्षैः संजातनीलनलिनगवाक्षमिव भवति। कुवलयितमित्यत्र तारकादित्वादितच्। कीदृशैः। उन्मादतरलैः कामावेशचपलैः। यदायं रथ्यया याति तदोन्मादान्विता युवत्यो वातायनेनैनं पश्यन्ति। तत्तु तन्नयनैः संजातकुवलयमिव लक्ष्यत इत्याशयः। अनेन विद्यावत्त्वनूतनत्वरम्यत्वादिकमुक्तम् ॥ ११ ॥ विद्यामित्यनेन विद्यावशेनायात इत्यनौद्धत्यं संबन्धार्थं देवरातप्रस्थापनगोपनं च कृतम् ॥ **मालती**। सखि श्रुतं त्वया। एतेनाभिलाषं दर्शयति ॥ **लवङ्गिका**। लवङ्गिकैतद् द्रढयति। अनेन महाकुलीनत्वं न तु कामन्दक्याः कल्पनेति दर्शितम्। **कामन्दकी**। कालातिपातः कालक्षेपः ॥ **क्षिपन्नित्यादि**। संप्रति गगनेऽयं संध्याशङ्खध्वनिः संध्याकालसूचकः शङ्खशब्दो विचरति श्रूयते। किं कुर्वन्। विहगमिथुनानां चक्रद्वन्द्वानां प्रत्यासन्नविरहात्सोत्कण्ठानाम्। निद्रैव मुद्रा। संभाषणप्रतिरोधात्। तां प्रथमतः क्षिपन्हरन्। कीदृशीम्। मदनकलहः सुरतं तस्य च्छेदोऽवसानं तेन सुलभाम्। यद्वा मदनकलहश्छिद्यतेऽनेनेति घञ्। 'पुंसि संज्ञायाम्' इति वा घः। मदनकलहच्छेदो रतं ततः सुलभाम्। सुरतश्रमजनितामित्यर्थः। संप्रति धवलगृहाणां महत्सु गह्वरप्रदेशेषु प्रतिध्वनितो घनतां दधानः। अत एवानिभृतः प्रौढः सन्विचरति। यद्वा प्रथमतः खे विचरति तदनु दिवा केलिकलहच्छेदात्सौधसमीपतरुनिवासकलविङ्कमि-

---

१ तद्; अत्रैव. २ अधीते. ३ सहि लवङ्गिए; कहं महाउलप्पसूदो महाभाओत्ति. ४ वेला. ५ उपान्तौ०, त्तोत्कम्पानां. ६ अनिभृतः.

तदुत्तिष्ठामः । ( इत्युत्तिष्ठति । )

**माल०**—( अपवार्य । ) कथमुपहारीकृतास्मि राज्ञस्तातेन । राजाराधनं खलु तातस्य गुरुकं न पुनर्मालती । ( सास्रम् । ) हा तात त्वमपि नाम ममैवमिति सर्वथा जितं भोगतृष्णया । ( सानन्दम् । ) कथं महाकुलप्रभवोपि स महाभागः । सुष्ठु भणितं प्रियसख्या कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गम इति । अपि नाम तं पुनरपि प्रेक्षिष्ये ।

( कधं उवहारीकिदह्मि राइणो तादेण । राआराहणं क्खु तादस्स गुरुअं ण उण मालदी । हा ताद तुमं वि णाम मम एव्वं ति सव्वधा जिदं भोअतिह्लाए । कधं महाउलप्पभओ सो महाभाओ । सुठ्ठु भणिदं पिअसहीए कुदो वा महोअहिं वज्जिअ पारिजादस्स उग्गमो त्ति । अवि णाम तं उणो वि पेक्खिस्सं । )

**लव०**—अवलोकिते इत इतः । एतेन सोपानेनावतरावः ।

( अवलोइदे इदो इदो । एदिणा सोवाणेण ओदरह्म । )

**काम०**—( अपवार्य । ) साधु संप्रति मया तटस्थयैव मालतीं प्रति निसृष्टार्थदूतीकृत्यस्य लघूकृतो भारः । तथा हि

**वरेऽन्यस्मिन्द्वेषः पितरि विचिकित्सा च जनिता**
**पुरावृत्तोद्गारैरपि च कथिता कार्यपदवी ।**
**स्तुतं तन्माहात्म्यं यदभिजनतो यच्च गुणतः**
**प्रसङ्गाद्वत्सस्येत्यथ खलु विधेयः परिचयः ॥ १३ ॥**

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

**इति धवलगृहो नाम द्वितीयोऽङ्कः ।**

---

थुनानां निद्रामुद्रां क्षिपन्विचरति । ते हि प्रबलशङ्खध्वनिनिबोधिताः कलकलं कुर्वन्तीति भावः ॥ १२ ॥ **मालती** । अपवार्य निभृतम् । 'निगूढभावसंयुक्तमपवारितकं भवेत् ।' इति भरतः । अधुना मनःप्रतिष्ठसाहसवाञ्छया ब्रूते—**लवङ्गिका** । 'संजननेन' इति पाठे संजननं सोपानमेव । **कामन्दकी** । तटस्थतया घटितत्वेन साधुत्वम् । **निसृष्टार्थेति** । 'स्त्रीपुंसयोराशयमादधाना स्वयं च कार्यं प्रतिपादयन्ती । सृष्टार्थिका सा परदारयोगे दूती नियोज्या बहुधा सुधीभिः ॥' इति भरतः । मालतीं प्रतीत्यनेन मदयन्तिकां प्रति विद्यत एवेति प्रकृते निष्पन्नं स्वव्यापारमाह—**वर इत्यादि** । अन्यस्मिन्वरे नन्दने द्वेषः कारितः । पितरि निन्दा जनिता । पुरावृत्तोद्गारैः शकुन्तलादीनां पितृनिरपे-

---

१ वत्से सुखं स्थीयताम्. २ सहि कधं. ३ प्पसूदो, वोप्यसौ. ४ सुभ०. ५ संजवणेण ६ अवलोकिते साधु. ७ ०वृत्तस्य, र्थदूत्यस्य. ८ कुतः. ९ माहाभाग्यं. १० विधिवि०.

## तृतीयोऽङ्कः ।

( ततः प्रविशति बुद्धरक्षिता । )

**बुद्धरक्षिता**—( परिक्रम्य । आकाशे । ) अवलोकिते अपि जानासि क्व भगवतीति । ( अवलोइदे अवि जाणासि कहिं भअवदित्ति ।

**अवलोकिता**—( प्रविश्य[1] ) बुद्धरक्षिते किं प्रमुग्धासि । कोऽपि कालो भगवत्याः पिण्डपातवेलां वर्जयित्वा मालतीमनुवर्तमानायाः । ( बुद्धरक्खिदे किं पमुद्धासि । को वि[2] कालो भअवदीए पिण्डपादवेलं[3] वज्जिअ मालदीं अणुवट्टमाणाए । )

**बुद्ध०**—हुं । त्वं पुनः कुत्र प्रस्थितासि । ( हुं । तुमं उण कहिं पत्थिदासि । )

**अव०**—अहं खलु भगवत्या माधवसकाशमनुप्रेषिता । संदिष्टं च तस्य शंकरगृहासंबद्धं कुसुमाकरं नामोद्यानं गत्वा कुब्जकनिकुञ्जपर्यन्तरक्ताशोकगहने तिष्ठेति । गतश्च तत्र माधवः । ( अहं क्खु भअवदीए माहवसआसं अणुप्पेसिदा । संदिट्ठं अ तस्स[4] संकरघरसंबद्धं[5] कुसुमाअरं णाम उज्जाणं गदुअ कुब्जअणि[6]उञ्जपेरन्तरत्तासोअगहणे चिट्ठेत्ति । गदो अ तत्थ माहवो । )

---

क्षात्मदानकथनैः कार्यपरिपाटी कथिता । माहात्म्यं महत्त्वं तस्य स्तुतं यत्कुलाद्यच्च गुणात्तदपि । इति हेतोः । अनन्तरं वत्सस्य परिचयः समागमो विधातुः कर्तव्यः । एतेनाङ्कावतारोऽपि सूचितः । प्रसङ्गाद्व्याजादन्यापदेशादिति सर्वत्र योज्यम् ॥१३॥ **धवलगृह इति** । धवलगृहोपलक्षित इत्यर्थः ॥

असूत यं रत्नधरोऽनवद्योऽनवद्यरूपा दमयन्तिका च ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमद्द्वितीयो रसराशिवासः ॥

इति द्वितीयोऽङ्कः ।

---

परिचयस्यान्योन्यदर्शनालापादिरूपसमागमात्मकतया तदारम्भस्य प्रतिज्ञातत्वेन तन्निर्वाहिकाया मदयन्तिकायाः सूचनाय तत्संबन्धाद्बुद्धरक्षिताप्रवेशः । यद्वा नियुक्तैव मया बुद्धरक्षितेत्यनेन प्रथमाङ्के द्वितीये च मालतीं प्रति लघूकृतो भार इत्यनेन सूचितो बुद्धरक्षितायाः प्रवेशः ॥ **अवलोकिता** । अत्र प्रमुग्धा प्रस्मृता । पिण्डपातः सौगतान्नम् । कोऽप्यकालो निषिद्धकालः । तथा चैव सदैव मालतीसमीपे भगवती वर्तत इत्यर्थः ॥ **बुद्धरक्षिता** । हुमनुमतौ स्मरणे वा । **अवलोकिता** । अत्र कुब्जकं 'कूआँ' इति ख्यातस्तरुविटपः । कुब्जकव्याप्तरक्ताशोकवनस्य दुःसंचारत्वाद्विजनत्वं सूचितम् । पर्यन्तो मध्यम् । 'काननं गहनं वनम्' इत्य-

---

१ प्रविश्य अव०; उपसृत्य. २ को विअ (क इव)., ३ पारणवेलं विसज्जिअ (विसृत्य). ४ तस्स जधा. ५ संकरउरसंबन्धि कुसुमाअरुज्जाणं. ६ कुअणि०.

बुद्ध०—किमिति तत्र माधवोनुप्रेषितः । ( [1]किं त्ति तत्थ माहवो अणुप्पोसिदो । )

अव०—अद्य कृष्णचतुर्दशीति भगवत्या समं मालती शंकरगृहं गमिष्यति । तत एवं किल सौभाग्यं वर्धेत इति देवताराधननिमित्तं स्वहस्तकुसुमावचयमुद्दिश्य लवङ्गिकाद्वितीयां मालतीं भगवत्येव कुसुमाकरोद्यानमानेष्यति । ततोऽन्योन्यदर्शनं भवत्विति । त्वं पुनः क्व प्रस्थिता । ( अज्ज किसणचउद्दसित्ति भअवदीए[2] समं मालदी संकरघरं[3] गामिस्सदि । तदो एव्वं किल सोहग्गं वड्ढदि त्ति देवदाराहणणिमित्तं सहत्थकुसुमावअअं उद्दिसिअ लवङ्गिआदुदीअं मालदिं भवअदी जेव्व कुसुमाअरुज्जाणं आणइस्सदि । तदो अण्णोण्णदंसणं होदु[4] त्ति । तुमं उण कहिं पत्थिदा )

बुद्ध०—अहं खलु शंकरगृहमेव प्रस्थितया प्रियसख्या मदयन्तिकयामन्त्रिता । अतो भगवत्याः पादवन्दनं कृत्वा तत्रैव गच्छामि । ( अहं क्खु संकरघरं[3] जेव्व पत्थिदाए पिअसहीए मदअन्तिआए आमान्तिदा । अदो[5] भअवदीए पादवन्दणं कदुअ तहिं जेव्व गच्छामि )

अव०—त्वं खलु भगवत्या यस्मिन्प्रयोजने नियुक्ता तत्र को वृत्तान्तः । ( तुमं क्खु भअवदीए जस्सिं पओअणे निउत्ता तत्थ को वुत्तन्तो । )

बुद्ध०—मया खलु भगवत्याः समादेशेन तासु तासु विस्रम्भकथास्वीदृशस्तादृश इति मकरन्दस्योपरि प्रियसख्या मदयन्तिकाया दूरमारोपितः परोक्षानुरागः । एष च तस्या मनोरथोऽपि नाम तं प्रेक्ष इति । ( मए क्खु भअवदीए समादेसेण तासु तासु विस्सम्भकधासु ईरिसो तारिसो त्ति मअरन्दस्स उवरि पिअसहीए मदअन्तिआए दूरं[6] आरोविदो परोक्खाणुराओ[7] । एसो अ से मणोरहो अवि णाम तं पेक्खामि त्ति । )

---

मरः ॥ **अवलोकिता** । अत्र किलालीके सौभाग्यवृद्धिप्रयोजनस्य व्याजत्वात् । **एवमिति** । स्वहस्तत्रोटितपुष्पैर्देवताः पूजयेत्यर्थः । **आनेष्यतीति** । मालतीमाधवयोरतर्कितदर्शनेन विजने तयोरनुरागो वर्धतामिति भगवत्या आशय इति भावः ॥ **बुद्धरक्षिता** । अत्रामन्त्रिताहूता । गच्छामि । मदयन्तिकास्थानमिति शेषः । **अवलोकिता** । मकरन्दमदयन्तिकापरिणये किं वृत्तमिति भावः । **बुद्धरक्षिता** । अत्र विस्रम्भो विश्वासः । ईदृशस्तादृश इति मकरन्दगुणप्रकाश-

---

१ अवलोइदे किं. २ जणणीए. ३ संकरउरं. ४ हाविस्सदि. ५ तदो. ६ तहा दूरं. ७ मणो०

**अव०**—साधु बुद्धरक्षिते साधु (साहु बुद्धरक्खिदे साहु[1]।)

**बुद्ध०**—एहि गच्छावः। (ऐहि गच्छह्म।)

(इति निष्क्रान्ते[2]।)

(**प्रवेशकः**।)

---

(ततः प्रविशति कामन्दकी।)

**कामन्दकी**—

**तथा विनयनम्रापि मया मालत्युपायतः।**
**नीता कतिपयाहेन[3] सखीविस्रम्भसेव्यताम्॥ १॥**

संप्रति हि।

**व्रजति विरहे वैचित्त्यं[4] नः प्रसीदति संनिधौ**
**रहसि रमते प्रीत्या वाचं[5] ददात्यनुवर्तते[6]।**
**गमनसमये कण्ठे लग्ना निरुध्य[7] निरुध्य मां**
**सपदि शपथैः प्रत्यावृत्तिं प्रणम्य च याचते॥ २॥**

इदं च तत्र साधीयः प्रत्याशानिबन्धनम्[8]।

**शाकुन्तलादीनितिहासवादा-**
**न्प्रस्तावितानन्यपरैर्वचोभिः।**
**श्रुत्वा मदुत्सङ्गनिवेशिताङ्गी**
**चिराय चिन्तास्तिमितत्वमेति॥ ३॥**

---

नमित्यर्थः। तस्या मदयन्तिकायाः। तं मकरन्दम्॥ **अवलोकिता**। त्वया भगवतीभारो लघूकृत इति भावः॥ **तथेत्यादि**। तथा तेन प्रकारेण विनयनम्रानुद्धताकारतया नम्रा मालती कतिपयदिनैरुपायाच्छकुन्तलादिकथया मया सख्यामिव विश्वासबुद्धिप्रवर्तनेन सेव्यतां शालीनत्वादिपरिहारं नीता। अत्रापिशब्द एवार्थे। यद्वा अविनयनम्रापीत्यकारप्रश्लेषः। कतिपयाहोभिरित्यत्राहो जातिपरतया न समासान्तविधिः॥ १॥ सखीचिह्नं दर्शयति—**व्रजतीत्यादि**। संप्रति यतोऽस्माकं विरहे दौर्मनस्यं गच्छति नः संनिधौ प्रसन्ना भवति। विजने रमते। मया सहेति शेषः। प्रीत्या दायं सोल्लुण्ठनमुत्तरं ददाति। यद्वा दायं कर्पूरादिदेयं ददाति। गमनसमये मामनुवर्ततेऽनुगच्छति। ततः कण्ठे लग्ना सती पुनःपुनर्निरुध्य मां शपथैः प्रणम्य तत्क्षणमेव प्रत्यावृत्तिं पुनरागमनं याचते च। सख्योऽप्येवं कुर्वन्ति। अतः सखीत्वं गता सा मे मनोगतं करिष्यतीति भावः। 'देये दाने च दायः स्याद्दायः सोल्लुण्ठभाषणे।' इति मेदिनीकरः॥ २॥ साधीयः साधु। निबन्धनं कारणम्। **शाकुन्तलादीनित्यादि**। इयं शाकुन्तलादीनितिहासवादान्पुरावृत्तान्यन्यपरैर्वचोभिरन्यकथाप्रसङ्गेन प्रस्तावयति। शकुन्तलादिभिः पितृनि-

---

१ साहु। एहि गच्छह्म. २ परिक्रम्य नि. ३ कतिपयाहोभिः. ४ वैचित्र्यम्. ५ वदति. ६ दायं. ७ निरुध्य च मां बलात्. ८ प्रीत्याशा.

तदद्य माधवसमक्षमुत्तरमुपक्रमिष्ये । ( नेपथ्याभिमुखमवलोक्य । ) वत्से इत इतः ।

( ततः प्रविशति मालती लवङ्गिका च । )

**मालती—**( स्वगतम् । ) कथमुपहारीकृतास्मि ( कधं उवहारी किदम्हि ) इत्यादि पूर्वोक्तं पठति ।

**लवङ्गिका—**सखि एष खलु मधुरमधुरसार्द्रार्द्रमञ्जरीकवलनकेलिककोकिलकुलकोलाहलाकुलितसहकारशिखरोड्डीनचटुलचञ्चरीकनिकरव्यतिकरोद्दलितदलकरालचम्पकाधिवासमनोहरो मरालमांसलजघनपरिणाहोद्वहनमन्थरोरुभरविसंष्ठुलस्खलितचरणसंचारमसृणगमनोऽपनीतस्वेदशीकरसुधाबिन्दूयमानमुग्धमुखचन्द्रचन्दनायमानशीतलस्पर्शस्त्वां परिष्वजति कुसुमाकरोद्यानमारुतस्तदेहि प्रविशावः । ( सहि एसो क्खु महुरमहुरसोल्लोल्लमञ्जरीकवलणकेलिकलकोइलउलकोलाहलाउलिदसहआरसिहरुड्डीणचडुलचञ्चरीअणिअरव्वइअरुद्दलिददलकरालचम्पआहिवासमणोहरो मरालमंसलजहणपरिणाहुव्वहणमन्थरोरुभरविसंठुलक्खलिदचलणसंचारमसिणगमणोवणीदसेअसीअरसुहाबिन्दुईज्जन्तमुद्धमुहचन्दचन्दणाअमाणसीअलफंसो तुमं परिस्सअदि कुसुमाअरुज्जाणमारुदो ता एहि पविसह्म । )

( परिक्रम्य प्रविशतः । )

---

रपेक्षमेवात्मा दत्त इति भगवति किं सत्यमिति मां पृच्छतीति भावः । अत्रान्यपदेनाखेटकाश्रमवर्णनशुश्रूषादेः साक्षादुद्देश्यत्वं साहसकरणं चाशयस्थमिति सूचितम् । एवमिति श्रुत्वा चेतोधृतनायकानुस्मरणान्मदीयक्रोडे निवेशितशरीरा भवति । ततः किमेवं करोमीति चिन्तास्तिमितत्वं निश्चलत्वं चिरकालमेति । चिन्तेत्युपलक्षणम् । निःश्वासादिनापि लक्षिता भवतीत्यर्थः । यद्वा मदिति पञ्चमी । मत्सकाशाच्छ्रुत्वैवं करोतीत्यर्थः ॥ ३ ॥ समक्षं प्रत्यक्षम् । उत्तरमनन्तरकृत्यम् ॥ इत आगच्छेति शेषः ॥ **लवङ्गिका** । अत्रैव खलु कुसुमाकरोद्यानमारुतस्त्वां परिष्वजतीति संबन्धः । कीदृशः अतिमधुरमधुरसेनात्यार्द्राया मञ्जर्याः कवलने भक्षणे केलिः क्रीडा तया कलमव्यक्तध्वानं यत्कोकिलकुलं तस्य कोलाहलेनाकुलितादतिसुरभिचूतशिखरादुड्डीनश्चटुलो मनोज्ञो यो भ्रमरसमूहस्तस्य संपर्केण विकसितपुटस्यात एव करालस्य दन्तुरस्य चम्पकस्याधिवासेन गन्धेन मनोहरः । एतेन शैत्यसौगन्ध्ये दर्शिते । सहकारमञ्जरीणां कोकिलाकुलत्वं भ्रमरस्य तत्त्यागे हेतुः । मरालो हस्ती हंसो वा । तस्येव मांसलजघनपरिणाहोद्वहनेन मन्थरावलसौ यावूरू । त्वदीयाविति भावः । तयोर्गौरवेण विसंष्ठुलं विषमं यथा तथा स्खलितस्य चरणस्य संचारेण मसृणं मन्दं

---

१ ष्यामः. २ महुरसाद्द. ३ कवल केलि. ४ मरालजहण. ५ संचलणोवणीद. ६ बिन्दुज्जलमुद्ध. ७ तासहि इदो परिक्कमामो.

( ततः प्रविशति माधवः। )

**माधवः**—( सहर्षम्। ) हन्त परागता भगवती। इयं हि मम

**आविर्भवन्ती प्रथमं प्रियायाः सोच्छ्वासमन्तःकरणं करोति।**
**संतापदग्धस्य शिखण्डियूनो वृष्टेः पुरस्तादचिरप्रभेव॥ ४॥**

( दृष्ट्वा ) अये लवङ्गिकाद्वितीया मालत्यपि।

**आश्चर्यमुत्पलदृशो वदनामलेन्दु-**
**सांनिध्यतो मम मुहुर्जडिमानमेत्य।**
**जात्येन चन्द्रमणिनेव महीधरस्य**
**संधार्यते द्रवमयो मनसा विकारः॥ ५॥**

---

यद्गमनं तेनोपनीतेन स्वेदशीकरेणामृतबिन्दुसदृशे मुग्धमुखचन्द्रे। अर्थात्तव। चन्दनायमानः शीतलः स्पर्शो यस्य सः। अनेन मान्द्यं शैत्यमपि ध्वनितम्। 'सहकारोऽतिसौरभः' इत्यमरः। 'चञ्चरीकोऽलिगीतयोः' इति धरणिः। 'करालो दन्तुरे' इत्यमरः। 'मरालो हंसगजयोर्मरालो विस्तृते शुभे।' इति विश्वः। तेन मरालस्य विस्तृतस्य शुभस्येति वा योज्यम्। 'मसृणं चिक्कणं समम्' इत्यमरः॥ **माधवः**। हन्त हर्षे। परागतायाता॥ **आविरित्यादि**। इयं भगवती प्रियायाः पुरस्तादाविर्भवन्ती प्रथमं मम चित्तं सविकासं करोति। कीदृशस्य। संतापदग्धस्य कामाग्निदग्धस्य। यथा विद्युद्वृष्टेः पुरस्तादाविर्भवन्ती मयूरतरुणस्य चित्तं सोच्छ्वासं करोति। निदाघतप्तस्य युवग्रहणमुन्मादहेतुद्योतनाय। प्रियाया इत्यत्र 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी। अत एव प्रियायाः प्रथममिति न योजना। प्रथमपदयोगेषष्ठ्यभावात्। अनेन प्रियाप्यागमिष्यतीति सूचितम्॥ ४॥ मालतीत्यत्रापिशब्दो गौरवे। निपातानामनेकार्थत्वात्। **आश्चर्यमित्यादि**। अस्याः पद्माक्ष्या मुखनिर्मलचन्द्रसंनिधौ वारंवारं जडिमानं सर्वकार्याप्रतिपत्तिरूपं प्राप्य जाड्येन जडिम्ना करणेन मम मनसा विकारः स्वरूपान्यथाभावः संधार्यते। कीदृशः। द्रवमय इव द्रवमयः। हृदयद्रवीकरणात्स्वेदादिमत्त्वाच्च। अन्यस्याः समागमाद् द्रवमयो विकारोऽस्यास्तु सान्निध्यादेवेति कर्मातिशयदर्शनादाश्चर्यम्। यदाह भरतः—'कर्मातिशयनिर्वृत्तो भवेद्विस्मयसंभवः। सिद्धिस्थानेष्वसौ साध्यः प्रहर्षपुलकादिभिः॥' यथामलेन्दुसंनिधौ जडिमानं शैत्यमासाद्य शैत्येनैव चन्द्रकान्तेन शैलस्य द्रवमयो विकारो द्रवत्वं संधार्यते। अत्र महीधरसादृश्येन माधवस्य धीरत्वादिगुणावष्टम्भसंभार उक्तः। 'जात्येन' इति पाठे जात्येन जातिमता। उत्कृष्टेनेति यावत्। चन्द्रकान्तेनेत्यस्य परं विशेषणं द्रष्टव्यम्। यद्वा। मनोविशेषणमपि। जात्ये-

---

१ निदाघसंतप्तशि०. २ दिष्ट्या. ३ पुनर. ४ जाड्येन. ५ संचा०. ६ ध्रुवमयो. ७ मनसः

संप्रति रमणीयतरा मालती ।

**ज्वलयति मनोभवाग्निं मदयति हृदयं कृतार्थयति चक्षुः ।**
**परिमृदितचम्पकावलिविलासललितालसैरङ्गैः ॥ ६ ॥**

**मालती**—सखि अस्मिन्कुब्जकानिकुञ्जे कुसुमान्यवचिनुवः ।
( सहि इमस्सिं कुज्जअणिउञ्जे[1] कुसुमाइं अवचिणुह्म । )

**माधवः**—

**प्रथमंप्रियावचनसंश्रवस्फुर-**
**त्पुलकेन संप्रति मया विडम्ब्यते[3] ।**
**घनराजिनूतनपयःसमुक्षण-[4]**
**क्षणबद्धकुड्मलकदम्बडम्बरः ॥ ७ ॥**

**लव०**—सखि एवं कुर्वः । ( सहि एव्वं करेह्म । )

( पुष्पावचयं नाटयतः । )

**माधवः**—अपरिमेयाश्चर्यमाचार्यकं भगवत्याः ।

**मालती**—सखि इतोऽप्यन्यस्मिन्नवचिनुवः । ( सहि इदो वि अण्णस्सिं[6] अवच्चिणुह्म । )

---

नाभिजनवतापि । अत्रापिरध्याहार्यः । अत एवाश्चर्यम् ॥ ५ ॥ **संप्रतीति** । पुरा कामवेगस्याङ्कुरावस्थया रमणीया । अधुना तु तस्य पल्लवितत्वेन रमणीयतरा ॥ इदमेव स्फोटयति–**ज्वलयतीत्यादि** । संप्रति मालत्यङ्गैः कामाग्निमुद्दीपयति । चित्तं सोन्मादं करोति । नेत्रं कृतप्रयोजनं विधत्ते । ममेति शेषः । कीदृशैः । परिमृदितचम्पकमालावद्विलासैर्ललितैश्च अलसैर्मन्दैर्लज्जया निभृतत्वेनेति भावः । ' यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम् । उपयातविशेषो यः स विलासो मतो बुधैः ॥ इति भरतः । ' हस्तपादाङ्गविन्यासभ्रूनेत्रोष्ठप्रयोजितम् । सुकुमारविधानेन ललितं तन्निगद्यते ॥ ' इति भरतः । यद्वा । परिमृदितचम्पकमालाविलासानि म्लानानि । ललितानीतस्ततः क्षिप्तानि । अलसानि मन्दानि । ततस्त्रिपदकर्मधारयः । ललधातुश्चाञ्चल्यार्थेऽपि धातोरनेकार्थत्वात् । ' लुलितालसैः ' इति पाठे लुलितानीतस्ततः क्षिप्तानीत्यर्थः ॥ ६ ॥ **प्रथमेत्यादि** । संप्रति मया मेघमालानवजलसेचनेन क्षणबद्धकलिकनीपस्य डम्बरः साम्यं प्रपञ्चो वावलम्ब्यते । कीदृशेन । प्रथमप्रियावचनसंश्रवणाद्व्यक्तरोमाञ्चेन । संस्तवेति पाठे संस्तवः परिचयः । तदनेन दृष्टान्तेन सर्वाङ्गीणं पुलकं तस्य च स्थैर्यमुक्तम् । ' घनजीमूतमुदिर ' इत्यमरः ॥ ७ ॥ **माधवः अपरिमेयेत्यादि** । पुष्पत्रोटनकाले मालतीस्तनमुकुलादिदर्शनादानन्दसंदोहेन माधवस्य संतोषप्रकाश इति

---

१ कुब्ज. २ प्रथमं. ३ अवलम्ब्यते. ४ समुच्छ्वसत्. ५ प्राति० ६ अवरस्सिं०.

**कामन्दकी**——( मालतीं परिष्वज्य । ) अयि विरम विरम । निःसहासि जाता । तथाहि ।

**स्खलयति वचनं ते स्रंसयत्यङ्गमङ्गं**
**जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् ।**
**मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद-**
**स्त्वयि विलसति तुल्यं वल्लभालोकनेन ॥ ८ ॥**

( मालती लज्जां नाटयति । )

**लव०**——शोभनं भगवत्याज्ञप्तम् । ( सोहणं भअवदीए आणत्तं । )

**माधवः**——हृदयंगमः परिहासः ।

**काम०**——तदास्यताम् । किंचिदाख्येयमाख्यातुकामास्मि ।

( सर्वा उपविशन्ति । )

**काम०**——( मालत्याश्चुबुकमुन्नमय्य । ) शृणु चित्रमिदं सुभगे ।

**मालती**——अवहितास्मि । ( अवहिदह्मि । )

**काम०**——अस्ति तावदेकदा प्रसङ्गतः कथित एव मया माधवाभिधानः कुमारो यस्त्वमिव मामकीनस्य मनसो द्वितीयं निबन्धनम् ।

**लव०**——स्मरामः । ( सुमरामो । )

---

भावः ॥ अज्ञातमाधवसंनिधानां मालतीं श्रमोपन्यासव्याजेन कामन्दकी श्लिष्टनर्मवचनमाह—**अयीत्यादि** । निःसहा परिश्रान्तासि त्वमतो विरम त्यज खेदमिति शेषः । यद्वा विरम पुष्पावचयात् । उपविशेति भावः । पक्षे निःसहा कामाद् ग्लाना त्वं जातासि ततो विशेषेण रमस्व । आशंसायां लोट् ॥ **स्खलयतीत्यादि** । हे सुभ्रु शोभनभ्रूयुते वल्लभालोकनेन समं यथा तथा त्वयि खेदो विलसति स्वव्यापारं कुरुते । यथा वल्लभालोकनं तथा खेद इति भावः । पक्षे वल्लभेनावलोकनं खेदश्च । अत एव सर्वथेति तुल्यत्वम् । तदेवाह—खेदो वचनं तव स्खलयति । प्रत्यङ्गं संश्रयत्याश्रयति । 'स्रंसयति' इति पाठे शिथिलयति । आस्यशशिनो निःसरत्स्वेदकणाञ्जनयति । नयनद्वयं मुकुलयति च । 'रतान्ते च श्रमे चैव सुखसम्भोगभावने । गन्धे स्पर्शे च हर्षे च मुकुला दृष्टिरिष्यते ॥' इति भरतः । वल्लभालोकनेऽप्येवं भवति । इह वल्लभालोकनं त्वयि वर्तत इति भावः ॥ ८ ॥ **लवङ्गिका** । विरम्यतामित्याशयः ॥ **कामन्दकी** । चिबुकमधरतलावयवमुन्नमय्योत्तोल्य । सुभग इत्यनेन माधवचित्ताकर्षणेन त्वमेव सौभाग्यवतीति ध्वनितम् । **कामन्दकी** । कुमार इत्यनेन विस्मय उक्तः । निब-

---

१ यतः. २ संश्र०. ३ ल्लासि०. ४ लज्जते. ५ विचित्रम्. ६ प्रसङ्गात्.

**काम०**—स खलु [1]मदनोद्यानयात्रादिवसात्प्रभृति दुर्मनायमानः परवानिव शरीरोपतापेन । तथा हि ।

**यदिन्दावानन्दं प्रणयिनि जने वा न भजते**
**व्यनक्त्यन्तस्तापं तदयमतिधीरोऽपि विषमम् ।**
**प्रियङ्गुश्यामाङ्गप्रकृतिरपि चापाण्डुमधुरं**
**वपुः क्षामं क्षामं वहति [2]रमणीयश्च भवति ॥ ९ ॥**

**लव०**—एतदपि तस्मिन्नवसरे भगवतीं त्वरयन्त्यावलोकितयोदीरितमासीदस्वस्थशरीरो माधव इति । ( [3]ऐदं वि तस्सिं अवसरे भअवदिं तुवराअन्तीए अवलोइदाए उदीरिदं आसि [4]अस्सत्थशरीरो माहवो त्ति । )

**काम०**—यावद[5]शृणवं मालत्येवास्य मन्मथोन्मादहेतुरिति । ममापि स एव निश्चयः । कुतः ।

**अनुभवं वदनेन्दुरुपागमन्नियतमे[6]षं यदस्य महात्मनः ।**
**क्षुभितमुत्कलिकातरलं मनः पय इव स्तिमितस्य महोदधेः ॥ १० ॥**

**माधवः**—अहो उपन्यासशु[7]द्धिः । अ[8]हो महत्त्वारोपणे यत्नः । अथ वा ।

**शास्त्रेषु निष्ठा सहजश्च बोधः**
**प्रागल्भ्यमभ्यस्तगुणा च वाणी ।**
**काला[9]वबोधः प्रतिभानवत्व-**
**मेते गुणाः कामदु[10]घाः क्रियासु ॥ ११ ॥**

---

न्धनमालम्बनम् । **कामन्दकी** । परवानस्वतन्त्रः ॥ **यदित्यादि** । शरीरोपतापेनायं परवानिव । यद्यस्माच्चन्द्रे प्रणयिनि जने वानन्दं प्रीतिं न भजते न लभते । तत्तथार्थे । तथापि धैर्ययुक्तोऽप्ययं दुःसहमन्तस्तापं प्रकाशयति । फलिनीश्यामशरीरस्वभावोऽप्यापाण्डुमधुरमीषत्पाण्डु मनोहरमतिक्षीणं वपुर्वहति च यथा यथा तथा तथा । रम्यश्च भवति । अपिर्विस्मये । चकारः समुच्चये । अपि चेति समस्त एव समुच्चये वा । तदिह रागावस्थायां यथोचितं विधेहीत्याशयः । 'प्रियङ्गुः फलिनी' इत्यमरः ॥ ९ ॥ **कामन्दकी** । यावदवधारणे । मालत्येव हेतुरित्येवाशृणवमित्यर्थः । अशृणवमश्रौषम् ॥ **अनुभवमित्यादि** । अयं वदनेन्दुरस्य महात्मनो निश्चितमेवानुभवमुपागमदुपागतः । यत्कारणादस्य स्तिमितस्य स्थिरस्य मनो विचलितम् । तदेवं ममापि स एव निश्चयः । किंभूतम् । उत्कण्ठाचपलम् । यथा स्तिमितस्य निश्चलस्य महात्मनोऽगाधस्य समुद्रस्य चन्द्रानुभवात्कल्लोलचपलं जलं क्षुभ्यति । 'कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु ।' इति मेदिनीकरः ॥ १० ॥ **माधवः** । शुद्धिरक्लिष्टता ॥ दूतीगुणानाह—**शास्त्रेष्वित्यादि** । निष्ठेदमित्थ-

---

१ मन्मथो०. २ च मनोज्ञश्च. ३ एवं. ४ जह अस्स०. ५ यावदहं. ६ एव. ७ बुद्धिः. ८ अहो मम च. ९ कालानुरोधः. १० कामदुहः.

**काम०**—[1]अतस्तेन जीवितादुद्विजमानेन दुष्करमपि न किंचिन्न क्रियते । [2]असौ हि

> **धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते**
> **मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः ।**
> **[3]दाहप्रेम्णा सरसबिसिनीपत्रमात्रा[4]न्तराय-**
> **स्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ १२ ॥**

**माधवः**—अन्य एवाक्षुण्णः कथाप्रकारो भगवत्याः ।

**मालती**—( स्वगतम् ) अतिदुष्करं करोति । ( [5]अदिदुक्करं करेदि । )

---

मेवेति निर्णयः । तत्र सहजो बोधो नैसर्गिकं ज्ञानम् । ज्ञाने सति प्रागल्भ्यं वावदूकता । अभ्यस्ता गुणा श्लेषादयो यत्र तादृशी वाणी । यद्वा अभ्यस्तमभ्यासस्तदनुगुणा वाणी च । कालावबोधः समयज्ञानम् । प्रतिभानमनुरूपं तात्कालिकस्मरणं तद्योगित्वम् । एते गुणाः सर्वकर्मसु प्रकरणाद् दूतीकृत्येषु वा कामदुहोऽभिलषितप्रदाः । तत्र शास्त्रनिष्ठया पटुत्वं प्रागल्भ्येन धाष्ट्र्य प्रतिभानवत्त्वेनेङ्गितज्ञत्वं दूतीगुण उक्तम् । यदाह—' पटुता धृष्टता चेतीङ्गितज्ञत्वं प्रतारणम् । देशकालज्ञता चैव दूतीकृत्ये गुणा मताः॥ ' कामदुह इत्यत्र सत्स्वित्यादिना क्विप् ॥ ११ ॥ **कामन्दकी** । जीवितादुद्विजमानेनेति ' प्रद्वेषः प्राणितव्येषु ' इति भरतानुसरणम् । न क्रियत इति पाठे नः शिरश्चालने ॥ दुष्करमेवाह—**धत्त इत्यादि** । तेन दुष्करं क्रियते । यस्मादयं नवाम्रे कलिकायुक्ते ध्वनत्कोकिले मृत्यवे मरणाय नेत्रं धत्ते । बकुलगन्धबन्धोर्वातस्य वर्त्मनि शरीरं क्षिपति स्थापयति । अत्र मार्गपदेनानागतेन वायुना येन पथा समागन्तव्यं तत्सूचितम् । बकुलामोदपदेन स्वकार्यक्षमता गर्भपदेन बाह्यान्तरभावनादृढतोक्ता । दावप्रेम्णा वनवह्निप्रीत्या चन्द्रकिरणान् वारंवारं श्रयति । एतेन चन्द्ररश्मीनां दाहकत्वमुक्तम् । अत्र प्रेमपदेन नायिकानुरागस्य च विरोधिविमर्शशून्यत्वं तृतीयया चाङ्गसंगहेतुत्वं च ध्वनितम् । कीदृशः । सरसपद्मिनीपत्रमात्रान्तरितो ग्लायमानकायः । सर्वत्र मृत्यव इति योज्यम् । तथा च मरणाय कृतोद्यम इति भावः । यदा अन्तरायो मरणे विघ्नः । तत्र पद्मिनीपत्रहेतुत्वम् । तदिह चन्द्रपादादीनां कामोद्दीपकतयानर्थहेतुत्वेन विप्रलम्भस्योत्कर्षः सूचितः । किं च मनोविकार इन्द्रियजन्य इत्यनेनेन्द्रियाणां शान्तिः कृता । नवचूतदर्शनेन नेत्रस्य । चूतैरानद्धत्वमुकुलितत्वाभ्यामतिदुःखदत्वम् । कोकिलरवाकर्णनेन श्रोत्रस्य । बकुलगन्धसंबन्धेन घ्राणस्य । वायुचन्द्रकरयोः स्पर्शेन त्वच इति ॥ १२ **माधवः** । अक्षुण्णोऽन्यानभूतः कथाप्रकारः कथनक्रमः ॥ **मालती** । बालचूतदर्शनादेरतिपीडाकरत्वेन माल-

---

१ यतः. २ तथा हि. ३ दाव. ४ न्तोत्तरीयः. ५ एव्वं...करेदि सो.

**काम०**—तदेवं प्रकृत्या सुकुमारः कुमारः कदाचिदप्यन्यत्रापरिक्लिष्टपूर्वस्तपस्वी । यतोऽधुना शक्यमनेन मरणमप्यनुभवितुम् ।

**मालती**—( जनान्तिकम् ) सखि आत्मनः कारणात्तस्य सर्वलोकालंकारभूतस्य किमप्याशङ्कमानया भगवत्या भीतायितास्मि । तत्किमिदानीमत्र प्रतिपत्स्ये । ( सहि अत्तणो कारणादो तस्स सव्वलोआलंकारभूदस्स किं वि आसकन्तीएं भगवदीए भीदाविदह्मि । ता किं दाणिं एत्थ पडिवज्जिस्सं । )

**माधवः**—दिष्ट्या अनुकम्पितोऽस्मि भगवत्या ।

**लव०**—भगवत्येवंवादिनीत्याख्यायते । अस्माकमपि भर्तृदारिका भवनासन्नरथ्यामुखमुहूर्तमण्डनस्य तस्यैव बहुशोऽनुभूतदर्शना भूत्वा रविकिरणाश्लिष्टमुग्धकमलिनीकन्दसुन्दरावयवशोभाविभावितानङ्गवेदनाधिकतररमणीयापि परिजनं दुनोति । नाभिनन्दति केलिकलाः । केवलं कमलायमानकान्तहस्तपर्यस्तगण्डमण्डला दिवसं गमयति । अपि च विकासितारविन्दमकरन्दनिःस्यन्दसुन्दरेण दरदलितकुन्दमाकन्दमधुबिन्दुसंदोहवाहिना भवनोद्यानपर्यन्तमारुतेनोत्ताम्यति । ( भअवदी एव्वंवादिणि त्ति आचक्खीअदि । अह्माणं वि भट्टिदारिआ

त्यापि ज्ञानादेवमुक्तमिति भावः । **कामन्दकी** । अन्यत्रेत्यादिना त्वय्येव प्रथममनुरक्तोऽयमिति दर्शितम् । तपस्स्व्यनुकम्प्यः । ' तपस्वी तापसे चानुकम्प्ये च' इति विश्वः । अनेन वैदेशिकोऽयं वराक इति मयैतदुच्यते न कारणादित्युक्तम् । शक्यमिति । तथा च त्वमनुरागिणी भवेत्यर्थः ॥ **मालती** । अत्रात्मनो मम । किमपीत्यमङ्गलतयावचनीयं मरणमित्यर्थः । भीतायितेत्यत्राचारे क्यङ् । **किमिति** । तज्जीवनाय ममापि तत्रानुराग इति वक्तुमुचितमपि कुमारीत्वेनानुक्तमतस्त्वं वदेति भावः । कामन्दकीं प्रति । जनान्तिकमिदम् । माधवश्च गुप्तः । स श्रुत्वाह—दिष्ट्येत्यादि ॥ **लवङ्गिका** । अत्र एवंवादिनीत्यत्र कामावस्था गुरुजने लज्जया वक्तुमनर्हापि मालतीनिमित्तमाधवावस्थाश्रवणात्साापि तन्निमित्ता कथ्यत इति भावः । अस्माकं भर्तृदारिका परिजनं दुनोतीत्यन्वयः । आश्लिष्टं स्पृष्टम् । मुग्धो बालः । कन्दं बिसम् । बालकमलिनीमूलं मृदुतरं रविकरस्पर्शान्म्लानं च भवति । तदनेन दृष्टान्तेन निःसहत्वतनुत्वे अवयवानामुक्ते । तद्दशायामपि सौन्दर्यद्योतनाय सुन्दरपदम् । अधिकतररमणीयापीत्यनेन कामालिङ्गितकायस्य कान्तिप्रकर्ष उक्तः । अत एवापिर्विस्मये । अतिकान्तस्य सुखजनकत्वनैयत्येन दुःखजनकत्वे चित्रात् । दुःखप्रकारमाह—नाभीत्यादि ।

१ मच्च (मर्त्य). २ आसंकमाणा भूद्यांविद्दा विअ न आणामि किं पडिवज्जिस्सं—स्सदि—त्ति

भवणासण्णरच्छामुहमुहुत्तमण्डणस्स तस्स उज्जेव्व बहुसो अणुभूददंसणा भविअ रविकिरणासिलिट्ठमुद्धकमलिनीकन्दसुन्दरावअवसोहाविभाविदाणङ्गेवअणाधिअदररमणिआ वि परिअणं दुम्मेदि । णाहिणन्दइ केलिकलाओ । केवलं कमलाअन्तकन्तहत्थपल्हत्थगण्डमण्डला दिअसं गमेदि । अवि अ विअसिदारविन्दमअरन्दणीसन्दसुन्दरेण दरदलिदकुन्दमाअन्दमहुबिन्दुसंदोहवाहिणा भवणुज्जाणपेरन्तमारुदेण उत्तम्मदि । )

यच्च तस्मिन्यात्रादिवसे निजमहोत्सवाभ्युदयदर्शनप्रतिपन्नरूपस्य भगवतः कामस्येव कामकाननालंकारकारिणस्तस्य विविधविभ्रमाभिराममनुरूपानुरागानुबन्धमहार्घीकृतयौवनारम्भमन्योन्यदृष्टिविनिपातवञ्चनावसरखिद्यमानचित्तत्वरमाणकौतूहलं समुल्लसितसाध्वसस्तम्भमन्थरावयवप्रतिलग्नस्वेदपुलकोत्कम्पसुन्दरमानन्दितसखीजनं प्रियसख्या परस्परावलोकनसुखं समासादितं ततः प्रभृति सविशेषदुःसहायासविजृम्भमाणोद्दामदेहदाहदारुणं दशापरिणाममनुभवन्ती मुहूर्तमात्रसंप्राप्तपूर्णचन्द्रोदयेव बालकमलिनी प्रम्लायति । ( जं अ तस्सिं जत्तादिअहे णिअमहूसवाब्भुदअदंसणपडिवण्णरूवस्स भअवदो कामस्स विअ कामकाणणालंकारआरिणो तस्स विविहविब्भमाहिरामं अणुरूआणुराआणुबन्ध-

---

अत्र यत इत्यध्याहार्यम् । केलिः क्रीडा । कलाश्चतुःषष्टिः। यद्वा । केलीनां कलांशमात्रम् । कथं तर्हि दिनानि गमयतीत्याह केवलमित्यादि । कमलायमानं प्रसारितम् । इदं भरतानुमतम् । यदाह--' अप्राप्ते च प्रिये कार्यः स्त्रीभिर्गण्डान्वितः करः । ' पर्यस्तं क्षिप्तम् । निःस्यन्दः क्षरणम् । ' ईषदर्थे दराव्ययम् ' इत्यमरः । दलितं विकसितम् । माकन्दश्चूतः । पुष्पपरमत्र । ' माकन्दः सहकारेऽस्त्री ' इति मेदिनी । एतेन वायोः त्रैगुण्यमुक्तम् । यच्चेति । यच्च प्रियसख्या यात्रादिने तस्य दर्शनसुखं समासादितं तत आरभ्य सा कमलिनीव प्रम्लायतीत्यन्वयः । प्रतिपन्नरूपस्य कृतदेहपरिग्रहस्य । कामस्यानङ्गत्वात्पुरातनत्वाच्च । महोत्सवदर्शनार्थमिदमुक्तमिति भावः । अद्भुतप्रतिपन्नरूपस्येत्याहिताग्न्यादिः । विविधविलासैरभिरामम् । यद्वा विविधभ्रमणमभिरामोऽभिरतिर्यत्र तत् । वञ्चना दर्शनाभावः । त्वरमाणं शीघ्रमुपजायमानम् । कथं पश्यामीति कुतुकं तयोश्चित्तेऽभवदित्याशयः ।आनन्दितसखीजनं कामसंपत्त्येति भावः। विजृम्भमाणो वर्धमानः ।

---

१ संदसणा. २ अदा ( करा ). ३ वइउर ( व्यतिकर. ). ४ दूणेदि ( दूनयति ). ५ कलाकीलाओ ( क्रीडाः ). ६ मिलाअन्त ( म्लायमान ), किमिलाअन्त. ७ दिअहो ( दिवसान् ). ८ अण्णं अ जदो प्पहुदि. ९ दंसणत्थं. १० मम्महस्स ( मन्मथस्य ). ११ तस्स माहवस्स. १२ विब्भमाणुराआणु०.

महग्घीकिद्जोव्वणारम्भं अण्णोण्णदिट्ठिविणिवाअवञ्चणावसरखिज्जन्ताचित्तुवरन्तकोदूहलं समुल्लसिदसद्धसत्थम्भमन्थरावअवपडिलग्गसेदपुलअउक्कम्पसुन्दरं आणन्दिदसहीअणं पिअसहीए परप्परावलोअणसुहं समासादिदं तदो पहुदि सविसेसदूसहश्वासविअम्भमाणुद्दामदेहदाहदारुणं दसापरिणामं अणुहोन्ती मुहुत्तमेत्तसंपत्तपुण्णचन्दोदआ विअ बालकमलिणी पम्मलाअदि )

तथापि च मुहूर्तमात्रहृदयविनिहितनिर्मायमाणवल्लभसमागमा निर्भरसलिलासारसिच्यमानेव मेदिनी शीतलायत इति जानामि । येन प्रस्फुरत्कान्तदशनच्छदोच्छलद्दन्तमौक्तिकपङ्क्तिकान्तिसविशेषशोभितं निरन्तरोल्लसितपुलकपक्ष्मलकान्तकपालघूर्णमानसंततानन्दबाष्पस्तबकमीषद्विकसितनिष्पन्दमन्दतारोत्तानमसृणमुकुलायमाननेत्रनीलोत्पलमविरलोद्भिन्नस्वेदजलबिन्दुसुन्दरललाटपट्टनवचन्द्रलेखामनोहरं मुग्धमुखपुण्डरीकमुद्वहन्ती विदग्धसहचरीचित्तसंशयितकौमारभावा भवति । ( तहा वि अ मुहुत्तमेत्तहिअअविणिहिदणिम्माअन्तवल्लहसमाअमा णिब्भरसलिलासारसिच्चमाणा विअ मेदिणी सीअलाअदि त्ति जाणामि । जेण पप्फुरन्तकन्तद-

---

ह्वान् । दारुणो भयंकरः । मरणशङ्कयेति भावः । दशा कामावस्था । यथा क्षणमात्रप्राप्तचन्द्रोदया कमलिनी म्लायति तथेयमपि प्राप्तपूर्णचन्द्रोदया म्लायति । चन्द्रकरमपि सोढुमक्षमेति भावः । यद्वा यथा प्राप्तचन्द्रोदया पद्मिनी म्लायति तथा प्राप्तदर्शनसुखेयं म्लायतीत्यर्थः । ननु चन्द्रेण विरोधात्पद्मिन्या म्लानिर्युक्ता । अस्यास्तु माधवानुरागात्तद्दर्शने कथं म्लानिरिति । मैवम् । यथा शीतस्पर्शत्वेन चन्द्रः क्षणं पद्मिनीं सुखयति तथा माधवो मालतीमिति विवक्षितत्वात् । यद्वा मुहूर्तपदेनेह प्रथमचन्द्रोदय उक्तः । एवं चाभिनवोदितं चन्द्रं रक्ततया सूर्याभं दृष्ट्वा भ्रांत्या मुहूर्तं पद्मिनी तिष्ठत्यथ प्रम्लायति तथेयमपीत्यर्थः ॥ तथापि चेत्यत्रापिचेति भिन्नक्रमः । तथा शीतलायत इत्यपि जानामि चेति संबन्धः । निर्मायं मायारहितं सत्यमित्यर्थः । समागमेति भावनाबलादिति भावः । मेदिनी ग्रीष्मावसानकालीनेत्यर्थः । समागममेव द्रढयति । **येनेति** । येन हृदिस्थकान्तसंगमेनैवं सा भवति तेन विदग्धसहचरीचित्तसंशयितकौमारभावा भवति । वैदग्ध्ययुक्ततया सहचरीसंघेनैवं संशय्यते यन्मत्परोक्षेऽपि प्रियसंगतेयम् । कथमन्यथैतादृक् संस्थानमस्या इति भावः । दशनच्छदमधरम् । उच्छलन् प्रकाशमानः । अधरस्फुरणं भावनार्पितप्रियतमचुम्बनात् । 'मुक्तिका मौक्तिकं मुक्ता' इति शब्दभेदः । **निरन्तरेति** । संकल्पकृतवल्लभसमागमोद्भूतसात्त्विकभावेनेत्याशयः । घूर्णमानं लसमानम् । यद्यपि रोमाञ्चः सर्वाङ्गीण एव भवति तथापि रागातिशयद्योतनाय

---

१ कोदूहलुल्लसिद. २ पुलअकम्पाणन्दिअ. ३ णुद्दामदारुणद०. ४ पप्फुरिदरदणच्छदुज्जलन्त.

सणच्छदुच्छलन्तदन्तमोत्तिअपंन्तिकन्तिसविसेससोहिदं णिरन्तरुल्लासिदपुलअपह्मलकन्त-कवोलघोलन्तसंतदाणन्दबाहत्थवअं ईसिविअसिअणिप्फन्दमन्दंतारुत्ताणमसिणमुउला-अन्तणेत्तणीलुप्पलं अविरलुब्भिण्णसेअजलबिन्दुसुन्दरललाटपट्टणवचन्दलेहामणोहरं मुद्धमु-हपुण्डरीअं उव्वहन्ती विअट्ठसहअरीचित्तसंसइदकोमारभावा भोदि । )

किं चोद्दामशिशिरशशिमयूखनिकुरुम्बचुम्बितप्रवृत्तनिःस्यन्दचन्द्रमणि-हारधारिणी प्रचुरकर्पूरसविशेषशिशिरचन्दनरसच्छटासारनिकरदन्तुरित-बालकदलीपत्रसंवाहनादिव्यापारत्वरमाणसहचरीसार्थविरचितोपनीतकमलि-नीदलजलार्द्राशयनीय उन्निद्रा रजनीर्गमयति । ( किं अ उद्दामसिसिरससि-मउहणिउरुम्बचुम्बिदपउत्तणिस्सन्दचन्दमणिहारधारिणी पउरकप्पूरसविसेससिसिरचन्दण-रसच्छडासारणिअरदन्तुरिदबालकदलीवत्तसंवाहणादिव्वावारतुवरन्तसहअरीसत्थविरइदो-वणीदकमलिणीदलजलद्दसअणीए उण्णिद्दा रअणीओ गमेदि । )

कथमप्युपलब्धनिद्रासुखा स्वेदप्रसृतपादपल्लवोद्वान्तपिण्डालक्तक—

---

कपालपुलक एव वर्ण्यते कविसंप्रदायेनेत्यवधेयम् । मन्दतारं किञ्चिच्चलत्तारकम् । उत्तानमूर्ध्वविस्तृतम् । भावनोपनीतप्रिये लज्जादिदृक्षाभ्यामीषद्विकासितत्वम् । नि-ष्पन्दता मौग्ध्यात् । मन्दतारता नखदशनक्षतभावनया प्रियं प्रति सासूयत्वात् । उत्तानत्वं मुखदिदृक्षया । मसृणत्वं स्नेहभावनया । मुकुलत्वं रतावसानभावनया । यदाह—'निश्चलत्वं तदा यातो मुकुलत्वं च लोचने ।' उद्भिन्नमुद्भूतम् । **स्वेदेति** । रतिश्रमादयं स्वेदः । तदनेन प्रबन्धेन तृप्तिरुक्ता । यदाह—'रोमाञ्चो वेपथुः स्वेदो लुलिते च विलोचने । मज्जन्त्या इव देहेषु आश्लेषरतृप्तिलक्षणम् ॥' तदिह यदीयं वल्लभसमागमं न जानाति तदा कथमधरस्पन्दादिमती स्यात् । कुमारस्य भावः कौमारं शैशवं तस्य भावोऽभिप्रायः कटाक्षविक्षेपादिः संशयितो यस्याः सा । निशाचेष्टामाह—**किं चेति** । निकुरुम्बः समूहः । चुम्बितेन चुम्बनेन प्रवृत्तनिःस्यन्दः संजातक्षरणः । छटा 'च्छट' इति यस्याः प्रसिद्धिः । दन्तुरितं विषमीकृतम् । संवाहनमर्पणम् । विरचितोपनीतं विरचनेनाङ्गदत्तम् । अस्मिन् पदे पूरः समूहः पूरणं वा । सविशेषपदेन शीतलकर्पूरसंस्पर्शादतिशीतलत्वमुक्तम् । कदलीपत्रस्य बाल-त्वेन शैत्यसौकुमार्ये उक्ते । कमलिनीदलमेव जलार्द्रार्द्रवस्त्रं तच्छय्यायाम् । 'आर्द्र-वस्त्रं जलार्द्रा स्यात्' इति हारावली । औन्निद्र्येणोन्निद्रतया । आत्मनः सखीनां चेति शेषः । एतेन निद्राच्छेदोद्वेगावुक्तौ ॥ [ **कथमपीति** । ] निद्रैव सुखं निद्रासु-खम् । उद्वेगादिदुःखमयजागरविपर्ययरूपत्वादिदम् । निद्रेयं चिन्तावशात् । यदाह—

---

१ मुत्तिआवलिकन्ति. २ मन्थर. ३ णिडालचन्द; णिडिलवट्टेंदु. ४ औन्निद्र्येण इति ज०-संमतः पाठः । ५ उद्दामससि. ६ पत्तसअणा पादसंवा. ७ जलद्दतालउन्ता. ८ एव्व रअणिं.

रसा थरथरायमानपीवरोरुमूलविसंवदितनीवीबन्धनोत्क्षुभ्यद्धृदयान्तरोत्तरङ्ग-
निःश्वासवशविषमोच्छ्वसत्पक्ष्मलपयोधरोपरिनिहितवेपमानभुजलतावेष्टबन्धना
झटिति प्रतिबोधवेलाविसर्जितोद्विग्नदृष्टिविनिपातविज्ञातशून्यशयनीयसंजात-
मोहमीलल्लोचना ससंभ्रमसखीजनप्रयत्नप्रतिपन्नमूर्च्छाविच्छेदसमयसंगलि-
तदीर्घनिःश्वासशेषजीविता किंकर्तव्यतामूढतया प्रथमप्रार्थितनिजजीविताव-
सानं दुर्वारदैवदुर्विलसितोपालम्भमात्रव्यापारमस्मादृशं जनं करोति । ( कथं
वि उवलद्धणिद्दासुहा सेहपज्झरिदपादपल्लवुव्वन्तपिण्डालत्तअरसा थरथराअन्तपीवरोरुमूले-
विसंवदिदणीविबन्धणा उक्खुब्भन्तहिअअन्तरुत्तरङ्गणीसासवसविसमुच्छसन्तपह्मलपओ-
हरोवरिणिहिदवेवन्तभुअलदावेढबन्धणा झत्ति पडिबोधवेलाविसज्जिदुव्विण्णदिट्ठिविणिवाद-
विण्णादसुण्णसअणिज्जसंजादमोहमीलन्तलोअणा ससंभमसहीअणपअत्तपडिवण्णमुच्छावि-
च्छेअसमअसंगलिददीहणीसाससेसजीविदा किंकादव्वदामूढदाए पढमपत्थिदणिअजीवि-
दावसाणं दुव्वारदेव्वदुव्विलसिदोवालम्भमेत्तव्वावारं अह्मारिसं जणं करेदि । )

तत्प्रेक्षतां भगवत्येषु तावल्लावण्यभूयिष्ठनिर्माणपरिपेलवेष्वङ्गेषु दारुण-
विजृम्भितस्य कियच्चिरं कुशलावसानता मन्मथस्य भविष्यति ।

---

' दौर्बल्यालस्यचिन्ताद्यैर्निद्रा स्यात्कथयापि च । ' इति । वल्लभसमागमसंकल्पजस्वेदेन प्रसृतश्चरणपल्लवेनोद्वान्तः पिण्डीभूतालक्तकरसो यस्याः सा । अलक्तकच्छलेनानुरागमिवोद्गमतीति भावः । अतिघनत्वार्थं पिण्डपदम् । थरथरायमानं कम्पमानम् । पीवरं महत् । वशं संसक्तम् । विसंवदितं स्खलितम् । प्रियस्योर्वाक्रमणभावनया प्रकम्पः । तदाकर्षणभावनया नीवीस्खलनम् । उत्खण्ड्यमानमुच्छलत् । उत्तरङ्गो यातायातवान् । विषमं यथा तथोच्छ्वसन् । पक्ष्मलः सरोमाञ्चः । वेष्टनं वेष्टः । इह हृदयोत्खण्डनादिकं प्रियसंभोगव्यायामभावनया । उपरिवर्तिप्रियस्य भुजलताबन्धनमालिङ्गनभावनया । प्रियप्राप्त्या प्रबुद्धा । प्रबोधश्च स्पर्शादिना भवति । मोहेति । शून्यशय्यादिदर्शनान्मूर्छितेत्यर्थः । ससंभ्रमः सादरः सावेगो वा । संगलितो निःसृतः । अनेन युगपन्नासापुटनिःसरणमाह । मूर्च्छाविच्छेदे तथैव श्वासप्रवृत्तेः । **जीवितेति** । मोहे सखीजनसेकादिना मूर्च्छापगमे दीर्घनिःश्वासेन जीवतीत्यवधार्यत इत्यर्थः । **किंकर्तव्येति** । जीविता सती किं करोमीति न वेत्तीत्यर्थः । **प्रथमेति** । वयमेव प्रथमं म्रियामह इत्यर्थः । स्वयमनध्यवसायाल्लवङ्गिका कामन्दकीं पृच्छति—**तस्मात्प्रेक्षतां भगवतीति** । पेलवं कोम-

---

१ उत्खण्ड्य—ल्य—मान ( टी० ) २ पक्खालिद. ३ मूल-पास वश. ४ णिस्सासविसमसमुसन्तपुलकपह्मल. ५ विक्खित्त. ६ वेढण. ७ विण्णाण ( विज्ञान ). ८ णीसासजणिदजीविदासा. ९ ०दव्वमूढ. १० सहीजणं.

कथं चेमानि रमणकेलिकलहकोपोपरागपल्लवितकेरलीकपोलकोमलोद्वेल्लद्विमलचन्द्रचन्द्रिकोद्दामदलिततिमिरावरणानि विभावरीमुखानि । इमे चोल्लसितदुग्धसिन्धुपूरधवलोज्ज्वलज्योत्स्नाजलप्रक्षालितगगनाङ्गनाः परिमलितपाटलाबकुलनिर्मथनबहलपरिमलोद्गारसंवलनमसृणमांसलमलयमारुतोद्धूमायितदशादिङ्मुखा वसन्तरजनीपरिणाहा अनर्थकारिणो भविष्यन्ति प्रियसख्या इति । ( ता पेक्खदु भअवदी इमेसु दाव लावण्णभूइट्ठणिम्माणपरिपेलवेसु[1] अङ्गेसु दारुणविअम्भिदस्स किअच्चिरं कुसलावसाणदा मम्महस्स भविस्सदि । कधं अ इमाइं रमणकेलिकलहकोवोवराअपल्लविदकेरलीकपोलकोमलुव्वेल्लन्तविमलचन्दचन्दिओद्दामदलिदतिमिरावरणाइं विभावरीमुहाइं । इमे अ उल्लसिददुद्धसिन्धुपूरधवलुज्जलजोण्हाजलपक्खालिदगअणङ्गणा परिमालिदपाडलावउलणिम्महणबहलपरिमलुग्गारसंवलणमसिणंमसलंमलअमारुदुद्धूमाविददहदिसामुहा वसन्तरअणीपरिणाहा अणत्थआरिणो भविस्सन्ति पिअसहीए त्ति । )

**काम०**—लवङ्गिके

> **यदि तद्विषयोनुरागबन्धः**
> **स्फुटमेतद्धि फलं गुणज्ञतायाः ।**
> **इति नन्दितमप्यवस्थयास्या**
> **हृदयं दारुणया विदीर्यते[12] मे ॥ १३ ॥**

---

लम् । दारुणत्वं देहदाहादिकारित्वात् । इमानि विभावरीमुखानि प्रियसख्याः कथमेवं भविष्यन्तीत्यन्वयः । उपरागो लौहित्यम् । पल्लवितः पल्लवाकारीकृतः । केरली केरलदेशस्त्री । तस्या अतिगौरत्वेन लौहित्यार्थं ग्रहणम् । उद्वेल्लन्पतन् । उद्दामदलितमतिदारितम् । इह स्पष्टकेरलीकपोलसाम्येनोदितचन्द्रेण तिमिरावरणनाशे रात्रेरुपक्रमः कथितस्ततश्चन्द्रस्य दुःसहता मालत्या ध्वनिता । परिमलितं कृतम् । निर्मन्थनं मर्दनम् । उद्गार उद्गमः । संवलनं मिश्रीभावः । मसृणं मन्दम् । मांसलः पुष्टः । धूमायितं धूमेनेवाकुलीकृतम् । परिणाह आभोगः ॥ **कामन्दकी** । एवं श्रुत्वा कामन्दकी तटस्थेवाह—**यदीत्यादि** । यदि तद्विषयोऽनुरागस्तदा गुणज्ञतायाः प्रव्यक्तमेतद्विशिष्टं फलम् । तदा सैव गुणं जानातीत्यर्थः । एतद्धाति पाठ एतद्गुणज्ञतायाः फलमेवेत्यर्थः । हिरवधारणे । इति नन्दितमानन्दं प्रापितमपि मे हृदयमस्या अवस्थया विदार्यते । एतदवस्थतया मरणमप्यस्याः सं-

---

१ पेसलेसु. २ कोवराअ. ३ व्वेल्लाविमल. ४ विमलचन्दिआ. ५ धारा. ६ नहोङ्गणा. ७ मुउल ( मुकुल ). ८ बहुल. ९ लुप्पीडसंकलन. १० मसलाअन्त ( मांसलायमान ). ११ परिणामा. १२ विदार्यते.

**माधवः**—स्थाने एव हृल्लासो भगवत्याः ।

**काम०**—अहो प्रमादः ।

**प्रकृतिललितमेतत्सौकुमार्यैकसारं**
**वपुरयमपि सत्यं दारुणः पञ्चबाणः ।**
**चलितमलयवातोद्धूतचूतप्रसूनः**
**कथमयमपि कालश्चारुचन्द्रावतंसः ॥ १४ ॥**

**लव०**—अन्यच्च ज्ञातं भवतु भगवत्या । एतन्माधवप्रतिच्छन्दकसनाथं चित्रफलकम् । ( मालत्याः स्तनांशुकमपनीय दर्शयति । ) एषापि तस्यैव स्वहस्तविरचितेति कण्ठावलम्बिता बकुलमाला जीवनं प्रियसख्या इति । ( अण्णं अ जाणिदं होदु भअवदीए । एदं माहवप्पडिच्छन्दअसणाहं चित्तफलअं । एसा वि तस्स ज्जेव्व सहत्थविरइदत्ति कण्ठावलम्बिदा बउलमाला जीवणं पिअसहीए त्ति ।

**माधवः**—( सस्पृहं )

**जितमिह भुवने त्वया यदस्याः**
**सखि बकुलावलि वल्लभासि जाता ।**
**परिणतबिसकाण्डपाण्डुमुग्ध-**
**स्तनपरिणाहविलासवैजयन्ती ॥ १५ ॥**

---

भाव्यत इति भावः ॥ १३ ॥ **माधवः** । स्थाने युक्तम् । स्थानेशब्दोऽत्र योग्यवाची । हल्लासो हृदयशोषः **कामन्दकी** । प्रकृतीत्यादि । अस्या वपुरिदं स्वभावसुन्दरं सौकुमार्यमेवैकः सारः स्थिरांशो यत्र तत् । एतत्सत्यं निश्चितम् । अयमेव कामचरितानुभावात्कामोऽप्ययं निर्दयः । अदोऽपि सत्यम् । पञ्चबाण इत्यनेनैकबाणापेक्षया दुःसहत्वमुक्तम् । अयमपि कालश्चलन्मलयानिलकम्पितचूतपुष्पश्चारुचन्द्रभूषणश्च । कथमिति शिरश्चालने । हिमादेरपगमाच्चारुचन्द्रत्वम् । तदीदृशेऽनर्थहेतौ कथमियं जीविष्यतीत्यहो प्रमादः । अत्र नाथपदेन चित्रगतस्यापि माधवस्य मालतीनाथत्वं ध्वनितम् ॥ १४ ॥ **लवङ्गिका** । विरचितेति हेतोः । जीवितफलकत्वाज्जीवितम् । कार्यकारणयोरभेदात् । **माधवः** । स्तनांशुकापनयनेन व्यक्तस्तनदर्शनात्सस्पृहम् । **जितमित्यादि** । सखि बकुलमाले त्वयेह भुवने जितम् । प्रौढमृणालदण्डपाण्डुमनोहरस्तनविलासपताकेवास्या मालत्या वल्लभा जातासि । मालतीवल्लभत्वात्सखीत्युक्तम् । हृदयधारणेन वल्लभेत्युक्तम् । तथा च मालत्यालिङ्गनं तव

---

१ अहो स्थाने. २ हृदयोद्वेगः, अभ्युल्लासः. ३ ०मार्यस्य. ४ प्रसूतिः. ५ जीवितं, संजी०. ६ इति बकुलमालामपनीय दर्शयति इत्यधिकं क्वचित्. ७ दण्डकाण्डपाण्डुस्त०. ८ विशाल.

( नेपथ्ये कलकलः । सर्वे आकर्णयन्ति । पुनर्नेपथ्ये । )

रे रे शंकरगृहाधिवासिनो जानपदा एष खलु यौवनारम्भगर्वसंभृतदुर्विषहामर्षरोषव्यतिकरबलात्कारविघटितोद्धाटितलोहपञ्जरनिबद्धशृङ्खलानिरोधप्रतिभङ्गसंकलितनिजलीलाविलासोद्वेल्लद्बहलोत्तुङ्गलाङ्गूलविकटवैजयन्तिकाडम्बरोद्दामशरीरसंनिवेशो मठादपक्रम्य तत्क्षणसतृष्णकवलितानेकदेहावयमध्यनिष्ठुरास्थिखण्डटंकारकटकटायमानकरपत्रकठिनदंष्ट्राकरालमुखकन्दरः प्रचण्डवज्रनिर्घातदारुणचपेटामोटनपातितानेकनरतुरङ्गजाङ्गलोद्गारभरितगलगुहागर्भगम्भीरघर्घरोराल्लिगलपूरणशब्दसंदर्भप्रतिरवाभोगभीषितनष्टनिष्ठापिताशेषजननिवहः कठोरनखरकर्पराक्रमणनिर्दयदारितजन्तुगात्रावयवप्रवृत्तरक्तकर्दमितगतिपथो दुष्टशार्दूलः कुपितकृतान्तलीलायितं करोति । तत्परिरक्षत यथाशक्ति प्रियसख्या मदयन्तिकाया जीवितमिति । ( रे रे संकर-

---

संपन्नं न ममेति भावः ॥ १५ ॥ कलकलः कोलाहलः । **पुनर्नेपथ्य इति** । अत्रैष व्याघ्रः कृद्धयमविलासं कुरुते । सर्वं भक्षयतीत्यर्थः । मठाच्छात्रादिगृहान्निर्गत्य । कीदृशः । यौवनारम्भेण प्रवृद्धौ यो दुःसहावक्षान्तिक्रोधौ तयोर्मिलनेन यो बलात्कारस्तेन विघटितं त्यक्तबन्धीकृतमुद्धाटितं मोटितं च यल्लोहपञ्जरं तत्र च प्रतिबद्धशृङ्खलानिरोधप्रतिभङ्गो विपरीतभङ्गस्तेन संकलिता मिलिता या निजलीला तद्विलासपर्यन्त उद्वेल्लन्कम्पमानोत एवोच्छलन्नूर्ध्वं गच्छन्यो वहलतुङ्गलाङ्गूलः स्थूलोच्छ्रितलाङ्गूलस्तस्य विस्तीर्णवैजयन्तिकासदृशप्रपञ्चेनोड्डामर उत्कटकठोरक्रियः शरीरसंनिवेशो यस्य सः । परगुणासहिष्णुतामर्षः । रोषः क्रोध एव । यद्वा स्थिरः क्रोध एवामर्षः । यदाह—'क्रोधः कृतापराधेषु स्थिरोऽमर्ष इति स्थितः । प्रतिकूलेषु तैक्ष्ण्यस्य प्रबोधः क्रोध उच्यते ॥' यद्वा अमर्षोऽक्षान्तिः । तत्क्षणं सतृष्णं कवलिता येऽनेकप्राणिशरीरावयवास्तेषां मध्ये कठोराणि यान्यस्थीनि तेषां खण्डे खण्डने यष्टङ्कारो ध्वनिभेदस्तेन कटकटायमानाः करपत्रवत्कठिना या दंष्ट्रास्ताभिः करालो भीषणो मुखकंदर आस्यकुहरं यस्य सः । टङ्कारेण दुर्भेद्यत्वमुक्तम् । दुर्भेद्यप्रवृत्तौ दन्तानां कटाकटाशब्दकरणं स्वभावः । विस्तीर्णत्वात्कन्दर इव कन्दरः । प्रचण्डवज्रप्रहारदारुणो यश्चपेटः पाणितलप्रहारस्तेन यदामोटनं चूर्णनं तेन कवलिता आस्वादिता येऽनेकनरास्तुरङ्गाश्च तेषां जाङ्गलं मांसं तस्योद्गारेण प्रपूरणेन भरितो यो गलगुहागर्भस्तत्र गम्भीरो घर्घरो दीर्घमधुरो य उराल्लिर्गलगर्जितं तेन यो गल्लपूरणशब्दस्तस्य संदर्भेण समूहेन प्रतिरवाभोगः प्रतिशब्दविस्तारस्तेन भीषितो भयं नीतो नष्टो विद्राणो निष्ठापितो निष्ठापर्यन्तं लम्भितोऽशेषजननिवहो येन सः । कठोरनखकर्पराक्रमणेन निर्दयं दारितं यज्ज-

---

१ विलासपर्यन्तोद्वेल्लदुच्छलद्बह० (टी.). २ कावलम्बितडम्बरोड्डामर (टी.). ३ कवलित. ४ ०पुरवासिजाण०.

धराधिवासिणो जाणवदा एसो क्खु जोव्वणारम्भगव्वसंभारिददुव्विसहामारिसरोसवइअरबलामोडिअविहडिदुग्घाडिदलोहपञ्जरणिबद्धसिङ्खलाणिरोहपडिभङ्गसंकलिदाणिअलीलाविलासुव्वेल्लन्तबहलुत्तुङ्गलङ्गुलीवअडैवजअन्तिआडम्बरुद्दामसरीरसंणिवेसो मठादो अवक्कमिअ तक्खणसतिल्लकवलिदाणेअदेहिदेहावअवमज्झणि रत्थिखण्डटंकारकडकडाअन्तकरवत्तकठिणदाढाकरालमुहकन्दरो पैअण्डवज्जानिग्घाददारुणचपेडामोडणपाडिदाणेअणरतुरङ्गजङ्गलुग्गारभारिदगलगुहागब्भगम्भीरघग्घरोरल्लिगल्लूरणसद्दसंदब्भपडिरवाभोअभीसाविदणट्ठणिट्ठाविदासेसजणणिवहो कठोरणहरकप्परक्कमणनिद्दइदारिदजन्तुगत्तावअवप्पउत्तररत्तकद्दमिअगइवहो दुट्ठसद्दलो कुविअकअन्तलीलाइदं करेदि । ता पडिरक्खध जधासत्ति पिहसहीए मदअन्तिआए जीविदं ति ।

( प्रविश्य संभ्रान्ता )

**बुद्धरक्षिता**—परित्रायध्वं परित्रायध्वम् । एषा नः प्रियसख्यमात्यनन्दनस्य भगिनी मदयन्तिकैतेन दुष्टशार्दूलेन विनिहतविद्राविताशेषपरिजनाभिभूयते । ( परित्ताअध परित्ताअध । एसा णो पिअसही अमच्चणन्दणस्स बहिणिआ एदिणा दुट्ठसद्दूलेण विणिहदविद्दाविदासेसपरिअणा अभिभवीअदि । )

**मालती**—लवङ्गिके अहो महान्प्रमादः । ( लवङ्गिए अहो महन्तो पमादो । )

**माधवः**—( ससंभ्रममुत्थाय । ) बुद्धरक्षिते क्वासौ ।

**मालती**—( माधवं दृष्ट्वा सहर्षसाध्वसमात्मगतम् । ) अहो एषोऽपीहस्थ एव । ( अम्महे एसो वि इहत्थो एव्व । )

**माधवः**—( स्वगतम् । ) हन्त पुण्यवानस्मि यदहमतर्कितोपनतदर्शनोल्लसितलोचनयानया

---

न्तुशरीरं ततः प्रवृत्तरक्तेन संजातरुधिरेण कर्दमीकृतो गतिपथो गमनवाटो येन सः । कर्पर इव कर्परः । निम्नत्वात् । 'उरल्लिर्गलगर्जितम्' इति रत्नकोशः । **माधवः** । मदयन्तिकापरिरक्षणत्वरयाह—**क्वासाविति** । **मालती** । अम्महे सभयहर्षे आश्चर्ये वा । एषोऽपीहस्थ एव । अत्रापिर्विस्मये । यस्यावस्था भगवत्योक्ता

---

१ रम्भभरिद. २ पञ्जरपडिलग्गसंगलिअणिअलो ( प्रतिलग्नसंगलितनिगडो ). ३ सुव्वेल्लवल्लह ( सोद्वेल्लवल्लभ ). ४ ०अन्तिआविसमडामरुद्दा०; डम्बरुद्दाम. ५ विअडविइंभणुद्दाम ( विकटविजृम्भणोद्दाम ). ६ मोडिअपरिमिलिद ( मोटितपरिमिलित ). ७ परिपूरिअणहोअलो (परिपूरितनभस्तलो) णिहदाणिप्पिसिदण०;णट्ठ०. ८ विद्दाविदा (विद्राविता ). ९ दलिआकट्ठ ( दलिताकृष्ट ). १० जधासत्ति अत्तणो ( आत्मनः ) जीविदं त्ति. ११ प्रविश्य बु०—सत्रासम्. १२ सहि लव०. १३ एत्थ. १४ ०ल्लसितनयानया.

अविरलमिव दाम्ना पौण्डरीकेण नद्धः[1]
स्नपित इव च दुग्धस्रोतसां[2] निर्भरेण[3]।
कवलित इव कृत्स्नश्चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव[4] सान्द्रेण सिक्तः ॥ १६ ॥

**बुद्ध०**—महाभाग एष खलूद्यानबाह्यरथ्यामुखे । ( महाभाअ एसो क्खु उज्जाणबाहिअरत्थामुहे । )

( माधवः साटोपं परिक्रामति । )

**काम०**—वत्स अप्रमत्तो भूत्वा विक्रमस्व ।

**मालती**—( जनान्तिकम् । ) लवङ्गिके हा धिक् हा धिक् संशयः खलु जातः । ( लवङ्गिए हद्धी हद्धी संसओ क्खु जादो । )

( सर्वास्त्वरितं परिक्रामन्ति[5] । )

---

यन्निमित्ता वा ममेयमवस्था स एष इति भावः । स्वच्छन्दप्रियालोकनतुष्टस्य माधवस्योक्तिः-**हन्तेत्यादि । अविरलमित्यादि**-अयं श्लोको गद्यादिः । हन्त हर्षे । अचिन्तितोपस्थितदर्शनानन्दितलोचनयानया चक्षुषा पौण्डरीकेणेव दाम्ना स्रजाविरलं घनं यथा तथाहं नद्धो बद्धः । आवृत इति यावत् । कान्तालोचनेन सात्त्विकभावाविर्भावात्स्वीयस्तम्भं ज्ञात्वा नद्ध इत्युत्प्रेक्षितम् । अत्राविरलपदेन पौनःपुन्यं पुण्डरीकपदेन श्वेतभागविभावनं च ध्वनितम् । दुग्धस्रोतसा दुग्धाम्भःप्रवाहेण निर्भरेण निरतिशयेन संसक्तेन वा स्नपित इवाप्लुत इवाहम् । तथाविधावलोकनजातरोमाञ्चतया स्नपितत्वेनोत्प्रेक्षितम् । अत्र निर्भरपदेन परिचयपर्यवसानतोक्ता । एवं च द्वाभ्यां नेत्रनैर्मल्यमुक्तम् । कृत्स्नो निःशेषोऽहं स्फारितेन विस्तारितेन चक्षुषा कवलित इव पीत इव । स्फारितत्वेन कवलनयोग्यतोक्ता । कवलने बाह्यसंवेदनाभावात्प्रणय उत्प्रेक्षितः । सान्द्रेण निबिडेन सुधामयजलधरेण प्रसभं बलात्सिक्त इवाहम् । आनन्दातिशयशालितयामृतसिक्तत्वेनोत्प्रेक्षा । तदिह माधवस्य परमनिर्वृतिसौख्यमुक्तम् । तत्र च प्रथमपदेन तारकातरलता, द्वितीयेन गोलकचाञ्चल्यम्, तृतीयेन पुटविस्तारो विलासश्च, चतुर्थेन चैतत्त्रयसंपत्तौ पुण्यवत्तोपपादनम् । तत्रापि मेघपदेन संतापशान्तिः, अमृतपदेन स्तम्भसंभावना, प्रसभपदेन तत्संगतिरेव विपत्प्रतीकार इति सूचितम् । सेचनपदेन तस्मिन्दरालोकनेऽसम्पूर्णता, सान्द्रपदेन तत्कालिकसकलक्लेशविलयः सूचितः । स्रोतसां निर्झरेणेति पाठे निर्झरेण प्रवाहेणेत्यर्थः ॥१६॥ **बुद्धरक्षिता** । [ महाभागेति ] कासाविति प्रश्नस्योत्तरमिदम् । **माधवः** । साटोपं सावेगम् । **कामन्दकी** । अप्रमत्तं सावधानम् । क्रियावि-

---

१ बद्धः. २ स्रोतसां. ३ निर्झरेण, निर्वनेन. ४ वर्षणेव. ५ माधवमनुगच्छन्ति.

**माधवः**—( अग्रे दृष्ट्वा सबीभत्सम् । ) अहह ।

> **संसक्तत्रुटितविवर्तितान्त्रजाल-**
> **व्याकीर्णस्फुरदपवृत्तरुण्डखण्डः ।**
> **कीलालव्यतिकरगुल्फदघ्नपङ्कः**
> **प्राचण्ड्यं वहति नखायुधस्य मार्गः ॥ १७ ॥**

अहो प्रमादः ।

> **वयं बत विदूरतः क्रमगता पशोः कन्यका**

**सर्वाः**—हा मदयन्तिके । ( हा मदअन्तिए । )

**काम०माधवौ**—( सहर्षाकूतम् । )

> **कथं तदवपातितादधिगतायुधः पूरुषात् ।**
> **कुतोऽपि मकरन्द एत्य सहसैव मध्ये स्थितः**

**इतराः**—साधु महाभाग साधु । ( साहु महाभाअ साहु । )

**काम०माधवौ**—( सभयम् )

> **दृढं च पशुना हतः**

---

शेषणमिदम् ॥ **माधवः** । रुधिरादिकं वीक्ष्य सबीभत्सं सघृणम् । अहह विस्मये खेदे घृणायां च । **संसक्तेत्यादि** । नखायुधस्य व्याघ्रस्य मार्गः प्राचण्ड्यं रौद्रत्वं वहति । कीदृशः । संसक्तः संलग्नस्त्रुटितश्छिन्नो विवर्तितः खण्डखण्डीकृतोऽन्त्रजालमन्त्र-समूहस्तेन व्याकीर्णं व्याप्तं सद्योहतत्वात्स्फुरत्किञ्चिच्चलदपवृत्तमधोमुखं रुण्डखण्डं कबन्ध-रूपं शकलं यत्र सः । उरुबुकेति पाठ उरु महद् बुक्कमग्रमांसम् । कीलालव्यतिकरेण रक्तसंघेन गुल्फदघ्नो गुल्फपरिणामः पङ्कः कर्दमो यत्र । अत एव बीभत्सयोगितत्वम् । ‘ कबन्धे रुण्डमस्त्रियाम् ’ इत्यमरः । कीलालं रुधिरे तोये ’ इति मेदिनीकरः । प्रमाणे दघ्नच् । ‘ पङ्कः पापे च कर्दमे ’ इति विश्वः ॥ १७ ॥ **वयमिति** । वयमित्यादिना दंष्ट्रायुधपर्यन्तेन पृथ्वीच्छन्दसा श्लोकः । स वाचनिकः । वयं तस्य व्याघ्रस्यातिदूरतः । पशोः क्रमगता क्रमणं प्राप्ता । कन्यका मदयन्तिका । कथं मकरन्दः कुतोऽपि स्थाना-देत्यागत्य शीघ्रं मध्ये व्याघ्रमदयन्तिकयोः स्थितः । तेन व्याघ्रेणावपातिताद् गृहीतात्पूरुषाद् गृहीतखड्गः सन् । अत आकाङ्क्षितलाभः । अत एव सहर्षाकूतमित्युक्तम् । ‘ पुरुषाः पूरुषा अपि ’ इत्यमरः । पूरुषशब्दश्छन्दस्येव युज्यत इत्यदेश्यम् । ‘ पूर्वपूरुषतपांसि जयन्ति ’ इत्यादिनैषददर्शनाद्भाषायामपि तत्प्रयोगात् । मकरन्दः पशुना दृढं निहतो

---

१ निव. २ तुण्ड, मुण्ड. ३ वदति. ४ रगाः. ५ सहर्षम्. ६ दभि०. ७ संभ्रमात्. ८ परशुना.

**इतराः**—अत्याहितम् अत्याहितम् । ( अच्चाहिदं अच्चाहिदं । )

**काम० माधवौ**—( सहर्षम् । ) प्रमथितश्च दंष्ट्रायुधः ॥ १८ ॥

**इतराः**—( सानन्दम् । ) दिष्ट्या प्रतिहतं दुर्जातम् । ( दिट्ठिआ पडिहदं दुज्जादं । )

**काम०**—( सानन्दम् । ) कथं व्यालनखरप्रहारनिःसृतरक्तनिवहः क्षितितलनिषिक्तखड्गलतावष्टम्भनिश्चलः संभ्रान्तमदयन्तिकावलम्बितस्ताम्यतीव वत्सो मे मकरन्दः ।

**इतराः**—हा धिक् हा धिक् गाढप्रहारतया क्लाम्यति महाभागः । ( हद्धी हद्धी गाढप्पहारदाए किलम्मदि महाभाओ । )

**माधवः**—कथं प्रमुग्ध एव । ( कामन्दकीं प्रति । ) भगवति परित्रायस्व माम् ।

**काम०**—अतिकातरोऽसि वत्स । तदेहि तावत् । पश्यामः ।

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

**इति शार्दूलविद्रावणो नाम तृतीयोऽङ्कः ।**

---

दृढमाहतस्ताडितो वा । रक्तदर्शनेन सभयम् । अत्याहितं महाभयम् । 'अत्याहितं महाभीतिः' इत्यमरः । **का० माधवौ** । व्याघ्रभयत्राणोपकारितया व्यवस्थितमदयन्तिकासंबन्धात्सहर्षत्वम् । दंष्ट्रायुधो व्याघ्रः । प्रमथितो निहतः । अमुनेत्यर्थात् ॥ १८ ॥ **इतराः** । दुष्टमुपक्रान्तं दुर्जातम् ॥ **काम०** । 'व्याघ्रे चौरे च व्यालः' इति शाश्वतः । स मकरन्दः क्षितितलनिषक्तखड्गलतावष्टम्भेन निश्चलः । इह मकरन्दक्षतेन रुजारूपः संधिप्रवेश उक्तः । यदाह—'रुजा प्रोक्ता प्रहारव्यथा' इति । अवष्टम्भनमवष्टम्भः । संभ्रान्ता विमुग्धा । प्रमुग्धो मोहं गतः ॥ **काम०** । पश्याम इति दर्शनात्समाश्वास इति भावः ॥

प्रासूत यं रत्नधरोऽतिमान्योऽतिमान्यरूपा दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमत्तृतीयो रसराजिरम्यः ॥

**इति तृतीयोऽङ्कः ।**

---

१ व्यसुरसौ कृतश्चामुना. २ अस्मात्प्राक्-प्रियं प्रियं नः संवृत्तम् । इति टी० ३ विषक्त. ४ निषण्णः. ५ भागो मकरन्दः. ६ परि० परित्रायस्व. ७ नन्वेहि पश्य वस्तावत्.

## चतुर्थोऽङ्कः ।

( ततः प्रविशतो मदयन्तिकालवङ्गिकाभ्यामवलम्बितौ प्रमुग्धौ माधवमकरन्दौ संभ्रान्ता कामन्दकी मालती बुद्धरक्षिता च । )

**मद०**—प्रसीद भगवति परित्रायस्व परित्रायस्व मदयन्तिकानिमित्तं संशयितजीवितं विपन्नजनानुकम्पिनं महाभागम् । ( पसीद भअवदि परित्ताहि परित्ताहि मदअन्तिआणिमित्तं संसइदजीविदं विवण्णजणाणुकम्पिणं महाभाअं । )

**इतराः**—हा धिक् हा धिक् । किमिदानीमस्माभिरत्र प्रेक्षितव्यम् । ( हद्धी हद्धी । किं दाणिं अह्मेहिं एत्थ पेक्खिदव्वं । )

**काम०**—( उभौ कमण्डलूदकेन सिक्त्वा । ) ननु भवत्यः पटाञ्चलेन वत्सौ वीजयन्तु ।

( मालत्यादयस्तथा कुर्वन्ति । )

**मकरन्दः**—( समाश्वस्यावलोक्य च । ) वयस्य अतिकातरोऽसि । किमेतत् । ननु स्वस्थ एवास्मि ।

**मद०**—( सहर्षम् । ) अहो प्रतिबुद्धमिदानीं मकरन्दपूर्णचन्द्रेण । ( अह्महे पडिबुद्धं दाणिं मअरन्दपुण्णचन्देण । )

**मालती**—( माधवस्य ललाटे हस्तं दत्वा । ) महाभाग दिष्ट्या वर्धसे । ननु भणामि प्रतिबुद्ध एव ते प्रियवयस्यः प्रतिपन्नचेतनो महाभागो मकरन्द इति । ( महाभाअ दिठ्ठिआ वड्ढसि । णं भणामि पडिबुद्धो ज्जेव दे पिअवअस्सो पडिवण्णचेअणो महाभाओ मअरन्दो त्ति । )

**माधवः**—( समाश्वस्य । ) वयस्य साहसिक एह्येहि । ( इत्यालिङ्गति । )

**काम०**—( उभौ शिरस्याघ्राय । ) दिष्ट्या जीवितवत्सास्मि ।

**इतराः**—प्रियं प्रियं नः संवृत्तम् । ( पिअं पिअं णो संउत्तं । )

( सर्वा हर्षं नाटयन्ति । )

**बुद्ध०**—( जनान्तिकम् । ) हला मदयन्तिके एष एव सः । ( हला मदअन्तिए एसो ज्जेव्व सो । )

---

**तत इति** । संभ्रान्ता व्याकुला ॥ **मद०** । अत्रापन्नमापद्गतम् ॥ अम्महे हर्षे आश्चर्ये वा ॥ **मालती** । वर्धस इत्यनेन वर्धापनं याचनोक्तिप्रकारः **काम०** । शिरस्याघ्राणमायुर्वर्धनायेति वृद्धाः । **बुद्ध०** । हलेति सखीसंबोधनम्

---

१ मालती. २ संभ्रान्ताश्च. ३ णिमित्तसं०. ४ विपण्णानु०. ५ पुण्णिमा. ६ सखि लवङ्गिके. ७ आश्वस्य. ८ जीववत्सा.

**मद०**—सखि ज्ञातमेव मया यथैष माधवोऽयमपि स जन इति। ( सहि जाणीदं ज्जेव्व मए जह एसो माहवो[1] अअं वि सो जणो त्ति।

**बुद्ध०**—अपि सत्यवादिन्यहम्। ( अवि सच्चवादिणी अहं। )

**मद०**—न खल्वन्यादृशेषु युष्मादृश्यः पक्षपातिन्यो भवन्ति। ( माधवमवलोक्य। ) सखि मालत्या अपि रमणीयोऽस्मिन्महानुभावेऽनुरागप्रवादः। ( पुनर्मकरन्दमेव सस्पृहमवलोकयति। ) ( ण क्खु अण्णारिसेसु तुह्मारिसीओ पक्खवादिणीओ होन्ति। सहि मालदीए वि रमणीज्जो[3] इमस्सिं महाणुहावे अणुराअप्पवादो। )

**काम०**—( स्वगतम्। ) रमणीयोर्जितं हि मदयन्तिकामकरन्दयोर्दैवादद्य दर्शनम्[4]। ( प्रकाशम्। ) वत्स मकरन्द कथं पुनरायुष्मानस्मिन्नवसरे मदयन्तिकाजीवितपरित्राणहेतुर्[5] भगवता दैवेन संनिधापितः।

**मक०**—अद्याहमन्तर्नगर[6] एव कांचिद्वार्तामुपश्रुत्य माधवस्य चित्तोद्वेगमधिकमाशङ्कमानस्त्वरितमवलोकितानिवेदितकुसुमाकरोद्यानवृत्तान्तः परापतन्नेव शार्दूलावस्कन्दगोचरगतामेतां[7] अभिजातकन्यकामभ्युपपन्नवानस्मि।

( मालतीमाधवौ विमृशतः। )

**काम०**—( स्वगतम्। ) वृत्तेन[8] खलु मालतीप्रदानेन भवितव्यम्। ( प्रकाशम्। ) वत्स माधव दिष्ट्या सुहृद्बुद्ध्या वर्धितोऽसि मालत्या। तदयमवसरः प्रीतिदायस्य।

---

मकरन्दनामाग्रहणेन स्वामित्वमभिप्रैति। **मदयन्तिका**। संभावनायामपिशब्दः। न हि पक्षपातिन्यस्त्वादृश्यो मन्दं भद्रं वदन्तीति भावः। **काम०**। अक्लेशोपनतत्वेन रमणीयम्। शार्दूलनाशेनोपकारपूर्वकमुत्पन्नत्वादूर्जितं सातिशयम्। 'आयुष्मानिति वृद्धेन वाच्यो बालः शुभाशयः'॥ इति भरतः। **मक०**। उद्यानवृत्तान्तो मालतीप्रत्यक्षमुत्तरोपक्रमः। परापतन्नागच्छन्। अवस्कन्दोऽतिक्रमः। गोचरमित्यजहल्लिङ्गतयान्वयः। अभिजाता कुलीना। तथा चाभिजात्येन मदुपकारं ज्ञास्यतीति भावः। आभिजात्येन ज्ञानं च तथाविधाकारादिना। कन्यकेत्यत्रानुकम्पायां कन्। अभ्युपपत्तिः प्राप्तिः। विमृशतः। परस्परक्लेशका-

---

१ एस पिओ जणो; एस महाभाओ माह० अअं. २ अह्मा०. ३ ०णिज्जो एव्व. ४ संदर्श ५ हेतोः. ६ नगरे. ७ इमाम्. ८ वृत्तान्तेन.

**माधवः**—भगवति ईयं हि

**यद्व्यालव्रणितसुहृत्प्रमोहमुग्धं**
**सौजन्याद्विहितवती गतव्यथं माम् ।**
**तत्कामं प्रभवति पूर्णपात्रवृत्त्या**
**स्वीकर्तुं मम हृदयं च जीवितं च ॥ १ ॥**

**लव०**—प्रतीष्टः खलु नः प्रियसख्यायं प्रसादः । ( पडिच्छिदो क्खु णो पिअसहीए अअं पसादो । )

**मदयन्तिका**—( स्वगतम् । ) जानाति महानुभावोऽयं जनोऽवसरे गुरुकरमणीयं मन्त्रयितुम् । ( जाणादि महाणुहावो अअं जणो अवसरे गुरुअरमणिज्जं मन्तिदुं । )

**मालती**—( स्वगतम् ) किं नाम मकरन्देनोद्वेगकारणं श्रुतं भविष्यति । ( किं णाम मअरन्देण उव्वेअकालणं सुदं भविस्सदि । )

**माधवः**—वयस्य का पुनर्ममाधिकोद्वेगहेतुर्वार्ता ।

( प्रविश्य )

**पुरुषः**—वत्से मदयन्तिके भ्राता ते ज्यायानमात्यनन्दनः समादिशति । अद्य परमेश्वरेणास्मद्भवनमागत्य भूरिवसोरुपरि परं विश्वासमस्मासु च प्रसादमाविष्कुर्वता स्वयमेव प्रतिपादिता मालती । तदेहि संभावयावः प्रमोदमिति ।

**मक०**—वयस्य इयं सा वार्ता ।

---

भावः ॥ प्रीतिदायस्य वर्धापकदानस्य ॥ **यदित्यादि** । व्याघ्रखण्डितसुहृत्प्रमोहेन संतप्तं मां सौजन्येन विगतक्लेशं कृतवती ततोऽत्यर्थं मम हृदयं जीवितं च पूर्णपात्रवृत्त्या वर्धापकेन स्वीकर्तुमियं प्रभवति । त्वं च प्रभवसीत्यर्थः । तदायत्ते मे हृदयजीविते इति भावः । यद्वा चोरिकाविवाहसंपादनेन हृदयहारिता नोचेज्जीवितहारितेत्यर्थः । ‘ वर्धापकं यदानन्दादलङ्कारादिकं पुनः । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत् ॥ ’ इति हारावली । ‘ पूर्णपात्रं वर्धापकेऽपि च ’ इति मेदिनीकरोऽपि ॥ १ ॥ **मदयन्तिका** । गुरुकरमणीयं श्रोत्रसुखम् । **माधवः** । मकरन्देन कांचिद्वार्तामुपश्रुत्येति यदुक्तमेतच्छङ्कमानः पृच्छति—वयस्येति । **पुरुषः** । ज्यायाञ्ज्येष्ठः । परमेश्वरो

---

१ इयं मालती. २ कारुण्यात्. ३ भगवति. ४ महाभाअधेओ; णुहावो जणो. ५ गुरुअ इति नास्ति क्वचित्. ६ उद्वेगवार्ता. ७ प्रसादम्.

( मालतीमाधवौ वैवर्ण्यं नाटयतः । )

**मद०**—( सहर्षं मालतीमाश्लिष्य[1] । ) सखि मालति त्वं खल्वेकनगरनिवासेन सहपांसुक्रीडनात्प्रभृति मे प्रियसख्यासीर्भगिनिका च । सांप्रतं पुनर्गृहस्य मण्डनं जातासि । ( सहि मालदि तुमं क्खु एक्कणअरणिवासेण सहपंसुकीलणादो पहुदि मे पिअसही आसी वइणिआ अ । संपदं उणं[2] घरस्स मण्डणं जादासि । )

**काम०**—वत्से मदयन्तिके दिष्टचा वर्धसे भ्रातुर्मालतीलाभेन ।

**मद०**—युष्माकमाशिषां प्रभावेण । सखि लवङ्गिके फलिता नो मनोरथा युष्माकं लाभेन । ( तुह्माणं आसिसाणं पॅहावेण[3] । सहि लवङ्गिए फलिदाँ[4] णो मणोरहा तुह्माणं लाहेण । )

**लव०**—सखि किमस्माकमप्येतन्मन्त्रयितव्यम् । ( सहि किं अह्माणं वि एँदं[5] मन्तिदव्वम् । )

**मद०**—सखि बुद्धरक्षिते इदानीं विवाहमहोत्सवं संभावयावः । ( सहि बुद्धरक्खिदे दाँणिं[6] विवाहमहोसवं संभावेह्म )

**बुद्ध०**—सखि एहि गच्छावः। ( सहि एहि गच्छह्म । ) ( इत्युत्तिष्ठतः । )

**लव०**—( जनान्तिकम् । ) भगवति यथैते हृदयभरितोद्वृत्तविस्मयानन्दसुन्दरा आन्दोलायमानधीरत्वमनोहराः पर्यस्यन्ति[7] मदयन्तिकामकरन्दयोर्दलितनीलोत्पलदामसदृक्षाः कटाक्षविक्षेपास्तथा तर्क-

---

राजा । विश्वासमभेदम् । संभावयामः कारयामः । उत्सवपूर्वको हर्षः प्रमोदः । **मदयन्तिका** । मद्भ्रातृवधूर्भविष्यसीति भावः । **कामन्दकी** । नोशब्दोऽस्माकमित्यर्थे निषेधे च तुल्यरूप इति निषेधोऽप्यत्र स्फुरति । अत एव सोत्कण्ठमाह—भ्रातुरित्यादि । **मदय०** उभयत्रोत्तरमाह । युष्माकमिति । भरिआ इति पाठे भृताः पूर्णा इत्यर्थः । **लवङ्गिका** । अयमभिसंधिः । यूयं राज्ञः प्रणयिनो वयं सेवकाः । अतो युष्मत्संबन्धेन वयं पूर्णमनोरथा इति वचनमात्रम् । वस्तुतस्तु त्वत्संबन्ध एवास्माकं न भवितेति । माधवविवाहस्यावश्यकत्वात् । यद्वा यदेतत्त्वया मन्त्रितमस्माकं मनोरथाः पूर्णा युष्माकं लाभेनेति वयमेव तद्वदामः । तेन त्वं मकरन्देन परिणेतव्येति मनोरथा अस्माकमेव पूर्णा भविष्यन्तीति गूढमुक्तम् । व्यक्तं तु युष्माकं राजमित्राणां लाभेन राजसेवका वयमेव पूर्णमनोरथा इति भावः । यद्वा एतत्कामन्दक्याख्यं मन्त्रिरूपं द्रव्यमस्माकमप्यत्र विषये वर्तते तेन प्रतिहतमेतत् । **लवङ्गिका** । अत्र भरमितो भरितः । शकन्ध्वादित्वात्पररूपम् । यद्वा भरणं भरः । भरः संजातोऽस्य । तारकादित्वादितच् । व्यवस्थितविभाषया वेट्प्राप्तेः । अत एव वासवदत्तादौ भरितेति प्रयोगः । हृदये भरितौ पूर्णावुद्वृत्ता-

---

१ आलिङ्ग्य. २ उण अह्माणं ( अस्माकं ). ३ पसादेण. ४ भरिआ. ५ अत्थि. ६ एहि द्दाव महोसवं. ७ परिवर्तन्ते.

यामि मनोरथनिर्वृत्तसमागमावेताविति । ( भअवदि जहा एदे हिअअभरिदु-व्वित्तविह्मआणन्दसुन्दरा आन्दोलाअन्तधीरत्तणमहोहरा पल्लत्थन्ति मदअन्तिआमअ-रन्दाणं दलिदकन्दोट्टदामसरिच्छा कडक्खविक्खेवा तहा तक्केमि मणोरहणिव्वुत्तस-मआमा एदे त्ति । )

**काम०**—( विहस्य । ) नन्विमौ विलोकनेन मानसं मुहुर्मुहुर्मोहनम-नुभवतः । तथा हि

**ईषत्तिर्यग्वलनविषमं कूणितप्रान्तमेत-**
**त्प्रेमोद्भेदास्तिमितलुलितं किंचिदाकुञ्चितभ्रु ।**
**अन्तर्मोदानुभवमसृणं स्तम्भनिष्कम्पपक्ष्म**
**व्यक्तं शंसत्यचिरमनयोर्दृष्टमाकेकराक्षम् ॥ २ ॥**

---

वमान्तौ विस्मयानन्दौ ताभ्यां सुन्दराः । व्याघ्रनिपाताद्धृदयनिहितो विस्मयः । इष्टदर्शनादानन्दः । आन्दोलितं परित्यक्तं यद्धीरत्वं तेन मनोहराः । दलितं विकसि-तम् । कन्दोट्टं नीलोत्पलम् । सदृक्षास्तुल्याः । कान्तादृष्टिरियम् । **कामन्दकी ।** मोहनं सुरतम् । अत एव कामशास्त्रम्–' मोहनं नारभेत्तावद्यावन्नोत्कण्ठिता प्रिया ' । इति । **ईषदित्यादि ।** एतदनयोर्दृष्टं दर्शनं व्यक्तं शंसति । यदेतौ मानसं मोहन-मनुभवत इत्यन्वयः । दृष्टं कीदृशम् । ईषन्मनाक्तिर्यग्वलितेन विषमं मन्दम् । अनेन संकल्पसंगतानङ्गस्य पराभ्यूहशङ्कितेयं दृगित्युक्तम् । यदाह—' शङ्कायां शङ्किता ज्ञेया ' इति । कुञ्चितप्रान्तमाकुञ्चितापाङ्गम् । मदयन्तिकाया जडत्वान्मकरन्दस्यान्यद-र्शनसासूयत्वाज्जिह्मा दृष्टिः । यदाह—' जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ' । इति । दृष्टिद्वयेन सुरतप्रागवस्थोक्ता । प्रेम्ण उद्भेदादतिपरिपाकात्स्तिमितं स्थिरं ललित-मर्धमुकुलितं च । अर्धमुकुलितेयं दृक् । यदाह—' अङ्गादिष्वर्धमुकुला गन्धस्पर्शसुखा-दिषु । अर्धव्याकोषपक्ष्माग्रा ग्रस्तार्धमुकुलैः पुटैः ॥ स्मृतार्धमुकुला दृष्टिः किञ्चिन्मी-लिततारका ' ॥ अनेन रताभोग उक्तः । नखदशनक्षतादिशङ्क्या मानं सूचयति । किञ्चिदाकुञ्चिते अनमिते भ्रुवौ यत्र तत् । एकस्या एव भ्रुव उत्क्षेपणं कुञ्चनमिह । यदाह–' एकस्या एव उत्क्षेपो भ्रुवः कुञ्चनमुच्यते ' । कोपे चास्य प्रयोगः । यदाह– ' कोपे वितर्के हेलायां लीलादौ सहजे तथा । दर्शने ग्रहणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥ मानस्याल्पत्वसूचनार्थमाङ्प्रयोगः । रतावसानमाह–हृदये हर्षानुभवेन मसृणं स्निग्धं मन्दं वा । रतान्ते लज्जामाह–स्तम्भं लज्जान्विततया पतितार्धपुटत्वात् । कथं पुनः संभोगो भावीति चिन्तया निष्कम्पम् । शून्यतया निष्कम्पं वा । तादृशं पक्ष्म

---

१ भरिउव्वमन्त ( भरितोद्वमत् ). २ सुन्दरं, ०रघोलाविदधीरपेरन्त ( घूर्णितधीरपर्यन्त ). ३ ०न्दोट्ठमंसलच्छविआ दिट्ठिसंभेआ तह मण्णे. ४ सम्बन्धा. ५ परस्परं मा०. ६ मानस मोह०. ७ वलित. ८ कुञ्चित. ९ ललितं. १० आचित. ११ स्रस्त.

**पुरुषः**—वत्से मदयन्तिके इत इतः ।

**मद०**—( अपवार्य । ) सखि बुद्धरक्षिते अपि पुनरपि द्रक्ष्यते एष जीवितप्रदायी पुण्डरीकलोचनः । ( सहि बुद्धरक्खिदे अवि पुणोपि दीसइ एसो जीविदप्पदाई पुण्डरीअलोअणो । )

**बुद्ध०**—यदि दैवमनुकूलं भविष्यति । ( जइ देव्वं अणुऊलं भविस्सदि । ( इति पुरुषेण सह निष्क्रान्ते । )

**माधवः**—( अपवार्य । )

**चिरादाशातन्तुस्त्रुटतु बिसिनीसूत्रभिदुरो**
**महानाधिर्व्याधिर्निरवधिरिदानीं प्रसरतु ।**
**प्रतिष्ठामव्याजं व्रजतु मयि पारिप्लवधुरा**
**विधिः स्वास्थ्यं धत्तां भवतु कृतकृत्यश्च मदनः ॥ ३ ॥**

अथ वा

**समानप्रेमाणं जनमसुलभं प्रार्थितवतो**
**विधौ वामारम्भे मम समुचितैषा परिणतिः ।**
**तथाप्यस्मिन्दानश्रवणसमयेऽस्याः प्रविगल-**
**त्प्रभं प्रातश्चन्द्रद्युति वदनमन्तर्दहति माम् ॥ ४ ॥**

---

यत्र । तद्विच्छेदमाह--आकेकरमक्षि यत्र तत् । 'आकेकरा त्वरालोके विच्छेदे प्रोषितेषु च ।' इत्याद्युक्तम् । तदिहाकेकरलक्षण आकुञ्चितेत्यादि प्रथमपदेनोक्तम् । द्वितीयेन मुहुर्व्यावृत्ततारेत्युक्तम् । तृतीयेन हर्षितार्धेत्याद्युक्तम् ॥ २ ॥ **मदयन्तिका** । अपि नाम संभावनायाम् । अव्ययसमुदायत्वात् । **माधवः** । करुणावस्थामाह—चिरादित्यादि । चिरशङ्कितः आशातन्तुर्मालतीप्राप्त्याशारूपहृदयावलम्बनं संप्रति भिद्यताम् । बिसिनीसूत्रवद्भिदुरो भेदनस्वभावो यतः । भिदेः कर्मकर्तरीति कुरच् । संभूय त्रुटितत्वेन मृणालतन्तुसाम्यम् । नैराश्यान्मरणमाह—आधिर्मनोव्यथा तद्रूपो व्याधिरनवच्छिन्नोऽत एव महान् । व्याप्नोतु । इह महत्त्वनिरवधित्वाभ्यां मरणमाह । आशाच्छेदानन्तरं च मरणमुचितमेव । यदाह—'सर्वैः कृतैः प्रतीकारैर्यदा नास्ति समागमः । कामाग्निना समाप्तस्य जायते मरणं ततः ॥' स्त्रीहेतुमरणादधीरत्वमाशङ्क्यानुज्ञोत्तरमाह । पारिप्लवधुरा चपलकक्षा [ अव्याजं ] सत्यं [ प्रतिष्ठां ] स्थितिं मयि बध्नातु । अभीष्टलाभेन विधिर्निराकुलो भवतु । मालतीं विना दुःसहवेदनादायी मनोभूः कृतकृत्यो भवतु । मरणादधिकं किं कर्तव्यमस्येत्यर्थः । एतदुपालम्भगर्भं वच उद्वेगात । यदाह--' हा्हाहचिन्तानिःश्वासग्लानिखेदप्रजागरैः । रोदनैर्मन्दभणितैर्दैवोपालम्भनेन च ॥' इति ॥ ३ ॥ **समानेत्यादि** । वामारम्भे प्रतिकूले विधौ ममैषा परिणतिः पूर्वोक्ता युक्तैव । की-

---

१ एतन्नास्ति क्वचित्. २ द्रक्ष्यते. ३ अविणाम. ४ आधिर्व्या०. ५ व्याजां. ६ स्थैर्यम्. ७ समुदिता. ८ परि०.

**कामन्दकी**—( स्वगतम् । ) एवमतिदुर्मनायमानः पीडयति मां वत्सो माधवो वत्सा मालती च दुष्करं निराशा प्राणिति । ( [2]प्रकाशम् । ) वत्स माधव पृच्छामि तावदायुष्मन्तम् । [1]अपि भवानमंस्त यथा भूरिवसुरेव मालतीमस्मभ्यं दास्यतीति ।

**माधवः**—( सलज्जम् । ) नहि नहि ।

**काम०**—न तर्हि प्रागवस्थायाः [3]परिहीयसे ।

**मक०**—भगवति दत्तपूर्वे[4]त्याशङ्क्यते ।

**काम०**—जानामि तां खलु वार्ताम् । इदं ता[5]वत्प्रसिद्धमेव यथा नन्दनाय मालतीं प्रार्थयमानं भूरिवसुर्नृपतिर्मुक्तवान्प्रभवति निजस्य कन्यकाजनस्य महाराज इति ।

**मकरन्दः**—अस्त्येतत् ।

**कामन्दकी**—अद्य च राज्ञा स्वयमेव दत्ता मालतीति [7]पुरुषेणावेदितम् । तद्वत्स वाक्प्रतिष्ठा[8]नि देहिनां व्यवहारतन्त्राणि । वाचि पुण्यापुण्यहेतवो [9]व्यवस्थिताः । सर्वं च वचनानामायत्तम् । सा च भूरिवसोर्वागनृतात्मिकैव । न खलु महाराजस्य मालती निजा कन्यका । कन्यका[10]प्रदाने च नृपतयः प्रमाणमिति नैवंविधो धर्माचारसमयः । तस्मादविमर्शितव्यमे[11]तत् । कथं च वत्स मामनवधानां मन्यसे । पश्य ।

---

दशस्य । तुल्यप्रीतिं दुष्प्रापं जनं याचितवतः । वामे हि विधौ सुलभमपि न लभ्यते किं पुनरसुलभमिति भावः । दृष्टकारणस्यानुपलम्भाद्विधेर्वामत्वम् । असुलभत्वं परतन्त्रत्वात् । यद्यपि युक्तेऽर्थे खेदो नास्ति तथाप्यस्या मालत्यास्तादृशं मुखं मामन्तर्दहति । एतन्मुखं वीक्ष्य मनस्तापो मे भवतीति भावः । अस्मिन्दानश्रवणसमये नन्दनाय मालती दातव्येति श्रुत्वा खेदात्कान्तिशून्यत्वम् । अत एव प्रातश्चन्द्रकान्ति क्वापि विगतकान्ति भवति । अथ च प्रातश्चन्द्रोपमया रागध्वनेर्विधिं प्रति मालतीकोपोऽपि सूचितः ॥ ४ ॥ **कामन्दकी** । दुष्करं यथा तथा प्राणिति जीवति । अमंस्त मन्यते स्म । प्रागवस्था मालतीप्राप्तिलक्षणा । तद्दानस्याज्ञानादिति भावः । दत्तपूर्वा **पूर्वं** दत्ता । सुप्सुपेति समासः । इदं च तापहेतुः । **वागिति** । वाचि सर्वं प्रतिष्ठितमिति भावः । अनृतात्मिकासत्या । धर्माचारसमयो धार्मिकसिद्धान्तः ।

---

१ एतद्–अपि भवानित्यस्य प्राक् क्वचित्. २ अथ किं. ३ भूरिवसुः परिहीयते. ४ अदत्तपूर्वा. ५ तु. ६ एवमुक्त०. ७ संप्रत्येव पुरु०. ८ निबन्धनानि, ९ व्यवस्थाः सर्वेषां जनानामायतन्त इति. १० कन्यादाने. ११ मेवैतत्.

**मा वां सपत्नेष्वपि नाम तद्भू-**
**त्पापं यदस्यां त्वयि वा विशङ्क्यम् ।**
**तत्सर्वथा संगमनाय यत्नः**
**प्राणव्ययेनापि मया विधेयः ॥ ५ ॥**

**मक०**—सुष्ठु[2] युज्यमानमादिश्यते युष्माभिः । अपि च ।

**दया वा स्नेहो वा भगवति निजेऽस्मिञ्छिशुजने**
**भवत्याः संसाराद्विरतमपि चित्तं द्रवयति ।**
**अतश्च[3] प्रव्रज्यासुलभसमयाचारविमुखः[4]**
**प्रसक्तस्ते यत्नः प्रभवति पुनर्दैवमपरम् ॥ ६ ॥**

( नेपथ्ये । )

भगवति कामन्दाकि एषा भट्टिनी[5] विज्ञापयति मालतीं गृहीत्वा त्वरितमागच्छेति । ( भअवइ कामन्दइ एसा भट्टिणी विण्णावेदि जधा मालदिं घेत्तूण[6] तुरिदं आअच्छेत्ति[7] । )

**कामन्दकी**—वत्से उत्तिष्ठ[8] ।

( सर्वे उत्तिष्ठन्ति । )

( मालतीमाधवौ सकरुणानुरागमन्योन्यमवलोकयतः । )

---

'समयाः शपथाचारकालसिद्धान्तसंविदः' । इति विश्वः । निजावधानमाह—**मा वेति** । अस्यां मालत्यां त्वयि च यत्पापं विवाहानिर्वाहे मरणरूपं शङ्कनीयं विप्रयोगजन्यदुःखादि वा तच्छत्रुष्वपि । नाम प्राकाश्ये । मा वाभून्मैव भविष्यति । वाशब्द एवार्थे । स्वकर्तव्यमाह—तदिति । तस्माद्युवयोः संबन्धाय सर्वप्रकारेण जीवत्यागेनापि मया प्रयत्नः कार्यः । यदि बुद्धिकौशलेन न सिद्धिस्तदा प्राणव्ययेनापि साध्यमित्यपेः स्वरसः । मरणादेरमङ्गलतया पापपदेनोपन्यासः । शत्रुष्वपि माभूदिति लोकोक्तिच्छायालङ्कारः ॥५॥ **दयेत्यादि** । हे भगवति अस्मिन् शिशुजने बालजने माधवे मालत्यां च दया करुणा स्नेहो ममता च संसाराद्विरक्तमपि भगवत्याश्चित्तं द्रवयत्यार्द्रीकरोति । भवत्या इति दयाद्यन्वयि चित्तान्वयि च काकाक्षिगोलकवत् । वाशब्दौ चार्थे । अत एव चित्तद्रवणात् । व्रतग्रहणपूर्वकसर्वैषणानिवृत्तिः प्रव्रज्या । तस्यां सुलभः अवश्यंभावी समयाचारोऽनुष्ठानविशेषो ध्यानादिविषयस्तत्र विमुखो निरुद्धो यत्नस्ते प्रसक्तोऽविच्छिन्नः सन् प्रभवति । च एवार्थे । कार्यासिद्धिरदृष्टविलम्बात् । तत्र न भवत्या दोष इत्याह । अपरं पुनर्दैवं प्रभवति । ईश्वरस्त्रीषु राज्ञीपदोपचारेण भट्टिनीत्युक्तम् । भरतोऽप्याह—' राजस्त्रियस्तु संभाष्याः सर्वाः परिजनेन तु । भट्टिनी स्वामिनी-

---

१ वां. २ सर्वं सुष्ठु. ३ ततश्च. ४ समयसुलभा०. ५ भर्त्री वि० यथा ( जधा ). ६ वेऊण. ७ आअच्छदु. ८ उत्तिष्ठोत्तिष्ठ.

**माधवः**—( स्वगतम् । ) कष्टमेतावती हि लोकयात्रा मालत्या समं माधवस्य । अहो नु खलु भोः—

**सुहृदिव प्रकटय्य सुखप्रदः**
**प्रथममेकरसामनुकूलताम् ।**
**पुनरकाण्डविवर्तनदारुणः ।**
**प्रविशिनष्टि विधिर्मनसो रुजम् ॥ ७ ॥**

**मालती**—( अपवार्य । ) महाभाग लोचनानन्द एतावद्दृष्टोऽसि । ( महाभाअ लोअणाणन्द एत्तिअं दिट्ठोसि । )

**लव०**—हा धिक् हा धिक् । शरीरसंशयमेव नः प्रियसख्यारोपितामात्येन । ( हद्धी हद्धी । सरीरसंसअं ज्जेव्व णो पिअसही आरोविदा अमच्चेण । )

**मालती**—( स्वगतम् । ) परिणतमिदानीं मे जीविततृष्णायाः फलम् । निर्व्यूढं च निष्करुणतया तातस्यापि कापालिकत्वम् । परिनिष्ठितो दुष्टदैवस्य दारुणसमारम्भसदृशः परिणामः । तत्कमिहोपालभे मन्दभागिनी कं वाशरणा शरणं प्रतिपद्ये । ( परिणदं दाणिं मे जीविततिह्णाए फलम् । णिव्वूढं अ णिक्करुणदाए तादस्स वि कावालिअत्तणं । परिणिट्ठिदो दुट्ठदेवस्स दारुणसमारम्भसरिसो परिणामो । ता कं एत्थ उवालभामि मन्दभाइणी । कं वा असरणा सरणं परिवज्जामि । )

**लव०**—सखि इत इतः । ( सहि इदो इदो । ) ( इति कामन्दक्या सह निष्क्रान्ते । )

---

त्येवं नाट्ये प्राहुर्विचक्षणाः' ॥ ६ ॥ **माधवः** । लोकयात्रा दर्शनादिकम् । अहो नु खलु भो इत्यव्ययसमुदायो निर्वेदे । **सुहृदित्यादि** । एकत्रैव रसो रतिर्यस्यास्ताम् । यद्वा । एक एव रसः श्रृङ्गारो यस्यां ताम् । निरन्तरां वानुकूलतामानुकूल्यं प्रथमं प्रकाश्य सुखप्रदो विधिः पुनर्मनसो रुजं पीडां प्रविशिनष्ट्यतिशयितां करोति । कीदृशः । अकाण्डादकस्माद्विवर्तनेनान्यथाभावेन विरुद्धवर्तनेन वा दारुणो दुःखदायी । सुहृदिव । यथा मित्रमानुकूल्यमुत्पाद्य सुखप्रदं सदकाण्ड एव विरुद्धाचरणान्मनःपीडां करोति तथेत्यर्थः ॥ ७ ॥ **मालती** । पुनर्दर्शनं न भवितेति भावः । अत एवैतावदित्यनेन करुणा । नयनानन्देत्यनेनानुरागः । **मालती** । अत्र पुरा विरहदशायां माधवप्रतिच्छन्दकादिदर्शनाद्धारितस्य जीवितस्य पर्यवसानं वृत्तमिति परिणतपदस्यार्थः । कापालिकत्वं नृशंसता । अघोरघण्टस्य सूचनमप्येतत् । **माधवः** । जन्मसाफल्यं माल-

---

१ प्रदाम्. २ ( स्वगतम् ). ३ महाणुभाअ. ४ ०णन्दकर. ५ पडिट्ठिदो. ( प्रतिष्ठितः ). ६ देव्वहदअस्स.

**माधवः**—( स्वगतम् । ) नूनमाश्वासनमात्रमेतन्माधवस्य सहजस्नेहकातरा करोति भगवती । ( सोद्वेगम् । ) हन्त सर्वथा संशयितजन्मसाफल्यः संवृत्तोऽस्मि । तत्किमिदानीं कर्तव्यम् । ( विचिन्त्य । ) न खलु महामांसविक्रयादन्यमुपायं[1] पश्यामि । ( प्रकाशम् । ) वयस्य मकरन्द अपि भवानुत्कण्ठते मदयन्तिकार्योः[2] ।

**मक०**—अथ किम् ।

> **तन्मे मनः क्षिपति यत्सरसप्रहार-[3]**
> **मालोक्य मामगणितस्खलदुत्तरीया ।**
> **त्रस्तैकहायनकुरङ्गविलोलदृष्टि-**
> **राश्लिष्टवत्यमृतसंवलितैरिवाङ्गैः[4] ॥ ८ ॥**

**माधवः**—सुलभैव[5] बुद्धरक्षिताप्रियसखी भवतः । अपि च ।

> **प्रमथ्य क्रव्यादं मरणसमये रक्षितवतः**
> **परिष्वङ्गं लब्ध्वा तव कथमिवान्यत्र रमताम् ।**
> **तथा च व्यापारः कमलनयनाया[6] नयनयो-**
> **स्त्वयि व्यक्तस्नेहस्तिमितरमणीयश्चिरमभूत् ॥ ९ ॥**

---

तीप्राप्त्या । महामांसेति भाव्यङ्कसूचनम् । वीरहस्तान्मांसं गृहीत्वा वीरायाभिमतवरदानमिति श्मशानसिद्धयोगिनीमतम् । यद्वा उभयथा मरणमुपस्थितम् । महामांसविक्रये मालतीलाभोऽपि शङ्क्यत इति तत्करणम् । मांसविक्रयस्य मकरन्दसांनिधावशक्यत्वान्मकरन्दं मदयन्तिकां प्रत्युत्कण्ठयति—वयस्येति । मदयन्तिकायाः कृत इति शेषः । यद्वा अधीगर्थेति कर्मणि षष्ठी । **मकरन्दः** । अथ किं स्वीकारे । **तन्म इत्यादि** । तन्मम चित्तं हरति यदेतादृशैरङ्गैर्मामालिङ्गितवती । सरसः सरक्तः प्रहारो यत्र तादृशं मामवलोक्य । अत एव त्वरयागणितं स्खलत् प्रभ्रश्यदुत्तरीयं स्तनावरणवासो यस्याः सा । एतेन निरन्तरस्तनस्पर्शः सूचितः । अत एवानन्दसंदोहदायित्वादमृतसिक्तैरिव । भयवत्त्वेन त्रस्तैकवर्षीयहरिणस्येव चञ्चला दृष्टिर्यस्याः सा । 'वर्षोऽब्दो हायनोऽस्त्री स्यात्' इत्यमरः ॥ ८ ॥ **माधवः** । त्रासेन त्वदालिङ्गनं न तु स्नेहादिति शङ्कापनोदाय दूतीसुलभतयानुरागमेवाह—सुलभेति । **प्रमथ्येत्यादि** । सा तवालिङ्गनं प्राप्यान्यत्र कथं रमताम् । अपि तु नैव । इवशब्दोऽनवक्लृप्तौ । कुलीनैकमालिङ्ग्य नान्यत्र रमत इति भावः । कीदृशस्य । क्रव्यमाममांसमत्तीति क्रव्याद्व्याघ्रः । तं विनाश्य मरणकाले तां

---

१ अन्यदुपायान्तरम्. २ ०कायाम्. ३ सहसाप्र०. ४ रपाङ्गैः ५ न दुर्लभा. ६ वदनायाः.

**मक**[1]**०—**तदुत्तिष्ठ । पारासिन्धुसंभेदमवगाह्य नगरीमेव प्रविशावः ।

( उत्थाय परिक्रामतः । )

**माधवः**[3]**—**अयमसौ महानद्योर्व्यतिकरः[4] । य एषः

**जलनिबिडितवस्त्रव्यक्तनिम्नोन्नताभिः**
**परिगततटभूमिः स्नानमात्रोत्थिताभिः ।**
**रुचिरकनककुम्भश्रीमदाभोगतुङ्ग-**
**स्तनविनिहितहस्तस्वस्तिकाभिर्वधूभिः ॥ १० ॥**

( इति निष्क्रान्ताः सर्वे । )

**इति शार्दूलविभ्रमो नाम चतुर्थोऽङ्कः ।**

---

रक्षितवतः । एतेन कृतोपकारितोक्ता । अतोऽपि नान्यत्र रमते । पद्माक्ष्याश्चक्षुषोस्तथा तेन प्रकारेण त्वयि व्यापारश्च व्यक्तः स्नेहास्तिमितो मन्दोऽत एव रमणीयश्चिरमभूत् । रागेण तया साभिलाषमालोकितोऽसीति भावः । एतेनानुराग उक्तः । यदाहानुरागप्रकरणे—'तुष्यत्यस्य कथाभिस्तु सस्नेहं च निरीक्षते' ॥ 'क्रव्यमामिषमुद्घासम्' इति हारावली ॥ ९ ॥ पारा च सिन्धुश्च ते नद्यौ तयोः संभेदः संगमः । अवगाह्य विलोड्य । स्नात्वेति यावत् । क्रमशान्तिहेतुतया महामांसादानहेतुतया च स्नानम् । व्यतिकरः संगमः । **जलेत्यादि** । वधूभिर्नारीभिः सेविततटदेशः । कीदृशीभिः । जलेन निबिडितमङ्गलग्नं यद्वासस्तेन व्यक्तौ निम्नोन्नतौ जघनादिस्तनाद्यौ यासाम् । अत एव स्नानमात्रोत्थिताभिः । मात्रपदेन स्नानार्द्रवस्त्रापरित्यागः सूचितः । अत एव चाह्लादहेतुतया स्नानमपि । तौ दृष्ट्वा तासां लज्जामाह—मनोज्ञस्वर्णघटशोभावानाभोगः परिपूर्णता ययोरुच्चकुचयोस्तयोर्विनिहितौ दत्तौ हस्तावेव स्वस्तिकौ याभिस्ताभिः । हस्ताभ्यां स्वस्तिकोऽन्योन्यवामदक्षिणविन्यासः । यदाह—'मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ । उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥' अरालश्चैवम्—'आद्या धनुर्लताकारा कुञ्चितोऽङ्गुष्ठकस्तथा । शेषा भिन्नोर्ध्ववलिता अरालेऽङ्गुलयः करे ॥' कनकेत्यादिना तासां गौरीत्वमुक्तम् । मङ्गलकलशानाभिवैषां दर्शनेनेष्टसिद्धिरपि सूचिता ॥ १० ॥

असूत यं रत्नधरो द्विजेशो द्विजेशकन्या दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमच्चतुर्थो रसराशिवासः ॥

**इति चतुर्थोऽङ्कः ।**

---

१ एतन्नास्ति क्वचित्. २ वरदा. ३ मक०. ४ संभेदः. ५ स्नात.

## पञ्चमोऽङ्कः ।

( ततः प्रविशत्याकाशयानेन भीषणोज्ज्वलवेशा[1] कपालकुण्डला । )

**कपालकुण्डला**—

**षडधिकदशनाडीचक्रमध्यास्थितात्मा**
**हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।**
**अविचलितमनोभिः साधकैर्मृग्यमाणः**
**स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥ १ ॥**

---

**तत इति** । संप्रति प्रमथ्य क्रव्यादमित्यनेनाघोरघण्टकपालकुण्डलाप्रवेशे सूचिते महामांसविक्रयप्रतिज्ञया च माधवस्य श्मशानप्रवेशे सत्यङ्कावतारः । आकाशयानेन प्रवेशो योगसिद्धिसूचनाय । भीषणा भयंकरी । उज्ज्वलवेशा विशुद्धशरीरा । एतदपि योगिनीत्वादेव । **षडधिकेत्यादि** । स शक्तिनाथः शिवो जयति जययुक्तो भवति । कालसामान्ये भवत्विति वक्तव्ये भाष्यकारवचनात् कालत्रितयेऽपि वा लट् । श्मशाननाथस्य जयेन श्मशानसाधनसिद्धिः सूचिता । कीदृशः । अविचलितं निःस्पन्दीभूतम् । विषयान्तरव्यावृत्तमिति यावत् । मनो येषां तैः साधकैर्मृग्यमाणोऽन्विष्यमाणः । अनेन ध्यानानुष्ठानमुक्तम् । यदाह—' रूपवर्णप्रमाणाढ्यं परिकल्प्य सुबुद्धिना । तथा ध्यायेत देवेशं यथा चित्तं स्थिरं भवेत् ' ॥ चित्तस्थैर्यं तु निर्विषयतयैव । यदाह—' मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं मनः ॥ ' तथा च निराकारोऽप्ययं सहसैव न साक्षात्कारविषयो भवतीति न योग्यानुपलम्भमात्रेण निरस्य इत्यपि कटाक्षितम् । शक्तिभिर्ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीमाहेन्द्रीचामुण्डाचण्डिकाख्याभिरष्टाभिः परितो नद्धो वेष्टितो भैरवमूर्तित्वात् । यद्वा शक्तिभिर्ज्ञानेच्छाप्रयत्नात्मिकाभिः परिणद्ध उपचितः । अत एव शक्तीनामणिमादीनां नाथः प्रभुः । अत एव जयति सर्वोत्कृष्टो वर्तते । कीदृशः । षट्सु कर्णनाभिहृत्कण्ठतालुभ्रूमध्यवर्तिषु शिवशक्तिसंघट्टस्थानेषु नाडीसंघट्टेषु हृदाद्यधिष्ठितप्राणविशेषचलनयोगाच्चक्रेष्विव मध्येऽधिकं प्रधानं यद्दशनाडीचक्रमिडापिङ्गलासुषुम्णागान्धारीहस्तिजिह्वापूषारुणालम्बुषाकुहूशङ्खिन्याख्या दश नाड्यो हृद्वतैकोत्तरशतसंख्यासु तिर्यगूर्ध्वाधोगतनाडीषु प्रधानतमास्तासां चक्रं तस्य मध्ये पद्ममध्यवर्तिसूक्ष्माकाशदेशे प्राणाद्याधारे स्थित आत्मा कूटस्थो नित्यो यस्य स तथा । तत्र प्रमाणम्—'आशिरःश्रवणं देहं यद्यपि व्याप्य तिष्ठति । तथाप्यस्य परं स्थानं हृत्पङ्कजसमुद्गकम् ॥ इति । स्थितिरपि तस्य तत्र परमात्मतत्त्वाविर्भाव एव । यद्वा । षड्भिरधिका दशनाड्यः षोडशसंख्यास्तासां चक्रं तत्र मध्ये स्थितश्चासावात्मा चात्मस्वरूपः । तदुक्तम्—'सर्वं शिवमयं मतम्' इति । यद्वा षडधिकं यद्दशनाडीचक्रम् । मतभेदे-

---

१ ०ज्ज्वला.

इयमहमिदानीम् ।

**नित्यं न्यस्तषडङ्गचक्रनिहितं हृत्पद्ममध्योदितं**
**पश्यन्ती शिवरूपिणं लयवशादात्मानमभ्यागता ।**
**नाडीनामुदयक्रमेण जगतः पञ्चामृताकर्षणा-**
**दप्राप्तोत्पतनश्रमा विघटयन्त्यग्रे नभोऽम्भोमुचः ॥ २ ॥**

---

नैते पक्षाः । हृदि हृत्पद्मे विनिहितरूपो ध्यानमूर्तिः सन्यस्तद्विदां शिवसाक्षात्कारवतां सिद्धिदोऽणिमाद्यैश्वर्यप्रदः । अत्र मानम्—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥ सकलं चिन्तयेत्तस्मात्सिद्ध्यर्थं सततं शिवम् ॥ ध्यानेन तत्परं गच्छेत्सर्वैश्वर्यगुणाष्टकम् । महिमा लघिमाणुत्वं प्राकाम्यं वशितेशिता । प्राप्तिः कामावसायित्वं शम्भोरैश्वर्यमष्टधा' ॥ मृग्यमाणोऽप्ययं केनापि ज्ञायते न तु सर्वेण यदाह—'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ।' इति । यद्वा तद्विदां ताः सिद्धीरुपायदेशकालप्रमाणेतिकर्तव्यताभिर्ये विदन्ति तेषां सिद्धिदोऽभिलषितसिद्धिद इत्यर्थः ॥ १ ॥ आत्मनि योगसिद्धिमाह— **नित्यमित्यादि** । इयमहमिदानीमभ्यागताभीष्टस्थानाभिमुखमागता श्रीपर्वतादित्याक्षेपात् । कीदृशी । शिवस्वरूपमात्मानं पश्यन्ती । लयवशाच्चित्तैकाग्रतया । अनेन सर्वेषां तत्प्रकाशोऽपास्तः । कीदृशम् । नित्यमविनाशिनम् । न्यस्तानि देहे मन्त्रन्यासेनार्पितानि यानि षडङ्गानि हृदयशिरःशिखानेत्रकवचास्त्राणि तेषां चक्रे समूहे निहितमारोपितं मन्त्रन्यासेन । यदाह—'षडङ्गमेतत्कथितं सर्वसिद्धिप्रदायकम् । न्यसेद्वै भक्तियुक्तात्मा साधको ज्ञानचिन्तकः ॥ त्रिकालमेककालं वा शरीरे विन्यसेद्बुधः ।' अनेनाङ्गावरणमुक्तम् । नित्यन्यस्तेति पाठे नित्यं प्रत्यहं न्यस्तानीत्यर्थः । हृत्पद्ममध्ये हृत्कमलकर्णिकायां ध्यानाभ्यासात्सूर्यवदुदितम् । यदाह—'पद्मसंकाशसंस्थानं हृदयं तत्र दृश्यते । सूक्ष्मो हि पुरुषो ज्ञेयः परमात्मा हृदि स्थितः ॥ अभ्यासात्पश्यते सूर्यं परमात्मानमात्मना'। नाडीनां पूर्वोक्तानामिडापिङ्गलादीनामुदयक्रमेण वायुपूरणपरिपाट्या जगतः शरीरस्य पञ्चभूतात्मकस्य पञ्चामृतानां पृथिव्यप्तेजोवाय्वाकाशानां योगर्द्धिबलाद्य आकर्षस्तस्मादप्राप्तोऽलब्ध उत्पतनेनाकाशयानेन श्रमो यया सा । यद्वा अमृतमिवामृतं देहस्थितिहेतुत्वात् । तत् पुनर्बिन्दुस्थानात् कुण्डलिनीस्रावणेन स्रवद्रसविशेषो रसनाधःस्थितरन्ध्रस्रवद्रसविशेषो वा । स हि व्यापकत्वेन पञ्चशब्दवाच्यः । तदाकर्षणात् । यद्वा जगतः शरीरस्य पञ्च यान्यमृतानि शिवशक्त्यात्मकानि रूपरसगन्धस्पर्शशब्दलक्षणानि नित्यानि स्थूलमहाभूतमामात्रा परिपोषकाणि । योगिनीनां तेषामुपयोगात्तदाकर्षणेन सामर्थ्यादिकं योगिनीनामिति भावः । न च लयवशत्वेन निष्क्रियतयोत्पतनं न संभवतीति वाच्यम् । लयस्यान्यत्रापि सामर्थ्यात् । यदाह—'मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम् । तथापि योगिनां योगो ह्यविच्छिन्नः प्रकीर्तितः ॥' उत्पतनादिमाहात्म्यादेवाग्रेभुवः पुरोवर्तिनो मेघान् विघटयन्ती द्विधा

---

१ नित्यन्य०. २ अग्रेभवो.

अपि च ।

उल्लोलस्खलितकपालकण्ठमालासंघट्टक्कणितकरालकिंकिणीकः ।
पर्याप्तं मयि रमणीयडामरत्वं संधत्ते गगनतलप्रयाणवेगः ॥ ३ ॥

तथा हि ।

विष्वग्वृत्तिर्जटानां प्रचलति निबिडग्रन्थिबद्धोऽपि भारः
संस्कारक्काणदीर्घं पटु रटति कृतावृत्तिखट्वाङ्गघण्टा ।
ऊर्ध्वं धूनोति वायुर्विवृतशवशिरःश्रेणिकुञ्जेषु गुञ्ज-
न्नुत्तालः किंकिणीनामनवरतरणत्कारहेतुः पताकाः ॥ ४ ॥

---

कुर्वती । अग्रे नभ इति पाठ आकाशमेघानग्रे विघटयन्तीत्यर्थः । न च नभःपदवैयर्थ्यम् । वनपर्वतादावपि मेघसद्भावेन तद्विघटन आकाशगामित्वोत्कर्षाप्रतिपादनात् । यद्वा । अग्रे नभो नभसि मेघान् विघटयन्ती । अग्रेशब्दो विभक्तिप्रतिरूपको निपातः । तस्य विभक्त्यर्थेऽव्यीभावः । अनेन श्लोकद्वयेन शान्तो रस उक्तः । अत्र भरतोऽपि 'शान्तस्तु नवमो रसः' इत्याह । स च विषयवैरस्यादुपजायते । यदाह । 'शान्तो विषयवैरस्याद्रसः संजायते पुनः ।' इति ॥ २ ॥ कपालकुण्डलायाः पूर्वोक्तभीषणोज्ज्वलत्वमुपपादयति—**उल्लोलेति** । गगनतलगमनवेगो मयि सकलं रमणीयडामरत्वं रमणीयत्वं मनोहरत्वं डामरत्वं भीषणत्वमुद्भटत्वं वा केलिसंरम्भनिर्भरत्वं वा संधत्ते समर्थं कुरुते । 'डामरोड्डामरौ भीमे केलिसंरम्भनिर्भरे' । इति रत्नकोशः । वेगबलादुल्लोलेन यातायातेन स्खलिता या कपालानां कण्ठवर्तिनी माला तस्याः संघट्टक्कणितेनान्योन्यकपालसंघृष्टिध्वनिना कराला मूका क्षुद्रघण्टिका यत्र सः । कपालमालोच्चध्वनिना तद्ध्वनेरश्रवणान्मूकत्वमिव मूकत्वम् । यद्वा तथाविधक्कणितेन कराला दन्तुरा । विषमेति यावत् । किङ्किणी यत्र सः । कुलयोगिनीनां किङ्किण्यादिध्वनिना सानन्दत्वम् । यदाह—'समुद्रघोषसंभारकिङ्किणीघण्टिकास्वनैः । सदानन्दो भवेद्योगी न निद्रा न क्षुधा तृषा ॥' इति ॥ ३ ॥ तदेवाह—**विष्वगिति** । जटानां भारः समूहो निबिडं दृढं यथा तथा ग्रन्थिबद्धोऽपि विष्वग्वृत्तिः सर्वतोव्यापी सन् प्रचलति । गगनगमनवेगादित्यर्थात् । विष्वक्शब्दो नानार्थः सुषमादिषु पठ्यते तेन षत्वम् । कृतावृत्तिः कृतगतागता कृतमण्डलभ्रमणा खट्वाङ्गसहिता घण्टा संस्कारेण संतानेन यः क्काणो ध्वननं तेन दीर्घं पटु रमणीयं च यथा तथा रटति शब्दायते । एतेन डामरत्वमुक्तम् । खट्वाङ्गं वाद्यभेदः । वायुरूर्ध्वं पताका धूनोति कम्पयति । धूञ् कम्पने । दीर्घान्तः स्वरतीत्यादिसूत्रे न्यासकारेणोक्तः । कीदृशः । विवृतानि यानि निर्मांसतया शवशिरांसि तेषां श्रेणयः पङ्क्तयस्तासां यानि कुञ्जानि गहनाः प्रदेशास्तेषु गुञ्जन्ध्वनन् । अत एवोत्ताल उद्भटध्वानः क्षुद्रघण्टिकानामजस्ररणत्कृति-

---

१ उद्वृत्त; उद्भिन्न. २ नद्धो. ३ पताकाम्.

( परिक्रम्यावलोक्य च गन्धमाघ्राय । ) इदं तावत्पुराणनिम्बतैलाक्तपरिभृ-ज्यमानरसोनगन्धिभिश्चिताधूमैः[1] पुरस्ताद्विभावितस्य[2] महतः श्मशानवाटस्य नेदीयः करालायतनं यत्र पर्यवसितमन्त्रसाधनस्यास्मद्गुरोरघोरघण्टस्याज्ञया सविशेषमद्य पूजासंभारो मया संनिधापनीयः । कथितं च[3] मे गुरुणा—वत्से कपालकुण्डले अद्य[4] भगवत्याः करालायाः प्रागुपयाचितं स्त्रीरत्नमुप-हर्तव्यं तदत्रैव नगरे विदितं[5]मास्ते इति । तद्विचिनोमि । ( सकौतुकमग्रेव-लोक्य । ) तत्कोऽयमतिगम्भीरमधुराकृतिरुत्तम्भितकुटिलकुन्तलः[6] कृपाण-पाणिः श्मशानवाटमवतरति । य एष

कुवलयदलश्यामोऽप्यङ्गं दधत्परिपाण्डुरं
ललितचरणन्यासः श्रीमान्मृगाङ्कनिभाननः ।
हरति विनयं वामो यस्य प्रकाशितसाहसः
प्रविगलदसृक्पङ्कः पाणिर्ललन्नरजाङ्गलः ॥ ५ ॥

---

हेतुश्च । अनेन रमणीयत्वमुक्तम् । ' निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि । ' इत्यमरः । यद्वा पटुरटनेन रमणीयत्वं पताकाकम्पनेन डामरत्वमत्रोक्तम् ॥ ४ ॥ **इदं तावदिति** । पुराणेत्यादिना चिताधूमानां स्वभावाख्यानम् । अक्तं म्रक्षितम् । परिभर्जनं वह्निमध्यनिक्षेपपाकः । अम्लरसेनैकेनोनं पञ्चरसं रसोनम् । लसून इति ख्यातम् । वट्यते वेष्ट्यतेऽनेनेति वाटः । हलश्चेति घञ् । ' पन्था वाटः पथो माथः ' इति भागुरिः । नेदीयो निकटम् । पर्यवसितं समाप्तं विनष्टं च । मन्त्रसाधनं पुरश्चरणजपादि । संभारः समूहः । उपयाचितं मनीषितार्थं स्वीकृतम् । ' यद्दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं तत्तु दोहदं संप्रचक्षते ॥ ' इति हारावली । **स्त्रीरत्नमिति** । 'जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते' । इति विश्वः । विदितमुपलब्धम् । विचितमिति पाठोऽन्विष्टम् । **गम्भीरेत्यादि** । ' विकाराः सहजा यस्य हर्षक्रोधभयादिषु । भावेषु नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ॥ ' इति । अभ्यासात्करणानां तु श्लिष्टत्वमुपजायते । महत्स्वपि विकारेषु तन्माधुर्यमुदाहृतम् ॥ ' इति भरतः । उत्तम्भितो जूटाकारेण बद्धः कुटिलो वक्रः कुन्तलः केशो यस्य सः । एतेन रौद्ररसवत्तोक्ता । **कुवलयेत्यादि** । य एष स्वभावान्नीलनलिनपत्रवच्छ्यामोऽपि विप्रलम्भात्सर्वतः पाण्डुरमङ्गं दधत् । ललितो रमणीयो विकटो भीषणो न्यासो देहन्यासो यस्य सः । ललितत्वं स्वभावात् । विकटत्वं रौद्रात् । यद्वा न्यासः करचरणादिचालनम् । श्रीमानतिरम्यः । मृगाङ्कन्निरतिशया भा यत्र तादृशमाननं यस्य । अत एव हेयत्वार्थं मृगाङ्कपदेनोपन्यासः । यस्य वामः पाणिर्विनयं हरत्यपनयति । अत्र हेतुमाह । प्रविगलदसृक्पङ्कः स्रवद्रुधिरकर्दमः ।

---

१ रसोनकरस. २ अधस्तात्. ३ हि. ४ अद्य मया. ५ विचितं. ६ कुन्तलभारः. ७धूसरम्. ८ विकट.

( निरूप्य । ) अये स एष कामन्दकीसुहृत्पुत्रो महामांसस्य पणायिता माधवः । तत्किमनेन । भवतु समीहितं संपादयामि । विगलितप्रायः पश्चिमसंध्यासमयः । तथा हि । संप्रति

**व्योम्नस्तापिच्छगुच्छावलिभिरिव तमोवल्लरीभिर्व्रियन्ते**
**पर्यन्ताः प्रान्तवृत्या पयसि वसुमती नूतने मज्जतीव ।**
**वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशं**
**प्रारम्भेऽपि त्रियामा तरुणयति निजं नीलिमानं वनेषु ॥ ६ ॥**

( परिक्रम्य निष्क्रान्ता । )

**विष्कम्भकः ।**

---

( ततः प्रविशति यथानिर्दिष्टो माधवः । )

**माधवः**—( साशंसम् । )

**प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-**
**स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।**
**यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-**
**दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ७ ॥**

---

ललच्चलं नरजाङ्गलं महामांसं यत्र सः । नहि विनीतो रक्तं महामांसं च धारयति । अत्र पूर्वार्धेन ललितत्वमुत्तरार्धेन विकटत्वमुक्तम् । अत एव व्यक्तसाहसः । महामांसधारित्वेन वीरबीभत्सरसावुक्तौ । यदाह—'उत्साहाध्यवसायाद्विस्मयहर्षाच्च मोहाच्च । विविधाद्गन्धविशेषाद्वीररसो नाम संभवति ॥ अनभिमतदर्शनेन च गन्धरसस्पर्शशब्ददोषैश्च । उत्तेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥' दधदित्यत्र नाभ्यस्ताच्छतुरिति नुमो निषेधः । 'जाङ्गलं निर्जनस्थाने त्रिलिङ्ग्यां पिशितेऽस्त्रियाम्' इति मेदिनीकरः ॥ ५ ॥ पणायिता विक्रेता । विगलितप्रायो भ्रष्टप्रायः ॥ **व्योम्न इत्यादि ।** गगनस्योपान्ता ध्वान्तलताभिर्व्याप्यन्ते । तमालपुष्पस्तबकपङ्क्तिभिरिव । एवं च पृथिव्युपान्तभागेन नूतने जले मज्जतीव । उत्प्रेक्षेयम् । त्रियामा रात्रिः । प्रारम्भे प्रदोषमात्रेऽपि नीलत्वं निजं वनेषु तरुणयति । कीदृशम् । वातानां समूहा वात्या तस्याः संवेगेन विवर्तनेन विष्वक् चतुर्दिशं वितता विस्तारिता वलयिता वलयाकारा स्फीता गभीरा या धूम्या धूमसमूहो नीहारो वा तत्सदृशम् । एवं चान्धकारोपगमाद्गतप्राया संध्येत्यर्थः । 'धूम्या धूमसमूहेऽपि नीहारपि निगद्यते ।' इति धरणिः ॥ ६ ॥ साशंसं सप्रार्थनम् । **प्रेमेत्यादि ।** मुग्धदृशो मालत्यास्तास्ता अनुभूताश्चेष्टाः संभोगे चुम्बनादयो मयि पुनर्भूयासुः । 'चेष्टाविशेषाः संभोगे चुम्बनालिङ्गनादयः ।' इति

---

१ यथासमी०. २ प्रायश्च. ३ भ्रियन्ते. ४ संगेन. ५ विलसित. ६ शुद्धवि. ७ विषय. ८ आशंका. ९ सान्द्रोदयः

किं च ।

अतिमुक्तमद्ग्रथितकेसरावली-
सतताधिवाससुभगार्पितस्तनम् ।
अपि कर्णजाहविनिवेशिताननं
प्रियया तदङ्गपरिवर्तमाप्नुयाम् ॥ ८ ॥

अथ वा दूरे तावदेतत् । इदमेव प्रार्थये ।

संभूयेव सुखानि चेतसि परं भूमानमातन्वते
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः ।
यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितं
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥ ९ ॥

कण्ठाभरणम् । कीदृश्यः । प्रथमं प्रेम्णा संभोगप्रीत्यार्द्रा इव तापशान्तिहेतुरोमाञ्चादिजनकत्वात् । ततो विश्वासमुपेत्य चित्तप्रसादस्पृशः । ततः परिचयात्सुखास्वादभेदादुद्भटरागोद्रेकाः । निसर्गमधुराः सहजमनोज्ञाः । यास्वाशंसोपनीतास्वपि क्षणान्निरतिशयसुखघनो लयो लीनता भवति । तासु चेष्टासु मनो लीयत इत्यर्थः । कीदृशः । अन्तःकरणस्य मनसो बाह्येन्द्रियव्यापारावरोधनशीलः । मालतीमयत्वेन मन्मनो बाह्यविषये न व्याप्रियत इत्यर्थः । अत एवानेकशङ्कातङ्कसंकुलेऽपि तत्र स्थाने माधवस्य न साध्वसादिकमपीति भावः । यद्वा तास्ताश्चेष्टा बकुलवीथ्यादिषु यास्तया कृतास्तास्ता मयि भवेयुः । तासामेव दुर्लभत्वादाशंसनीयता ॥ ७ ॥ प्रथमप्रीतिहेतुत्वादालिङ्गनमाशास्ते--**अतिमुक्तेत्यादि** । प्रियया सह तदङ्गपरिवृत्तिमप्यहमाप्नुयाम् । तत्तस्या अङ्के क्रोडे सर्वतोभावेन वर्तनम् । हृदयालिङ्गनमित्यर्थः । अपिर्भिन्नक्रमः । यद्वा तदङ्के परिवर्तनमूर्ध्वाधःक्रमेण पुरुषायितमाप्नुयाम् । कीदृशः । प्रियया कर्णजाहे कर्णमूले विनिवेशितमाननं यत्र । ममापि सः । प्रथमपक्षे कर्णमूलेऽर्पितमाननं येन सः । 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' इति मूले जाहच्प्रत्ययः । अतिक्रान्ता मुक्ता यया सातिमुक्ता । मुक्ताहारमपास्य तदर्पणादतिक्रमः । यद्वा अतिमुक्तातिविरला मालत्यवलोकनव्यासङ्गात् । एतादृशी या मद्ग्रथिता केसरावली तस्याः सतताधिवासेन सुभगः सुरभिरर्पितः स्तनो यत्रेति क्रियाविशेषणम् । अविमुक्तेति पाठो न मनोहरः । अवियुक्तत्वादेव सतताधिवासस्य लब्धत्वात्सततग्रहणस्य व्यर्थत्वात् ॥ ८ ॥ **संभूयेत्यादि** । तस्यास्तन्मुखं पुनरपि पश्येयमित्येतदेव प्रार्थये । अङ्कप्राप्तेर्दुर्लभत्वादिति भावः । कीदृशम् । कामस्य मङ्गलार्थं गृहम् । तत्र कामो हृष्टो वसतीत्यर्थः । यद्वा कामस्य मङ्गलघटितं हिरण्यघटितं गृहम् । 'कल्याणं मङ्गलं विद्यात्काञ्चनं च तदक्षमम् ।' इति विश्वः । यद्वा अनङ्गस्य मङ्गलानामुपचयहेतूनां सौकुमार्यादीनां गृहम् । अत एवोत्प्रेक्षते । बा-

१ कक्रम०, मुद्ग्रथित. २ कण्ठ. ३ ननः. ४ दङ्क. ५ परिवृत्तिं. ६ मेव तावत्. ७ कलोदयात्; दुपचितैः. ८ वासादितं.

यत्सत्यमधुना[1] तत्संदर्शनेनातिस्वल्पोऽपि न विशेषः। मम हि संप्रति सातिशयप्राक्तनोपलम्भसंभावितात्मजन्मनः[2] संस्कारस्यानवरतप्रबोधात्[3] प्रतायमानस्तद्विसदृश[4]प्रत्ययान्तरैरतिरस्कृतप्रवाहः[5] प्रियतमास्मृतिप्रत्ययोत्पत्तिसंतानस्तन्मयमिव करोत्यन्तर्वृत्ति[6]सारूप्यतश्चैतन्यम्। तथा हि।

**लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च**
**प्रत्युप्तेव च वज्रलेप[7]घटितेवान्तर्निखातेव च।**

---

लचन्द्रकलोदयाद्गृहीतैः सारैरुत्पादितमिति। अत्रोदयादिति भावेन द्रव्याभिधानान्नवेन्दुकलाया अवचिताः सारास्तैरुत्पादितामिवेत्यर्थः। सकलजनानन्दिनवेन्दुकलातोऽप्यधिकमनोहरमिति भावः। यद्वा ल्यब्लोपे पञ्चमी। तेन बालेन्दुकलोदयं प्राप्यावचितैरित्यर्थः। यद्वा बालेन्दुकलोदयात्प्रतिपच्चन्द्रकलोदयादारभ्यावचितैः पूर्णिमापर्यन्तमित्यर्थात्। आरभ्येत्यस्य लाभः पञ्चमीत एव। तथा च पूर्णेन्दुना मुखसाम्यं लभ्यते। क्वचित्कलोच्चयादिति पाठः। तत्रोच्चयात्समूहादित्यर्थः। यत्र मुखे संमुखीभूते सुखानि। कर्तृणि। मिलित्वेव परं भूमानं बाहुल्यं विस्तारयन्ति चित्ते। अनेनान्तःप्रीतिरुक्ता। इवशब्द उत्प्रेक्षायाम्। एवपाठे विस्मय एवशब्दः। बहिःप्रीतिमाह--नेत्रोत्सवोऽलब्धलाभाभिमानोऽनुरागं प्रस्तौति स्रवति। रतेर्द्रवमयोत्वात्। समाधिरलङ्कारः॥ ९॥ मानसमौत्सुक्यातिशयमाह—**मम हीति**। सामकीनः प्रियास्मरणरूपज्ञानोत्पत्तेः संतानः परिणतिसमूहः स्मृतिरूप एव मम चैतन्यमात्मतत्त्वं तन्मयमिव करोति मालतीमयं करोतीत्यर्थः। कीदृशः। प्रतायमानो दीर्घीभवन्। अत्र हेतुः संस्कारस्य भावनाया अतिशयितप्रबोधादुद्रेकात्। कीदृशस्य संस्कारस्य। सातिशयात्सादरास्फुटाकाराद्वा बकुलवीथ्यां पूर्वकालानुभवाल्लब्धजन्मनः। प्रतायमानत्वमेवोपपादयति--तद्विसदृशैर्मालतीविलक्षणविषयैर्ज्ञानान्तरैरतिरस्कृतप्रवृत्तिः। तथा चान्तरा विषयान्तरास्फुरणान्न प्रवाहतिरस्कार इति भावः। नन्वात्मतत्त्वस्य पुष्करपलाशवन्निर्लेपतया कथं मालतीमयत्वमत आह--अन्तरिति। अन्तःपदमिह बुद्धितत्त्वपरम्। तथा च बुद्धितत्त्वस्य या प्रवृत्तिः सहजसिद्धो व्यापारः सा यत आत्मतत्त्वे भेदाग्रहात्प्रतिभासते तस्मात्। सांख्यदर्शने बुद्धेर्भोक्तृत्वात्। यद्वा अन्तर्वृत्तिरिति भावप्रधानम्। तथा चान्तर्वृत्तित्वमन्तरवस्थानरूपं सादृश्यमात्मबुद्ध्योस्तस्मात्। स्वोक्तमेव दर्शयति--**लीनेवेत्यादि**। सा प्रियास्माकं चेतसि लग्ना संबद्धा। संबद्धत्वे यथासंभवं प्रकारानाह--लीनेव निह्नुतेव। यत्र यस्य संबद्धस्य न प्रत्यक्षोपलम्भस्तत्र तल्लीनमित्युच्यते। यथा पयसि लीनं लवणम्। सर्वत्रात्र लग्नत्वस्य प्रकारभेदे-

---

१ अधुना संदर्शनं नेति स्वल्पोऽपि विशेषः. २ संभावितात्मनः. ३ प्रबोधनात्; प्रता०—प्रतीय०. ४ विसदृशैः. ५ प्रभावः. ६ करोति वृत्ति०. ७ लेख.

सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥ १० ॥

नोपमाभेदः पूर्वपूर्वापरितोषाद्वा । तथा हि । लीनत्वस्याप्रतिभासात्स्पष्टप्रतिभासार्थमाह— प्रतिबिम्बितेव । यत्र स्वच्छद्रव्याभिहतं चक्षुः परिवृत्य द्रव्यान्तरं गृह्णाति तत्तत्र प्रतिबिम्बितमित्युच्यते । यथा स्फटिके रक्तपुष्पम् । प्रतिच्छायाया वस्त्वन्तरसंसर्गाधीनत्वेनासाहजिकत्वात्साहजिकत्वोपवर्णनायाह—लिखितेव । यत्प्रशिथिलावयवसंयोगाश्रयेण द्रव्येण घनद्रव्योपरि संस्थानविशेषवन्निर्मीयते तत्तत्र लिखितमित्युच्यते । यथा पत्रे लिपिः । लिखितस्य जलाद्युपनिपातविनाशितया न चिरस्थायित्वमतस्तदर्थमाह––उत्कीर्णरूपेव । यद्यत्र निबिडद्रव्ये तादृशेन किंचिदवयवविभागः क्रियते तत्तत्रोत्कीर्णम् । यथा टङ्कादिना शिलादि । अस्याप्येकभागवृत्तितया सर्ववृत्तित्वार्थमाह––प्रत्युप्तेव । प्रत्युप्तमर्धरोपितम् । यद्यत्र द्रव्यान्तरसंसर्गि तत्तत्र प्रत्युप्तम् । यथाङ्गुलीयके मण्यादि । अस्यापि शक्योद्धारत्वान्निबिडसंबन्धायाह––वज्रलेपघटितेव । यद्यत्र किंचिद्धनद्रव्याभिघातजन्यकर्मजन्यसंयोगविभागानाश्रयि तत्तत्र वज्रलेपघटितम् । यथा हीरकादि । तथापि लेपस्य बहिर्वृत्तित्वादन्तःसंसर्गार्थमाह––अन्तर्निखातेव । यद्यत्र संबद्धमूर्ध्वाधःसंयोगादिना धृतं नोपलभ्यते तत्तत्र निखातमुच्यते । यथा भूमौ मूलकादि । निखातत्वं सर्वरोपणमुप्तत्वमर्धरोपणमित्यनयोर्भेदः निखातस्यापि निर्बन्धातिशयेन शक्योद्धारतया विवेकादिदुःशक्यत्वार्थमाह––कामस्य पञ्चभिः शरैः कीलितेव । कीलितस्य प्रतिकीलनोद्धार्थतयाशक्योन्मूलनायाह–चिन्तापरम्परासूत्रसमूहेन गाढं यथा स्यात्तथा स्यूतेव सीवनं प्रापितेव । जालनिबिडसीवनेनानुच्छेदनीयत्वमुक्तम् । इहोपधेयाभेदेऽप्युपाधिभेदादपौनरुक्त्यमित्यवधेयम् । एकमेव हि वस्तु तत्तदुपाधिवैशिष्ट्याद्भिन्नबुद्धिविषयो यथा दण्डिकुण्डलित्वादि । यद्वा नोऽस्माकं चेतसि सा लग्ना दृढं संबद्धा । दृढसंबद्ध एव लग्नपदार्थः । 'शरो लग्नः' इत्यादौ तथादर्शनात् । दृढसंबद्ध एव नानाप्रकारेण स्थिरीक्रियते । कामबाणपञ्चकेन कीलितेव । चिन्ताप्रवाहरूपतन्तुसंतत्या स्यूतेव । ननु द्वयमप्यदो न युक्तम् । तया सहान्तरस्य चैतन्यस्य संबन्धाभावात् । अतो विषयविषयिणोस्तदात्मरूप एव संबन्ध इति योगाचारमतमनेनोक्तम् । प्रतिबिम्बितेवेति सांख्यमतोपदर्शनम् । लिखितेवेति सौत्रान्तिकमतोपदर्शनम् । तत्र हि ज्ञानेन स्वीयाकारार्पणं विषये क्रियत इति तत्तदाकारस्याभिव्यक्तिः । शिलादौ तुरगादिवदिति लिखनसाम्यम् । उत्कीर्णरूपेवेति विषयाकारेण चैतन्यपरिणाम इहोत्कीर्णरूपता । अतस्त्रिदण्डिमतम् । प्रत्युप्तेवेति पूर्वरूपतिरोधानादन्यरूपाविर्भावेन सुवर्णरचितभाजनादाविव तत्तद्विषयाकारतया ज्ञानविपरिणाम इति पातञ्जलमतम् । वज्रलेपघटितेवति नैयायिकमतम् । तदीयमात्ररूपो हि स्वभावभेदः प्रकाशस्य विषयविषयिभावः । अयं च यावद्वस्तुस्थिरतया वज्रलेपघटनातो न भिद्यते । अन्तर्नि-

( नेपथ्ये कलकलः । )

**माधवः**—( आकर्ण्य । ) अहो संप्रति प्रगल्भमान[1]कौणपनिकायस्य महती श्मशानवाटस्य रौद्रता । अस्मिन् हि

> **पर्यन्तप्रति[2]रोधिमेदुरचयै[3]स्त्यानं चिताज्योतिषा[4]-**
> **मौज्ज्वल्यं परभागतः प्रकटयत्याभोगभीमं तमः ।**
> **संसक्ताकुलकेलयः किलकिलाकोलाहलैः संमदा-**
> **दुत्ता[5]लाः कटपूतनाप्रभृतयः सांराविणं कुर्वते ॥ ११ ॥**

खातेवेति विज्ञानवादिमतोपदर्शनम् । अत्र हि विज्ञानस्यान्तर्निखननान्न बाह्यवस्तुस्थितिरिति । इहापि तथा । एते च विषयविषयिभावविकल्पास्तच्चिन्ताप्रकारत्वान्माधवस्य चित्ते विपरिवर्तन्ते । एवं च चेतसा सह संबन्धः । पश्चात्कीलनेन वा सीवनेन वा गाढसंबद्धतां गता भवति लग्ना । ततश्च तद्दर्शनं महापुरुषानुभूतं तस्येति किमत्र चित्रमिति भावः । अत्र पञ्चभिरित्यनेन युगपत्कामबाणविषयत्वमात्मनो निवेदयता दुःसहदशाशालित्वं सूचितम् । चेतोभुव इत्यनेन तत्प्रभवस्य तस्य मर्मज्ञता ध्वनिता । 'यथाशक्ति यथायुक्ति यथागति यथामति । यथाधीति यथानीति विवेचितमिदं मया ॥' ॥१०॥

**माधवः** । कौणपनिकायो राक्षससमूहः । रौद्रता भीषणत्वम् । **पर्यन्तेत्यादि** । तमः कर्तृ । चिताज्योतिषामौज्ज्वल्यं परभागतो गुणोत्कर्षाधानात्प्रकटयति व्यक्तीकरोति । तमसि संनिहिते सति तेजसां कान्त्युत्कर्षः स्फुट एवेति भावः । कीदृशं तमः आभोगात्परिपूर्णतया भीमम् । चितालोकमण्डलस्य पर्यन्तं निकटदेशे प्रतिरोधनशीलं मेदुरं स्निग्धं चयेन संघेन स्त्यानं घनम् । यद्वा । पर्यन्ते यः प्रतिरोधोऽन्धकारस्य प्रसरणनिवारणं तेन मेदुरो मांसलो यश्चयस्तेन घनमित्यर्थः । कटाः शवाः पूतनाः श्मशानवासिनो राक्षसास्तत्प्रभृतयोऽन्येऽपि तत्रत्याः शृगालदयः किलकिलारूपारावैः सांराविणं परस्पराह्वानं कुर्वते । संमदाद्धर्षात् । उत्ताला उद्भटाश्चञ्चला वा । तालादुद्गताः । सुप्सुपेति समासः । तेनान्योन्यहस्ततालवन्त इति वा । संसक्ता मिलिता आकुलास्त्वरायुक्ताः केलयः क्रीडा येषां ते । यद्वा संसक्तत्वेनाकुल केलिर्येषां ते । संसक्त इति भावप्रधानम् । यद्वा संसक्ता कुलेन स्वयूथेन केलिर्येषां ते त्रिपदबहुव्रीहावुत्तरपदत्वाभावान्न पुंवद्भावः । 'सान्द्रे स्निग्धे च मेदुरः' इत्यमरः । किलकिलेत्यव्यक्तशब्दः । अविभावितविशेषः शब्दसमूहः कोलाहलः । संपूर्वाद्रौतेरभिविधौ भाव इनुण् । तदन्तात्स्वार्थेऽण् । आदिवृद्धिः । शवानां शब्दकरणं वेतालाधिष्ठानात् । रौद्ररस इह । तल्लक्षणं तु भरते—' इति रौद्रो रसो दृष्टो रौद्रैरेवाङ्गचेष्टितैः । शस्त्रप्रहारभूयिष्ठभयकम्पाक्रियात्मकः ॥ ' इति

१ वर्धमानं; संप्रतीतस्ततः प्रवर्तमान–निकरस्य. २ प्रतिरोध. ३ वन. ४ रोचिषाम्. ५ उत्तानाः.

भवत्वाघोषयामि तावत् । ( उच्चैः ) भो भोः श्मशाननिकेतनाः कटपूतनाः ।

**अशस्त्रपूतमव्याजं पुरुषाङ्गोपकल्पितम् ।**
**विक्रीयते महामांसं गृह्यतां गृह्यतामिदम् ॥ १२ ॥**

( पुनर्नेपथ्ये कलकलः । )

**माधवः**—कथमाघोषणानन्तरमेव सर्वतः समुच्चलद्रुत्तालवेतालमुक्त-तुमुलाव्यक्तकलकलाकुलः प्रचलित इवाविर्भवद्भूतसंकटः श्मशानवाटः । आश्चर्यम् ।

**कर्णाभ्यर्णविदीर्णसृक्कविकटव्यादानदीप्ताग्निभि-**
**र्दंष्ट्राकोटिविसङ्कटैरित इतो धावद्भिराकीर्यते ।**
**विद्युत्पुञ्जनिकाशकेशनयनभ्रूश्मश्रुजालैर्नभो**
**लक्ष्यालक्ष्यविशुष्कदीर्घवपुषामुल्कामुखानां मुखैः॥१३॥**

---

भो भो इत्यभिमुखीकरणरूपे संबोधने । निकेतनं गृहम् । **अशस्त्रेत्यादि** । अशस्त्रपूतं संमुखपतितस्य स्वर्गिणो मांसं शस्त्रपूतमतस्तेषामग्राह्यम् । इदमिति न तादृशमिदम् । यद्वा अशस्त्रपूतं शस्त्रेणाच्छिन्नम् । धातूनामनेकार्थत्वात् । शस्त्रहतमांसस्य रणे सुलभतया तेषामस्पृहात इदमतादृशमिति भावः । अव्याजं निष्कपटम् । यद्वा ' इष्टसिद्धिं पणीकृत्य साहसाद्यदुपार्जितम् । अशस्त्रपूतं निर्व्याजमेतन्मांसं विदुर्बुधाः ॥ इति पारिभाषितमेव । ' स्त्रियश्चतुष्पदे श्रेष्ठाः पुरुषा द्विपदे तथा । ' इति वचनात्प्राशस्त्यार्थमाह—पुरुषस्याङ्गादा-नीयोपकल्पितम् । विक्रीयत इष्टसिद्धिमूल्येनेत्यर्थात् । विक्रयस्य मूल्यसापेक्षत्वात् । यद्वा विक्रीयते दीयते धातोरनेकार्थत्वात् ॥१२॥ ' उच्चैर्घुष्टं तु घोषणा ' इत्यमरः । वेतालः श्मशानदेवताकिङ्करः । तुमुलं रणसंकुले ' इत्यमरः । तेषामन्योन्यस्पर्धया रणे संकुलत्वम् । आविर्भावितार्थत्वेनाव्यक्तत्वम् । प्रचलित उच्चावचः । संकटो व्याप्तः । **कर्णेत्यादि** । उल्का ज्वाला मुखे येषां ते उल्कामुखाः शृगालभेदाः । तेषां मुखैर्नभ आकीर्यते व्याप्यते । यद्वा उल्कामुखा एव एतन्नामप्रसिद्धा रणवासिणो जन्तुभेदाः । कीदृशैः । कर्णस-मीपविदीर्णसृक्कभ्यां करालं यद्व्यादानमास्याविकाशस्तेन दीप्तोऽग्निर्येषु । ऊर्ध्वाधःस्थित-दंष्ट्राणां कोटिभिरग्रैर्विसङ्कटैः संकुलैर्विकरालैर्वा । सर्वतो धावद्भिः । विद्युत्पुञ्जतुल्यानि केशनयनभ्रूश्मश्रुजालानि यत्र तैः । पिङ्गलत्वात्केशादीनां विद्युत्तुल्यता । अत एवोल्का-मुखः शृगालान्यो जन्तुभेद इति पक्षः साधीयान् । उल्काप्रकाशाल्लक्ष्याण्यन्यदालक्ष्याणि दुर्बलानि दीर्घाणि वपूंषि येषां तेषाम् । एतेन दुर्बलत्वमुक्तम् । ' प्रान्तावोष्ठस्य सृक्कणी ' इत्यमरः । केशेत्यादौ पूर्वनिपातविधेरनित्यत्वाद्भ्रूशब्दमपहाय केशशब्दस्य पूर्वनिपातः । लक्ष्यशब्दो ण्यति यकारवान् । कर्मणि घञि तद्रहित इत्यवधेयम् । अद्भुतरसोऽयम्॥१३॥

---

१ तदुच्चैराघोषयामि । भोः. २ निर्व्याजं. ३ तामिति. ४ आभाषणा-आघोषा. ५ उत्ताल-तुमुलव्यक्त; वेतालकुलमुक्त. ६ रापूर्यते. ७ विकाश

अपि च ।

**एतत्पूतनचक्रमक्रमकृतग्रासार्धमुक्तैर्वृका-**
**नुत्पुष्णत्परितो नृमांसविघसैराघर्घरं क्रन्दतः ।**
**खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-**
**स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते ॥ १४ ॥**

( समन्तादवलोक्य विहस्य च । ) अहो प्रकारः पिशाचानाम् । एते हि ।

**ततपृथुरसनोग्रमास्यगर्तं**
**दधति विदार्य विवर्णदीर्घदेहाः ।**
**ललदजगरघोरकोटराणां**
**द्युतिमिह दग्धपुराणरोहिणानाम् ॥ १५ ॥**

**अपि चेति** । अपिर्जुगुप्सायाम् । च समुच्चये । गर्हामाह—**एतदित्यादि** । एतत्पूतनचक्रं श्मशानप्रेतसमूह आलोक्यते । किं कुर्वत् । अत्याकुलतयाक्रमेण युगपत्कृतो यो ग्रासस्ततोऽर्धं भूमौ पतितमर्धं चर्वणेन मुख एव स्थितम् । तत्र भूमिपतितैरर्धमुक्तैर्मनुष्यमांसविघसैरुच्छिष्टैः सर्वत्र वृकान्कोकानारण्यकुक्कुरादीनुत्पुष्णत्पुष्टान्कुर्वत् । अक्रमत्वं प्रतिपक्षशङ्कया । अभिलाषातिशयाद्वा । कीदृशान् । अहमहमिकया मांसग्रहणादीषद्घर्घरमव्यक्तशब्दं यथा स्यादेवं रुदतः । एतत्तु कुक्कुरेषु स्फुटमेव । कीदृशं पूतनचक्रम् । खर्जूरद्रुमदघ्ना तत्प्रमाणा जङ्घा यस्य तत् । एतेन जङ्घानां ग्रन्थियोगित्वकर्कशत्वनीरसत्वलोमशत्वानि दर्शितानि । असिता श्यामा या त्वक् चर्म तया नद्धाः सर्वतो विस्तीर्णा याः स्नायवो 'नहरु' इति ख्यातास्ताभिर्ग्रन्थिषु संधिभागेषु घनानि दृढान्यस्थ्नां पञ्जराणि येषां तादृशा जरन्तो जीर्णाः कंकाला मांसादिशून्यास्थिभागा यस्य तत् । वृकपदं शृगालाद्युपलक्षणपरम् । 'कोक ईहामृगो वृकः' इत्यमरः । यद्वा 'शालावृकाः कपिक्रोष्टुश्वानः' इति नानार्थेऽमरदर्शनादेतस्यैवैकशब्दः वृकशब्दः । तेन भीमभीमसेनादिवदस्यापि तावदर्थप्रतिपादकतेत्यवधेयम् । यद्वा वृको 'घोघ' इति ख्यातः 'विघसो भोजनशेषेऽपि' इत्यमरः । 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः ॥१४॥

**विहस्येति** । अतिसात्त्विकेऽपि मयि भीषणत्वममी पूतनाः कुर्वन्तीत्यसंबद्धक्रियया हासः । यदाह—'असंबद्धैस्तु हासः स्याद्ग्राम्यपथ्याक्रियादिभिः ।' इति । प्रकारो वैलक्षण्यम् । **ततेत्यादि** । एते पूर्वोक्तादन्ये पिशाचा विस्तृतदीर्घजिह्वाभीषणमुखविवरं विदार्य व्यादाय दग्धपुराणरोहिणानामिव द्युतिं दधति धारयन्ति । दग्धत्वेन श्यामत्वं पुराणत्वेन जीर्णत्वं दर्शितम् । रोहिणो 'रोहण' इति ख्यातस्तरुः । 'घोघराति' इति ख्यातो वा । रोहितोऽपि स एव । अत एव 'रोहितः प्लीहनाशकः' इत्यमरोऽपि । रोहणानामिति पाठे रोहन्तीति रोहणास्तरवस्तेषामित्यर्थः । ललता चलताजगरेण सर्पेण भीषणच्छिद्राणाम् । 'निष्कुहः कोटरं वा ना' इत्यमरः । तदिह कोटरेणास्यमज ।

१ नुत्फुल्लत्. २ आदर्दरम्. ३ ततः. ४ पृथुचल—तर, दशनाग्रम्. ५ विवृत्य. ६ विशीर्णशुष्क. ७ चलद. ८ इव.

( परिक्रम्यावलोक्य च । ) हन्त बीभत्समेवाग्रे वर्तते ।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नाय्वन्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १६ ॥

अपि च ।

निष्टापस्विद्यदस्थ्नः क्वथनपरिणमन्मेदसः प्रेतकाया-
न्कृष्ट्वा संसक्तधूमानपि कुणपभुजो भूयसीभ्यश्चिताभ्यः ।
उत्पक्वस्रंसिमांसं प्रचलदुभयतः संधिनिर्मुक्तमारा-
देते निष्कुष्य जङ्घानलकमुदयिनीर्मज्जधाराः पिबन्ति ॥ १७ ॥

---

गरेण रसना रोहिणेन पिशाच उपमीयन्ते । भयानको रसः । यदाह—' विकृतरवसत्त्वदर्शनसंत्रासारण्यशून्यगृहगमनात् । गुरुनृपयोरपराधात्कृतश्च भयानको ज्ञेयः ॥ ' ॥ १५ ॥ बीभत्सं घृणाकरम् । **उत्कृत्येत्यादि** । अयं प्रेतरङ्कः प्रेतरूपो रङ्कः क्षुधाभिशुष्यच्छरीरोऽव्यग्रमनाकुलं यथा तथा क्रव्यं मांसमत्ति खादति । किं कृत्वा । प्रथममादौ कृत्तिं चर्म निर्भिद्य निर्भिन्नीकृत्य पश्चादुत्कृत्य छित्त्वा । उत्कृत्येति पाठे चर्मकोषाकर्षणमुत्कर्तनं तत्पुनः पुनः कृत्वेत्यर्थः । अथानन्तरं पृथुना महतोच्छोफेन भूयांसि बहूनि मांसानि जग्ध्वा भक्षयित्वा । कीदृशानि । अंसयोः स्कन्धयोः स्फिचोः कटिमांसपिण्डयोः पृष्ठे कायपश्चाद्भागे पिण्डयोर्जङ्घापाश्चात्यभागयोरादिपदात्कक्षामूलाद्यवयवेषु सुलभानि । उच्छूनत्वात्तेषाम् । उग्रपूतीन्युत्कटगन्धानि । पृथूत्सेधेति पाठे पृथुनोत्सेधेन कायेन बहुतां गतानीत्यर्थः । यद्वा उत्सेधेनोन्नत्या भूयांसीत्यर्थः । ' उत्सेधः काय उन्नतिः ' इत्यमरः । कीदृशो रङ्कः । आर्तस्वरावान् । पर्यस्तमितस्ततः क्षिप्तं नेत्रं येन सः । एतदुभयं रङ्केषु प्रसिद्धमेव । ' अन्तःपर्यस्तनेत्र इति पाठेऽन्तर्मध्ये स्थितनेत्रः । रङ्कत्वेन कोटराक्षत्वादित्यर्थः । ' आत्तस्नाय्वन्त्रनेत्रः ' इति पाठ आत्तानि गृहीतानि स्नाय्वन्त्रनेत्राणि येन सः । अत एवान्त्राद्युत्पाटनाय प्रकटितदन्तः । दौर्बल्यप्रकर्षणात्प्रकटितदशनत्वम् । अङ्कस्थात्क्रोडीकृतात्करङ्कात् कपालादाकृष्येत्याक्षेपात् । अन्यथापादानानुपपत्तिः । कीदृशं क्रव्यम् । अस्थिषु यत्संतिष्ठति तत् । स्थपुटगतमपि निम्नोन्नतविषयस्थानगतमपीत्यर्थः । अत एव रङ्कः । ' स्त्रियौ स्फिचौ कटिप्रोथौ ' इत्यमरः । ' पिण्डः खण्डेऽङ्गभेदे स्यात् ' इति मेदिनीकरः । ' करङ्को मस्तकेऽपि स्यात् ' इति धरणिः । अयं बीभत्सो रसः ॥ १६ ॥ **निष्टापेत्यादि** । एतेऽपि कुणपभुजः शवभक्षकाः पिशाचा बह्वीभ्यश्चिताभ्यः प्रेतकायानाकृष्य तेषामेव जङ्घानलकं जङ्घाप्रधानमस्थि निष्कुष्य विगतमांसावरणं कृत्वा मज्जधाराः पिबन्ति । मज्जास्थिमध्यस्थितस्नेहः । कीदृशीः

---

१ अतिबीभत्समग्रतो. २ निर्भिद्यो० ( टी० ). ३ त्सेध. ४ पीठ. ५ गन्धीनि. ६ आर्तः पर्यस्तनेत्रः, अन्तःपर्य. ७ दस्नः. ८ परिगलन्. ९ धूमात. १० प्रचलम्. ११ सारात्, मादाय. १२ निष्कृष्य, निश्चूष्य.

( विहस्य । ) अहो प्रादोषिकः प्रमोदः पिशाचाङ्गनानाम्[1] । तथा हि ।

**अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-**
**व्यक्तोत्तंसभृतः पिनह्य सहसा[3] हृत्पुण्डरीकस्रजः[4] ।**
**एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-**
**न्त्यस्थिस्नेहसुराः[5] कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥१८॥**

---

आराद्दूरत एवोदयिनीर्लम्बमानाः । द्रवमयत्वात् । यद्वा आरात्समीपे पिबन्तीति योजना । ' आराद्दूरसमीपयोः ' इति विश्वः । चिताभूयस्त्वेनातिभीषणतोक्ता । कीदृशान् । निष्टापेनेषत्तापेन स्विद्यन्त्यसृञ्जि येषाम् । ' पद्दन्नो–' इत्यादिसूत्रेणासृक्शब्दस्यासन्नादेशेऽल्लोपे रूपम् । अस्त्र इति पाठो न युक्तः । तृतीयादावस्थीत्यादिनानङ्विधानात् । यद्वा प्रेतकायादिति पञ्चम्यन्तः पाठः । अतोऽस्त्र इति पञ्चम्यामनङि रूपम् । चिताभ्य इति ल्यब्लोपे पञ्चमी । निसस्तपताविन्यनभ्यावृत्तौ षत्वम् । क्वथनेन पाकक्रमेणाङ्गेषु परिगमज्जीर्थन्मेदो येषां तान्संसृष्टधूमानपि । कीदृशं जङ्घानलकम् । उत्पक्मुच्छूनं कृत्वा पक्मत एव स्रंसनशीलं मांसं यस्मात् । यद्वा उत्पक्केनोद्गतपाकेन स्रंसि मांसं यस्मात् । उत्पक्व इति भावे क्तः । प्रचलन्तः शिथिलीभवन्त उभयतो जानूरुपर्वणो गुल्फाच्च ये सन्धयोऽस्थ्नां परस्परमिलनस्थानानि तैर्निर्मुक्तम् । प्रचलमिति पाठ उभयतः पार्श्वाभ्यां प्रचलम् । अत एव सन्धिपरिमुक्तमित्यर्थः । ' कुणपः शवमस्त्रियाम् ' इत्यमरः । नलकं ' नरहड ' इति ख्यातम् । ' संरी ' इति ख्यातं वा । बीभत्स एवात्र रसः ॥ १७ ॥ अहो इति बीभत्सशृङ्गारदर्शनेनाश्चर्यम् । प्रादोषिको रात्रिप्रारम्भजः । शृङ्गारबीभत्सयोः परस्परविरोधेऽपि संस्थानसाम्यात्संभेदाभास इह । प्रसाधनाच्चात्र शृङ्गारः । यदाह–' ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः । उपवनगमनविहारैः शृङ्गाररसोऽपि संभवति ॥ ' अत एवायं श्लोकः कण्ठाभरणेऽपि रससंकराभास उदाहृत इति । **अन्त्रैरित्यादि** । एताः पिशाचस्त्रियः कान्तैः संभूय मिलित्वा कपालचषकैरस्थिस्नेहसुरा मज्जमद्यानि पिबन्ति । कीदृश्यः । अन्त्रै रचितो मङ्गलार्थं प्रतिसरो हस्तसूत्रमूर्णामयं याभिस्ताः । अवैधव्याचिह्नं मङ्गलप्रतिसरो भवति । यद्वा प्रतिसरः कङ्कणम् । तदप्यवैधव्यचिह्नतया मङ्गलम् । कङ्कणे करसूत्रे च भवेत्प्रतिसरोऽस्त्रियाम् ' । इति मेदिनीकरः । स्त्रीहस्त एव रक्तपद्मं तेन व्यक्तमुत्तंसं कर्णभूषणं बिभ्रति याः । सहसा शीघ्रं हृत्पद्ममालाः पिनह्य परिधाय । हृत्पद्मस्य श्वेततया पुण्डरीकपदेनोपन्यासः । यदाह—' द्वादशाङ्गुलसंपूर्णे श्वेते हृदयपङ्कजे । ' इति । मालाया मनोहरतयान्या मा गृह्णात्विति परिधाने शीघ्रता । अत एव प्रीताः । रक्तकर्दमकुङ्कुमवत्यः । अत्र पिबन्त्यस्थीत्यादौ यतिभङ्गशङ्का न

---

१ पिशाचानाम्. २ रत्नो. ३ शिरसो-सा, शिरसां. ४ हृत्पुण्डरीके. ५ सुराम्.

(परिक्रम्य । पुनः अशस्त्रपूतमित्यादि पठित्वा ।) कथं [1]नाम प्रशान्त-भीषणविभीषिका[2]प्रकारैर्झटित्यपक्रान्तं पिशाचैः । अहो निः[3]सत्त्वता पिशाचानाम् । (परिक्रम्य दृष्ट्वा सनिर्वेदम् ।) विचितश्[4]चैष समन्ताच्छ्मशानवाटः । तथा हि खल्वियं पुरत एव

गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसं[5]वल्गित-<br>
क्रन्दत्फेरवचण्ड[6]डात्कृतिभृतप्राग्भारभीमैस्तटैः ।<br>
अन्तः[7]शीर्णकरङ्क[8]कर्करपयः[9]संरोधकूलंकष-<br>
स्रोतोनिर्गमघोरघर्घररवा पारेश्मशानं सरित् ॥ १९ ॥

(नेपथ्ये ।)

हा तात निष्करुण एष इदानीं ते नरेन्द्रचित्ताराधनोपकरणं

---

कार्या । संधिकृतपदविच्छेदे तस्यादोषत्वात् । 'रेवां द्रक्ष्यस्युपलविषमाम्' इत्यादौ तथा दर्शनात् । 'चषकं पानपात्रं स्यात्' इति हारावली । इह बीभत्समिश्रः शृङ्गारसः ॥ १८ ॥ झटिति शीघ्रम् । विभीषिका परभयदायिनी रौद्ररूपता । तस्याः प्रकारा भेदाः । अपक्रान्तं प्रपलाय्य गतम् । निःसत्त्वा इत्यनेनात्मप्रौढिर्दर्शिता । महामांसविक्रयादपि नेष्टलाभ इति निर्वेदः । विचितो व्याप्तः । तमोव्याप्तत्वेन कथं विचितत्वज्ञानमित्यत आह—इयमिति । **गुञ्जदित्यादि** । इयं सरित्पुरत एवास्ति । पारेश्मशानं श्मशानपारदेशे 'पारे मध्ये षष्ठ्या वा' इति समासः । कुञ्ज एव कुटीरोऽल्पा कुटी तत्र या कौशिकघटा पेचकसमूहः । गुञ्जन्तीनां कुञ्जकुटीरकौशिकघटानां घूत्काररूपं संवलितं ध्वनितम् । क्रन्दच्छृगालानां डात्कृतिर्डात्कारः शब्दविशेषः । अनयोर्द्वन्द्वः । ताभ्यां भृतः पूरितो यः प्राग्भारोऽग्रतटं तेन भीषणस्तटैर्लक्षिता । लक्षणे तृतीया । अन्तरभ्यतरे । शीर्णास्त्रुटिता ये करङ्काः कपालानि तेषां कर्करो भग्नावयवः 'काकर' इति प्रसिद्धो वा कर्करो यत्र । अत एव तरतां संतरणशीलानां संरोध्यवरोधकः कूलङ्कषः कूलविदारको यः स्रोतोनिर्गमस्तेन घोरो घर्घरोऽव्यक्तरूपो रवः शब्दो यत्र सा । तरःसंरोधीति पाठे तरसा वेगेन संरोधि गमनविरोधि । कर्करेण दृढेन तरसा संरोधीत्यर्थः । 'अल्पा कुटी कुटीरः स्यात्' इत्यमरः । घटाशब्दः समूहमात्रवचनोऽपि करिघटादौ त्वात्यान्तिकस्तस्य प्रयोग इत्यवधेयम् । घूत्कारडात्कृती अनुकरणशब्दौ । क्वचित् फात्कृतीति पाठः । तत्रापि फात्कृतिरनुकरणशब्द एव । 'फेरुफेरवजम्बुकाः' इत्यमरः । 'तटः प्राग्भार इत्यपि' इत्यमरः । 'कर्करो भग्नभागेऽपि दृढेऽपि खण्डितेऽपि च ।' इति धरणिः । तदिह करङ्ककर्करसंकुलनदीप्रवाहस्तीरं पातयति घर्घररवं च कुरुत इति स्फुटमेव ॥ १९ ॥ **नेपथ्ये** । हा तात इत्यत्र

---

१ द्रागतिप्र०, नामातिभीषण. २ विकारैः. ३ निःसत्त्वाः सर्वे. ४ एष सर्वः. ५ संवेल्लित, संवार्गित; संवार्धित. ६ धात्कृति. ७ कीर्ण. ८ कर्पर. ९ तरःसं०, तरत्सं० (टी०).

जनो विपद्यते । ( हा ताद णिक्करुण एसो दाणिं दे णरेन्दचित्ताराहणोवअरणं जणो विपज्जइ । )

**माधवः**—( साकूतमाकर्ण्य । )

**नादस्तावद्विकलकुररीकूजितस्निग्धतार-**
**श्चित्ताकर्षी परिचित इव श्रोत्रसंवादमेति ।**
**अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं**
**देहस्तम्भः स्खलयति गतिं कः प्रकारः किमेतत् ॥ २० ॥**
**करालायतनाच्चायमुच्चरन्करुणो ध्वनिः**
**विभाव्यते ननु स्थानमनिष्टानां तदीदृशाम् ॥ २१ ॥**

भवतु पश्यामि । ( इति परिक्रामति । )

( ततः प्रविशतो देवतार्चनव्यग्रौ कपालकुण्डलाघोरघण्टौ कृतवध्यचिह्ना मालती च । )

**मालती**—हा तात निष्करुण एष इदानीं ते नरेन्द्रचित्ताराध-

---

हायोगेऽपि न द्वितीया । हाशब्दस्य शोकवाचिन उपग्रहात् । तस्य च संबोधने प्रथमाप्रयोगात् । तदन्यार्थस्य योगे द्वितीयेति न्यासः । अङ्कमुखे स्त्रीरत्नापहारस्य सूचितत्वान्नेपथ्ये भणनमिदम् । **नाद इत्यादि** । अयं तावन्नादः श्रोत्रयोः संवादं पूर्वोपलम्भाकारतामेति । कीदृशः । विकला त्रस्ता या कुररी ' हापूती ' इति प्रसिद्धा पक्षिवधूस्तस्याः कूजितवत्स्निग्धः स्नेहलस्तार उच्चश्च । त्रासान्मालत्यास्तारो नादः । अत एव चित्ताकर्षी प्रियत्वाच्चित्तानुकर्षकः परिचित इव पूर्वमुपलब्ध इव । अत एव श्रोत्रसंवादितास्य । परिचयश्च शङ्करगृहे वृत्तः । यदि श्रोत्रसंवादमेति कथं तर्हीविकार इत्यत आह । अन्तर्भिन्नं द्विधाभूतं संशयाक्रान्तं हृदयं भ्रमति दोलायते । उभयत आकर्षात् । अत्र मालतीगमनासंभवात्संवादस्य च स्फुटत्वात् । यद्वा अन्तर्भिन्नं विद्धममसंभवेनेत्यर्थात् । तथा बन्धुगतानिष्टशङ्काकलङ्कात्प्रत्यङ्गं विह्वलति । करादीनि कम्पन्त इत्यर्थः । तस्याः कथमिहावस्थानमिति भयाद्देहस्तम्भः । यदाह—' हर्षव्याधित्रासरोषाद्यैः स्तम्भः संभवति । चिन्तास्तिमितत्वाद्गतिश्च स्खलति ' । कथमकस्मादेव ममेदं वृत्तमिति विमर्शमाह—'कोऽयं प्रकारः' किंनिमित्तं स्नेहमाविष्करोति । किमेतत् । सैवेयं किमन्यद्वा तत्तुल्यमित्यर्थः । संबाधमिति पाठे कर्णपीडां करोतीत्यर्थः । नादश्रुत्या मोहात् ॥ २० ॥ **करालेत्यादि** । अयमुत्थितकरुणरसो ध्वनिः कथं वा संभाव्यत इत्यन्वयः । उच्चरन्नुत्तिष्ठन् । वितर्कसंप्रधारणमाह—**नन्विति** । ननु संभावनायाम् । ईदृशां संभाव्यमानजातीयानामनिष्टानां जनवधानामिदं करालायतनं स्थानमिति संभाव्यते ॥ २१ ॥ वध्यचिह्नं न्यस्तालक्तकेत्यादि ।

---

१ वावज्जइ. २ गात्र०, देहोत्कम्पः. ३ करुणध्व. ४ ईदृशाम्. ५ देवार्च०; र्चना०.

नोपकरणं जनो विपद्यते । हा अम्ब[1] स्नेहमयहृदये हतासि दैवदुर्विल-सितेन । हा मालतीमयजीविते मम कल्याणसाधनैकमुक्तसकलव्यापारे भगवति चिरस्य ज्ञापितासि दुःखं स्नेहेन । हा प्रियसखि लवङ्गिके स्वप्नावसरमात्रदर्शनाहं ते संवृत्ता । ( हा ताद णिक्करुण ऐसो दाणिं दे णरेन्द-चित्ताराहणोवअरणं जणो विपज्जइ । हा अम्ब सिणेहमअहिअए हदासि देव्वदुव्विलसिदेन । हा मालदीमअजीविदे मह कल्लाणसाहणेक्कमुक्कसअलव्वावारे भअवदि चिरस्स जाणाविदासि दुक्खं सिणेहेण । हा पिअसहि लवङ्गिए सिविणअवसरमेत्तदंसणा अहं दे संवुत्ता । )

**माधवः**—हन्त[4] सैवेयं हरिणेक्षणा[5] । संप्रति निरस्त एव[6] संदेहः । तदपि नामैनां जीवन्तीं संभावये । ( त्वरितं परिक्रामति । )

**कापालिकौ**—देवि चामुण्डे नमस्ते नमस्ते ।

**सावष्टम्भनिशुम्भसंभ्रमनमद्भूगोलनिष्पीडन-**
**न्यञ्चत्कर्परकूर्मकम्पविगलद्ब्रह्माण्डखण्डस्थिति ।**
**पातालप्रतिमल्लगल्लविवरप्रक्षिप्तसप्तार्णवं**
**वन्दे नन्दितनीलकण्ठपरिषद्व्यक्तर्द्धि वः क्रीडितम् ॥ २२ ॥**

अपि[13] च ।

**प्रचलितकरिकृत्तिपर्यन्तचञ्चन्नखाघातभिन्नेन्दुनिःस्यन्दमानामृत-श्च्योतजीवत्कपालावलीमुक्तचण्डाट्टहासत्रसद्भूरिभूतप्रवृत्तस्तुति**

---

**मालती** । अत्र भगवति कामन्दकि इति शेषः । चिरस्य बहुकालम् । एकशुभस्थाने । एकमुखमिति पाठ एकमुखमेकवाक्यतापन्नम् । **माधवः** । हन्तेति निश्चयलाभे । **कापालिकौ** । **सावष्टम्भेत्यादि** । देवि युष्माकं क्रीडितं नृत्यं वन्दे । कीदृशम् । साटोपो यो निशुम्भो निर्दययन्त्रणं करणभेदस्ततः संभ्रमादानमतो भूगोलस्यावनिचक्रस्य निष्पीडनेन न्यञ्चदधोगच्छत् कर्परं पृष्ठास्थि यस्य कूर्मस्य तस्य कम्पेनाङ्गचालनेन विगलन्ती भ्रश्यन्ती ब्रह्माण्डखण्डस्य स्थितिर्यत्र तत्तथा । अनेन भूकम्प उक्तः । तथा च नम्रीभूतभूगोले त्वर्णवानामुत्सेकात्पातालतुल्यगल्लविवरे प्रक्षिप्ताः सप्तार्णवा यत्र तत् । नन्दितभैरवसभं च प्रकटविभवम् । 'उत्क्षिप्ता तु भवेत्पार्ष्णिर्निशुम्भोऽयं निगद्यते । अङ्गुल्योग्राञ्चिताः सर्वाः पादाग्रतलसंचरे ॥ ' इति भरतः । 'कटाहे च कपालेऽपि पृष्ठास्थनि च कर्परः । ' इति शाश्वतः । नाट्येश्वरीवर्णनमिदम् ॥ २२ ॥ दण्डकमाह—**प्रचलितेत्यादि** । देवि युष्माकं ताण्डवमुद्धतं नृत्यमस्माकमभीष्टया अशुभनाशाय तुष्ट्या

---

१ मातः. २ दुव्वारदेव्व. ३ णेक्कसुह (शुभ). ४ मदिरे०. ५ हन्त संप्रति०. ६ एव मे. ७ तदहमपि ८ संभावयेयमिति. ९ झटिति. १० चामुण्डे भगवति. ११ निर्भर. १२ व्यक्तं तव. १३ अघोर०.

**श्वसदासितभुजङ्गभोगाङ्गदग्रन्थिनिष्पीडनस्फारफुल्लत्फणापीठ-निर्यद्विषज्योतिरुज्जृम्भणोड्डामरव्यस्तविस्तारिदोःखण्डपर्यासितक्ष्माधरम् ।**

**ज्वलदनलपिशङ्गनेत्रच्छटासाटभीमोत्तमाङ्गभ्रमिप्रस्तुतालातचक्रक्रियास्यूतदिग्भागमुत्तुङ्गखट्वाङ्गकोटिध्वजोद्भूतिविक्षिप्ततारागणं प्रमुदितकटपूतनोत्तालवेतालतालस्फुटत्कर्णसंभ्रान्तगौरीघनाश्लेषहृष्यन्मनस्त्र्यम्बकानन्दि वस्ताण्डवं देवि भूयादभीष्ट्यै च हृष्ट्यै च नः ॥ २३ ॥** ( इत्यभिनयतः । )

आनन्दाय च भूयात् । अरिष्ट्या इति पाठे रिष्टिरशुभं तदभावोऽरिष्टिस्तस्यै । अनेन भाव्यनिष्टार्थसूचकदण्डोऽप्युक्तः । यदाह—' आकस्मिकसंबद्धं समर्थमिव यद्भवेत् । वाचामन्ते स दण्डः स्याद्भाव्यनिष्टार्थसूचकः ॥ ' ' रिष्टिः खड्गे नाशुभे स्त्री ' इति मेदिनीकरः । ' अरिष्टे तु शुभाशुभे ' इत्यमरः । यद्वा ' ऋकारो देवमाता स्यात् ' इति कोशादृशब्दात्संबुद्धौ गुणे च हे अः देवमातः इष्ट्या अभीष्ट्यै भूयादित्यर्थः । कीदृशम् । प्रचलितगजासुरचर्मपर्यन्तेषून्नमतां नखानामाघातैर्भिन्नात्स्फुटिताद्देवीमस्तकस्थचन्द्राक्षरदमृतस्य श्च्योतेनाप्लवेन जीवन्तीभिः कपालावलिभिर्मुण्डमालाभिर्मुक्तैश्चण्डाट्टहासैरत्युच्चहसनैस्त्रसतां बहुभूतगणानां प्रवृत्ता स्तुतिर्यत्र । यद्वा भूतगणैः प्रवृत्ता प्रवर्तिता स्तुतिर्यत्र तत् । अन्तर्भावितण्यर्थः । यद्वा प्रचलितः करिचर्मरूपोऽवधिर्यत्र तत् । पश्चात्कर्मधारयः । तथा ताण्डवाडम्बरायासेन श्वसतां श्यामसर्पाणां कायैर्ये केयूराकारग्रन्थयस्तेषु निष्पीडनेनोत्फाल उद्गतमुखविकासस्तरलो वा फुल्लन्विस्तारिताङ्गचयः फणापीठः । विस्तारितया पीठेन रूपकम् । ततो निर्गतविषाग्नेरुज्जृम्भणेनाधिक्येनोड्डामरः केलिसंवस्तुरसातिशयो भयंकरो वा विषमो वा व्यस्त इतस्ततोगामी विस्तारी दीर्घो यो दोःखण्डः समूहस्तेन पर्यासितः क्षिप्तः पर्वतो यत्र तत् । देव्या अनेकबाहुशालितया दोःखण्ड इत्युक्तम् । ' अब्जादिकदम्बे खण्डमस्त्रियाम् ' इत्यमरः । तथा ज्वलतानलेन पिङ्गलं यन्नेत्रं ललाटलोचनं तस्य च्छटा ज्वालानिर्गमप्रसरस्तस्य साटेन विस्तारेण भीमं यदुत्तमाङ्गं शिरस्तस्य भ्रमिर्मण्डलाकारेण भ्रमणं तया प्रस्तुता प्रारब्धालातचक्रक्रिया वह्निप्रज्वलितार्धकाष्ठविशेषकर्म तया स्यूता इवैकत्र प्रतिबद्धा इव दिग्भागा यत्र तत् । तथातिमहाखट्वाङ्गाग्रध्वजोत्कम्पाद्विक्षिप्त इतस्ततस्तारागणो यत्र तत् । तथा हृष्टकटपूतनोद्भटवेतालानां तालेन कलकलेन स्फुटत्कर्णात एव संभ्रान्ता त्रसन्ती सत्वरा वा गौरी तस्या निबिडालिङ्गनेन हृष्यच्चित्तं त्र्यम्बकं शिवमत्यर्थमानन्दयति इति । आभीक्ष्ण्ये णिनिः । ' साटो निकुञ्जे विस्तारे' इति विश्वः । ' शृङ्गमग्रे-

१ डितोत्फाल, नोत्फुल्ल. २ व्यक्त, विस्तार. ३ च्छन्न, भार, सार; पिशङ्गरिंखज्जटाजूट० भीमो०. ४ शृङ्गध्व०. ५ दरिष्ट्यै.

**माधवः**—( विलोक्य । ) हा धिक् प्रमादः ।

**न्यस्तालक्तकरक्तमाल्यवसना पाखण्डचण्डालयोः**
**पापारम्भवतोर्मृगीव वृकयोर्भीरुर्गता गोचरम् ।**
**सेयं भूरिवसोर्वसोरिव सुता मृत्योर्मुखे वर्तते**
**हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ॥ २४ ॥**

**कपालकुण्डला**—

**तं भद्रे स्मर दयितोऽत्र यस्तवाभू-**
**दद्य त्वां त्वरयति दारुणः कृतान्तः ।**

**मालती**—हा दयित माधव परलोकगतोऽपि युष्माभिः स्मर्तव्योऽयं जनः । न खलु स उपरतो यस्य वल्लभो जनः स्मरति । ( हा दइअ माहव परलोअगदो वि सुमरिदव्वो तुह्मेहिं अअं जणो । ण हु सो उवरदो जस्स वल्लहो जणो सुमरेदि । )

---

ऽपि कीर्तितम्' इति शाश्वतः ॥ २३ ॥ **माधवः** । धिक् प्रमाद इत्यत्र वर्तत इति क्रियाध्याहारः । तत उपपदविभक्तेः कारकविभक्तिर्बलीयसीति धिग्योगे द्वितीयां बाधित्वा प्रथमेत्यवधेयम् । **न्यस्तेत्यादि** । सेयं भूरिवसोः सुता यस्याः कृते मयैवं दुःखमनुभूयते पाखण्डचण्डालयोर्गोचरं संमुखं गता । पाखण्डेषु चण्डालोऽसौ । तद्दर्शनविरुद्धक्रियाकारित्वात् । यदाह—'न भुञ्जीतार्कपत्रेषु स्त्रीबालं नैव घातयेत्' । यद्वा । पाखण्डौ च तौ चण्डालौ च । निषिद्धक्रियत्वात् । यदाह—'अवध्यास्तु सदाख्याताः सर्वयोनिगताः स्त्रियः ।' चण्डालत्वादेव पापारम्भवतोर्मारणप्रवृत्तयोः । न्यस्ते अलक्तकरक्ते माल्यवसने यस्यां सा । एतद्वध्यचिह्नम् । यथा मृगी वृकयोः संमुखं गता तथेयं भीरुः । मृगीत्यनेन भयचलनेत्रतोक्ता । वसोर्देवताभेदस्य । एतेनास्य सुखित्वमुक्तम् । मृत्योर्यमस्य मुखे वर्तते । अत एव हाशब्दः परिदेविते स्त्रीरत्नमपि वध्यत इति । निन्दायां धिगिति । विषादे कष्टम् । कोपेऽनिष्टम् । अस्ता नष्टा करुणा दया यत्र । एतादृशो विधेरारम्भः कोऽयम् । निन्दितोऽयम् । कीदृग्वा । 'किं वितर्के परिप्रश्ने क्षेपे निन्दाप्रकारयोः ।' इति विश्वः । करुणोऽयं रसः । 'इष्टवधदर्शनाद्वा करुणरसो नाम संभवति ।' इति भरतः । 'चण्डालोऽपि च चाण्डालः' इति शब्दभेदः । पुष्पपुष्पस्रजौ माल्यम्' इत्यमरः ॥ २४ ॥ **तं भद्र इत्यादि** । प्रहर्षिणीच्छन्दसा श्लोकार्धम् । चामुण्डे भगवतीत्याद्यग्रिमार्धम् । हे भद्रे यस्तव दयितो वल्लभत्वेनेष्टस्तं स्मर । गुरुत्वात्स्मरणमस्य । यदाह—'पतिरेको गुरुः स्त्रीणाम्' इति । यद्वा मदुपहरणीयत्वेन स इह जन्मनि ते वल्लभो न भूत एव । अतो जन्मान्तरेऽपि तल्लाभाय तं स्मर । यदाह—'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥' इति । कृतान्तो यमः । **मालती** ।

---

१ पाषण्ड—खण्डि. २ कयोः. ३ मरिष्ट. ४ त्वं. ५ णाह; दइअणाइ.

**कपाल०**—हन्त माधवानुरक्तेयं तपस्विनी[1] ।

**अघोरघण्टः**—( शस्त्रमुद्यम्य । ) यदस्तु[3] तदस्तु व्यापादयामि ।

**चामुण्डे भगवति मन्त्रसाधनादा-**
**वुद्दिष्टामुपनिहितां भजस्व पूजाम् ॥ २५ ॥**

( इति हन्तुमुपक्रान्तः । )

**माधवः**—( सहसोपसृत्य प्रकोष्ठे[5] मालतीं विक्षिप्य । ) आः दुरात्मन् अपेहि । प्रतिहतोऽसि कापालिकापसद ।

**मालती**—( सहसावलोक्य[6] । ) परित्रायतां परित्रायतां महाभागः । ( परित्ताअदु परित्ताअदु महाभाओ । ) ( इति माधवमालिङ्गति । )

**माधवः**—महाभागे न भेतव्यं न भेतव्यम् ।

**मरणसमये त्यक्त्वा शङ्कां प्रलापनिरर्गलं[9]**
**प्रकटितनिजस्नेहः सोऽयं सखा पुर एव ते ।**
**सुतनु विसृजोत्कम्पं संप्रत्यसाविह पाप्मनः[10]**
**फलमनुभवत्युग्रं पापः प्रतीपविपाकिनः ॥ २६ ॥**

---

स्मरणफलमाह—यस्येत्यत्राधीगर्थेति कर्मणि षष्ठी । यस्य गुणमिति वा । अन्तकाले माधवस्मरणं मुक्तिहेतुरिति कटाक्षितम् । **कपालकुण्डला** । हन्त खेदे । कामन्दकीमित्रपुत्रत्वान्ममापि माधवस्तादृश एव । तदनुरक्ता चेयं कथं वध्येति खेद इति भावः । अत एव तपस्विन्यनुकम्प्या । **अघोरघण्टः** । उद्दिष्टां वाचा प्रतिज्ञाताम् । उपनिहितामुपढौकिताम् ॥ २५ ॥ **माधवः** । कफोणेरधोभागो मणिबन्धपर्यन्तः प्रकोष्ठः । विक्षिप्यापसार्य । खड्गहस्तत्वेन बाहुमध्येऽपसारणं जातिः । प्रतिहतो निराकृतः । अपसद निन्दित । **मरणेत्यादि** । सोऽयं तव मित्रं पुरत एव वर्तत इत्याक्षेपात् । यो बकुलवीथ्यादिषु सानुरागदर्शनप्रसन्नया त्वया स्वीकृतः । मरणसमय इत्यनेनानुराग उक्तः । यदाह—'साहसानुरक्तं हि स्त्रियो भजन्ते' इति । तत्र मुक्ताशङ्को निर्भयः । पाखण्डादिति भावः । अत एव प्रतानेन निरर्गलोऽनभिभाव्यः । प्रलापेति पाठे हा नाथ माधवेत्यादिमालतीप्रलापेन निरर्गल उच्छृङ्खल इत्यर्थः । त्यक्त्वा शङ्कामिति पाठे शङ्का भयं लज्जादिकं वा त्यक्त्वा । प्रतापनिराकुलो वा प्रतापनिरङ्कुशो वेत्यर्थः । यद्वा शङ्कां त्यक्त्वा यं प्रति त्वया प्रकटितो निजस्नेहः सोऽयमित्यर्थः । यद्वा अयं कीदृशः । प्रकाशितात्मस्नेहः । मरणसमये रक्षणादिति भावः । हे सुतनु अत उद्गतं कम्पं त्यज । असौ पापः संप्रत्येव पाप्मनो निषिद्धाचरणस्य फलं मरणरूपमुग्रं तीव्रमनुभविष्यति । संप्रतीत्य-

---

१ वराकी. २ शक्ति०. ३ एतन्नास्ति क्वचित्. ४ नार्थम्. ५ खड्गं प्रकोष्ठेन वि०; मालतीं गृहीत्वा वि० खड्गं. ६ माधवम०, विलोक्य. ७ भाओ माहवो. ८ मुक्ताशंकः (टी०). ९ गलः. १० वा पुनः

**अघोर०**—आः क एष पापोऽस्माकमन्तरायः संवृत्तः ।

**कपाल०**—भगवन् स एवास्याः स्नेहभूमिः कामन्दकीसुहृत्पुत्रो महामांसस्य पणायिता माधवः ।

**माधवः**—( सास्रम् । ) महाभागे किमेतत् ।

**मालती**—( चिरादाश्वस्य । ) महाभाग अहमपि न जानामि । एतावत्पुनर्जानामि । उपर्यलिन्दकं प्रसुप्तेह प्रबुद्धास्मि । यूयं पुनः क्व । ( महाभाअ अहं वि ण जाणामि । एत्तिअं उण जाणामि । उवरिअलिन्दअं पसुत्ता इह पबुद्धह्मि । तुह्मे उण कहिं )

**माधवः**—( सलज्जम् । )

> **त्वत्पाणिपङ्कजपरिग्रहधन्यजन्मा**
> **भूयासमित्यभिनिवेशकदर्थ्यमानः ।**
> **भ्राम्यन्नृमांसपणनाय परेतभूमा-**
> **वाकर्ण्य भीरु रुदितानि तवागतोऽस्मि ॥ २७ ॥**

**मालती**—( स्वगतम् । ) कथं मम कारणादेवात्मनिरपेक्षः परिक्रामति । ( कधं मम कालणादो एव्व अप्पणिरपेक्खो परिक्कामदि । )

---

नेन प्रकृतोपयुक्तं निजासत्त्वं पौरुषं च ध्वनितम् । कीदृशस्य । प्रतीपो विपरीतो विपाको विरुद्धपरिणतिर्यत्र तस्य । अनुभवतीत्यत्र वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यति लट् । शृङ्गारवीरसंभेदोऽत्र ॥ २६ ॥ **अघोरघण्टः** । अन्तरायो विघ्नः । **कपालकुण्डला** । भूमिः स्थानम् । **मालती** । त्रासातिशयाच्चिरान्निःश्वासः । अत्रोपरि सौधोपरि अलिन्दे । 'ओट्ठ' इति प्रसिद्धे । **यूयमिति** । अहमबला सुप्ता चान्येनानीता यूयं धीराधीरा विबुद्धा अपीदानीमिह किमर्थमागता इत्यर्थः । **त्वदित्यादि** । हे भीरु महामांसविक्रियाय श्मशाने भ्रमंस्तव क्रन्दितान्याकर्ण्यागतोऽस्मि । महामांसविक्रयफलमाह—त्वदिति । त्वद्विवाहेन धन्यजन्मा पुण्यजन्माहं भवामीत्यभिनिवेशेनातियत्नेनावेशेन वा कदर्थ्यमानः पीड्यमानः । अतस्त्वां विना न मे जीवनमिति संभाव्यमानफलतया मांसविक्रये प्रवृत्तोऽस्मीति भावः । त्वत्पादपङ्कजेति पाठे प्रेयसीचरणग्रहणस्य मान एव कर्तव्यतया मानप्रसादनमेवोत्तरोत्तरं चरितेत्याशंसितवान् । अत एव सलज्जमित्युक्तमिति भावः । 'धन्यः पुण्य इति स्मृतः इति विश्वः । कुत्सितोऽर्थः कदर्थः । भीरु इत्यनेन रोदनोपपत्तिरुक्ता । तदिह त्वन्निमित्तमहं साहसी त्वं पुनः कीदृशीति न जाने इति तात्पर्यम् ॥ २७ ॥ **मालती** । अत एव हर्षविस्मयवशादाह मालती—**कथमित्यादि** । परिभ्रमणमितस्ततो गमनम् । आत्मनिरपेक्षः श्मशानभ्रमणेन ।

---

१ अहं न किंवि. २ जेव्व. ३ अपवार्य. ४ एव्वं एदे...०पेक्खं–खा परिब्भमन्दि; एवमेते आ० पेक्षं- क्षा परिभ्रमन्ति.

**माधवः**—अहो नु खलु भोः तदेतत्काकतालीयं नाम । संप्रति हि

**राहोश्चन्द्रकलामिवाननचरीं दैवात्समासाद्य मे**
**दस्योरस्य[1] कृपाणपातविषयादाच्छिन्दतः[2] प्रेयसीम् ।**
**आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मया-**
**त्क्रोधेन ज्वलितं मुदा विकसितं चेतः कथं वर्तताम्[3] ॥ १८ ॥**

**अघोर०**—रे रे ब्राह्मणडिम्भ

**व्याघ्राघ्रात[4]मृगीकृपाकुलमृगन्यायेन हिंसारुचेः**
**पाप[5] प्राण्युपहारकेतनजुषः प्राप्तोऽसि मे गोचरम् ।**
**सोऽहं प्राग्भवतैव भूतजननीमृभ्योमि खड्गाहति-**
**च्छिन्न[6]स्कन्धकबन्धरन्ध्ररुधिरप्राग्भारनिःस्यन्दिना ॥ १९ ॥**

---

**माधवः** । विस्मयेऽहो नु खलु भोः । काकतालीयमचिन्तितोपनतम् । यथा काकागमनतालपतनयोरेकदा संभवो दैवाधीनस्तथेदमपीत्यर्थः । **राहोरित्यादि** । दैवाद्विधिवशादासाद्य प्राप्य । अर्थात्प्रियाम् । अस्य दस्योश्चौरस्य खड्गपातविषयात्प्रेयसीमाकर्षतो मम चेतः कथं वर्तताम् । नवनवरसोदयात्तन्न जान इत्यर्थः । कामिव । राहोराननचरीमिन्दुकलामिव । कृपाणपातविषयामिति पाठे खड्गपतनस्य विषय आश्रयो यत्र तामेतादृशीं प्रेयसीं प्राप्य कथं मम चेतो वर्ततामिति योजना । यद्वा अस्य कीदृशस्य । आच्छिन्दतो द्विधाकर्तुमुद्यतस्य । प्रियामित्यर्थात् । ततो जीवनाभाव एवास्या इति भावः । चोरिकयापहरणेन दस्युत्वम् । तदिह प्रथमार्धेन हेतुरुक्तः । द्वितीयेन फलमाह—आतङ्काच्चित्तचमत्काराद्विकलं न त्वस्य निसर्गसात्त्विकस्य भयमिति यद्यपि तथापि प्रियप्राप्त्या जीवनसव्यपेक्षतया भयमुचितमेव । पूर्वं तु जीवननिरपेक्षतया निर्भयत्वमित्यातङ्को भयमेव । राहोरित्युपमानं भयहेतुः । चन्द्रकलोपमया जगन्नेत्रोत्सवकरीयं व्यसनमुपगतेति करुणया द्रवीभूतम् । दैवादासाद्येति विस्मयाद्विचलितम् । दस्योरित्यनेन मालतीमयं हन्तुमुद्यतश्चौर इति कोपेन दीप्तम् । आच्छिन्दतः प्रेयसीमिति प्रियाजीवननिर्वाहेण हर्षेण प्रसन्नम् ॥ १८ ॥ **अघोरघण्टः** । ब्राह्मणेति सिद्ध्यनुगुणशुचित्वार्थं यज्ञोपवीतधारणात् । डिम्भो बालकः । ब्राह्मणकपालभोजिनो मम ब्राह्मणवधेऽपि न दोष इत्युक्तमनेनेत्यपि भावः ॥ **व्याघ्रेत्यादि** । हे पाप मालत्युपहारकृत्यपरस्य मे गोचरं समीपं यत्प्राप्तोऽसि । अत एव विघ्नकारितया पापेति । कीदृशस्य मे । व्याघ्रगृहीतहरिणीकृपयाकुलो यो मृगस्तन्न्यायेन मृगीमनुसरन्व्याघ्रसंनिधौ पतन्मृगस्तस्य वध्यो भवत्येवं हिंसारुचेः । एनां न रक्षसि त्वं तु म्रियस इति भा-

---

१ धीरस्य. २ विषयाम्. ३ वर्तते. ४ घ्राण. ५ पापः. ६ व्यस्त.

**माधवः**—दुरात्मन्पाखण्डचण्डाल[1]

> **असारं संसारं परिमुषितरत्नं त्रिभुवनं**
> **निरालोकं लोकं मरणशरणं बान्धवजनम् ।**
> **अदर्पं कंदर्पं जननयननिर्माणमफलं**
> **जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः[2] ॥ ३० ॥**

वमाश्रित्य । पाठान्तरं हिंसारुचे इति संबोधनं वा । सोऽहं भवतैव प्रागग्रे भूतजननीं जगन्मातरं चण्डिकामृध्नोमि प्रीणयामि । ऋधु वृद्धाविति स्वादिरपीति धातुप्रदीपः । कीदृशेन खड्गहत्या व्यस्तस्कन्धश्छिन्नग्रीवः । अत एव कबन्धस्तस्य रन्ध्राद्रुधिरप्राग्भारं श्चोतनं समूहं वा निःस्यन्दितुं शीलं यस्य तेन । रुचेरिति पञ्चम्यन्तपाठे रुचेर्हेतोर्मे गोचरं प्राप्तोऽसीत्यर्थः । पापस्थाने प्रायःपाठे समस्तमेव पदम् । 'केतनं कृत्ये केतावुपनिमन्त्रणे' इत्यमरः । 'गोचरस्तु समीपे स्यात्' इति धरणिः । यत एव च्छिन्नग्रीवोऽत एव कबन्ध इति हेतुहेतुमद्भावेनोक्तिपोष एव । वीररसोऽयम् ॥ २९ ॥ मारणेऽपराधमाह—**असारमित्यादि** । हे पाखण्ड जगदसारं सारशून्यं विधातुं कर्तुं कथं व्यवसितः कृतप्रारम्भोऽसि । 'अशक्यानि दुरन्तानि समव्ययफलानि च । असत्यानि च कार्याणि नारभेत विचक्षणः ॥' इति न श्रुतं त्वया । तथा च संसारसारभूतेयमेव । अनया विनासार एव स इति । यदाह—'सारं तु महिलारत्नं संसार इति निश्चयः ।' इति । 'जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते ।' इति । तत्सर्वमाकृष्येयं निर्मिता अतो रत्नमियम् । मनोहरत्वदीप्तिमत्त्वतरलत्वादिनेयं वा रत्नम् । अत एव तदभावात्प्रमुषितरत्नं त्रिभुवनं कर्तुं व्यवसितोऽसि । तदेतत्सर्वविषयं चौर्यं दुरन्तमिति भावः । इयमतिकान्त्या जगदुद्योतयतीत्यालोकभूता । एतदभावान्निरालोकं तमःप्रविष्टं लोकं जनं कर्तुं व्यवसितोऽसि । अत एवोत्कृष्टं प्रति लोकोक्तिस्तेन विनान्धकारस्तत्सत्त्व उद्योत इति । बान्धवजनानामेतत्सखीनामियं जीवनहेतुः । अत एतन्नाशान्मरणशरणं सखीजनं विधातुं व्यवसितोऽसि । अन्यस्त्रीनाशे तत्सख्यो दुःखिताः । एतन्नाशे तु म्रियन्त एवेति भावः । अत्रासारं संसारमित्यादिना नायिकागतरामणीयकातिशयवर्णनमुपक्रम्य मरणशरणमित्यादिस्नेहविषयताप्रतिपादनान्नैकवाक्यतयैकरसनिर्वाह इत्यदेश्यम् । मात्रादिबन्धुव्यतिरिक्तोदासीनबान्धवसंग्रहपराज्जनशब्दात्स्वस्यैव माधवस्तथा विपत्तिं सूचयतीत्यदोषात् । तदीयनानागुणचिन्तनादेव मरणशरणता ममेत्यारब्धनिर्वाहाच्च । कन्दर्पश्चैतया मोहनास्त्रेण दर्पं करोति एतदभावाददर्पं कन्दर्पम् । जननयनस्यैतद्दर्शनमेव फलम् । अत एतन्नाशात्तदफलम् । जगदनयालंकृतमेव । एतदभावाज्जीर्णारण्यतुल्यं तदिति । अत्र प्रियाप्रशंसया शृङ्गारो बन्धुमरणात्करुणः पाखण्डाक्षेपाद्वीरः कथमित्यद्भुत इति नाना

[1] आः दुरा०; पाषण्ड. [2] विवसितः.

अपि च । रे पाप

प्रणयिसखीसलीलपरिहासरसाधिगतै-
 र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
 पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ ३१ ॥

**अघोर०**—आः दुरात्मन् प्रहर प्रहर । नन्वयं न भवसि ।

**मालती०**—प्रसीद नाथ साहसिक । दारुणः खल्वयं हताशः । तत्परित्रायस्व माम् । निवर्त्यतामस्मादनर्थसंशयात् । ( पसीद णाह साहसिअ । दारुणो क्खु अअं हदासो । तो परित्तासु मं । णिअत्तीअदु इमादो अणत्थसंसआदो । )

**कपाल०**—भगवन् अप्रमत्तो भूत्वा दुरात्मानं व्यापादय ।

**माधवाघोरघण्टौ**—( मालतीकपालकुण्डले प्रति । ) अयि भीरु

धैर्यं निधेहि हृदये हत एष पापः
 किं वा कदाचिदपि केनचिदन्वभावि ।
सारङ्गसंगरविधाविभकुम्भकूट-
 कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥ ३२ ॥

---

रसाः ॥ ३० ॥ पुनरपि दोषमुद्भाव्य दण्डं चिकीर्षुराह—**प्रणयीत्यादि** । हे पाप तव शिरस्येष भुज आकस्मिकयमदण्ड इव पततु । आकस्मिकत्वेनाप्रतिक्रियत्वमुक्तम् । कीदृशस्य । तत्र वपुषि वधाय शस्त्रमुत्तोलयतः । अत्र भुजपदेन बाहुव्यापारमात्रेणैव हन्तव्योऽसीति शौर्यातिशय उक्तः । यद्वपुः सुकुमारशिरीषपुष्पाघातैरपि ताम्यति खिद्यति । कीदृशैः सप्रश्रयसखीसविलासपरिहासरसप्राप्तैः । अत्रापि शृङ्गारवीरकारुण्यसंभेदः ॥ ३१ ॥ **मालती** । अत्र त्वज्जीवने मम जीवनमपि सफलम् । अन्यथा तु मरणमेव वरमिति भावः । **कपालकुण्डला** । मालतीव कपालकुण्डलापि स्वनाथमाह—**भगवन्निति** । अवष्टम्भार्थमप्रमत्त इति । द्वयोर्भयं ज्ञात्वोभावाहतुः—**धैर्यमित्यादि** । हे भीरु त्वं हृदये धैर्यं कुरु । एष पापो हतः । अस्य वधे कुतः संशय इति वृथा भयं त इति भावः । अत्र युक्तिमाह—सारङ्गेण मृगेण सह युद्धविधाने हरेः सिंहस्य प्रमादोऽनवधानता किं वा केनचित्कदाप्यनुभूतः । कीदृशस्य । इभकुम्भरूपं यत्कूटमुच्चप्रदेशस्तत्कुट्टनशीलं हस्त एव वज्रं यस्य । यद्वा हरेरिन्द्रस्य हस्तिना सह

---

१ प्रणय. २ एतन्नास्ति क्वचित्. ३ पाडिणि० ( प्रतिनिवर्ततां—टी० ). ४ अत्थ०. ५ विक्रमस्व. ६ संहति, सूदन.

( नेपथ्ये कलकलः । सर्वे आकर्णयन्ति । पुनर्नेपथ्ये । )

भो भो मालत्यन्वेषिणः[1] सैनिकाः[2] इयममात्यभूरिवसुमाश्वासयन्त्यप्रतिहतप्रज्ञागतिर्[3]भगवती कामन्दकी वः समादिशति[4] । पर्यवष्टभ्यतामेतत्करालायतनम् ।

**नाघोरघण्टादन्यस्य[5] कर्मैतद्दारुणाद्भुतम्[6] ।**
**न करालोपहाराच्च फलमन्यद्विभाव्यते ।**

**कपाल०**—भगवन् पर्यवष्टब्धाः स्मः ।

**अघोरघण्टः**—संप्रति विशेषतः पौरुषस्यावसरः ।

**मालती**—हा तात हा भगवति । ( हा ताद हा भअवदि । )

**माधवः**—भवतु बान्धवसमाजसुस्थितां मालतीं विधाय तत्समक्षमेनं[10] व्यापादयामि । ( मालतीमन्यतः प्रेरयन्परिक्रामति । )

**माधवाघो०**—( अन्योन्यमुद्दिश्य । ) आः पाप

---

युद्धे नास्ति प्रमादः । कीदृशस्य । हस्तिकुम्भवत्पीवरशृङ्गकुट्टाकं पाणिस्थकुलिशं यस्य । कुम्भकूटपाणिकुलिशपदे शाकपार्थिवादिः । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे ।' इति मेदिनीकरः । वीरो रस इह ॥ ३२ ॥ मालतीगृहकथाकथनायाह—**भो भो इति** । अप्रतिहतेति सत्यवचनेत्यर्थः । एतेनाघोरघण्टकृतो मालत्यपहार इति कामन्दकीवचनं सत्यम् । मालतीमाधवयोश्च विवाहः सत्य इति षष्ठाङ्कावतार इति सूचितम् । पर्यवष्टम्भनं सर्वतो वेष्टनम् । **नेत्यादि** । एतत्कर्म मालत्यपहरणात्मकं भीषणं सिंहकौशलहरणात् । अद्भुतं बहुरक्षकरक्षिताया अपि हरणात् ॥ ३३ ॥ **कपालकुण्डला** । स्त्रीत्वाद्भयेन पलायनेच्छुराह—**भगवन्निति** । **अघोरघण्टः** । संग्रामादपसरणस्याधर्महेतुतया सात्विकतया चाह—**संप्रतीति** । पौरुषं पुरुषस्य व्यापारस्तेजो वा । 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि ।' इति विश्वः । **मालती** । मालती तत्रावेगातिशयादाह–हा तात हा भगवति इति । **माधवः** । मालतीरक्षार्थं कापालिको मया हत इत्यमात्यो जानात्वित्याशयेन मालतीं च कातरां वीक्ष्याह—**भवत्विति** । बान्धवेत्यादिना भाविकार्योपयोग उक्तः। अन्यतः कापालिकादन्यदेशं स्वसंमुखमिति यावत् ।

---

१ त्यन्वेषणतत्पराः. २ पुरुषाः. ३ चक्षुः, हतप्रतिज्ञा. ४ समाज्ञापयति. ५ तनं द्रुतम् । इति श्लोकार्धम्. ६ दन्यस्मात्. ७ दारुणादभूत्; भीषणा०. ८ कपालकुण्डलाप्रणयिनो नाघोरघण्टादन्यतश्चैतत्कर्म भीषणाद्भुतम् । इति पा. १० एनं दुरात्मानम्. ११ कापालिकं चान्यतः. १२ रे रे.

**कठोरास्थिग्रन्थिव्यतिकररणत्कारमुखरः**
**खरस्नायुच्छेदक्षणविहितवेगव्युपरमः ।**
**निरातङ्कः पङ्केष्विव पिशितपिण्डेषु विलस-**
**न्नसिर्गात्रं गात्रं सपदि लवशस्ते विकिरतु ॥ ३४ ॥**

( इति निष्क्रान्ताः सर्वे । )

**इति श्मशानवर्णनं नाम पञ्चमोऽङ्कः ।**

---

माधवाघोरघण्टौ द्वावप्येकश्लोकेन प्रहारव्यापारमाहतुः—**कठोरेत्यादि** । हे पाप ममासिः खड्गस्तव प्रत्यङ्गं लवशः खण्डं खण्डं सपदीदानीमेव विक्षिपतु । कर्दमेष्विव मांसपिण्डेषु निरातङ्को यथारुचि विचरन्सन् । कीदृशः । कठिनास्थिग्रन्थिघटनेन यो रणत्कारोऽव्यक्तध्वनिस्तेन मुखरः सशब्दः । कठिनस्नायुच्छेदेषु मुहूर्तं कृतवेगोपरमश्च ॥ ३४ ॥

कतीह पञ्चमाङ्कके स्फुरन्ति नोद्भटा रसाः ।
मदीयबुद्धिरल्पिका क्व वेद तानशेषतः ॥
प्रासोष्ट यं रत्नधरोऽतिभव्योऽतिभव्यरूपा दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमन्मनोहारिणि पञ्चमोऽयम् ॥

**इति पंचमोऽङ्कः ।**

---

१ झ–घ–णात्का. २ व्युपशमः, वेग–खेद. ३ खण्डेषु निपतन्.

## षष्ठोऽङ्कः ।

( ततः प्रविशति कपालकुण्डला । )

**कपाल०**—आः[1] दुरात्मन् मालतीनिमित्तं व्यापादितास्मद्गुरो माधवहतक अहं त्वया तस्मिन्नवसरे निर्दयं निघ्नत्यपि स्त्रीत्यवज्ञाता । ( सक्रोधम् । ) तदवश्यमनुभविष्यासि कपालकुण्डलाकोपस्य विजृम्भितम्[3] ।

**शान्तिः कुतस्तस्य भुजङ्गशत्रोर्यस्मिन्नमुक्तानुशया[4] सदैव ।**
**जागर्ति दंशाय निशातदंष्ट्राकोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ १ ॥**

( नेपथ्ये । )

**भो[5] राजानश्चरमवयसामाज्ञया संचरध्वं**
**कर्तव्येषु श्रवणसुभगं भूमिदेवाः पठन्तु ।**
**चित्रं नानावचन[6]निवहैश्चेष्टयतां मङ्गलेभ्यः**
**प्रत्यासन्नस्त्वरयतितरां जन्ययात्राप्रवेशः ॥ २ ॥**

---

संप्रति पूर्वाङ्कवृत्तगुरुवधवर्तमानाङ्कभाविमालतीविवाहभविष्यदङ्कमालतीहरणान्याह—**तत इत्यादि** । आः पीडायां कोपे च । 'आस्तु स्यात्कोपपीडयोः' इत्यमरः । स्त्रीनिमित्तं कापालिकवधेन पापेति । इहानुभविष्यसीत्यनेन क्रमरूपो गर्भसंधिरुक्तः । यदाह—' भाविनोऽर्थस्य यज्ज्ञानं क्रमः स परिकीर्तितः । दुरात्मन् कामोपहतात्मन् । विजृम्भितं मालत्यपहरणेनेति भावः । तदेवाह—**शान्तिरित्यादि** । तस्य भुजङ्गशत्रोः सर्पहिंसकस्य गरुडस्य वा कुतः शान्तिर्निर्वृतिरुपशमो वा । अपि तु नैव । यस्मिन्नत्यक्तकोपा तिग्मदन्ताग्रा विषोद्गारेण दुःसहा सर्पी सदैव दंशाय जागर्ति । एवकारेण मुहूर्तमात्रमपि न स्वस्थेत्याशयः । अनुशयो गाढरोषः । गरुडपक्षे तादृशी दंशार्थं जागर्ति । तस्यातिबलत्वान्न तत्करोतीति युक्तमेव ॥ ॥ **नेपथ्ये** । अधुना विवाहमङ्गलकृत्यं दर्शयति—**भो राजान इत्यादि** । जन्या वरस्य स्निग्धास्तेषां यात्रायाः प्रवेशो वधूगृहप्राप्तिः प्रत्यासन्नः समीपवर्त्यत एवात्यर्थं त्वरयति । ततो भो राजानः क्षत्रियाः विवाहकृत्येषु चरमवयसां वृद्धानामाज्ञया संचरध्वं प्रवर्तध्वम् । विवाहारम्भे वृद्धोपदिष्टमेव कर्मकारैः क्रियते । इह तु प्रभुतातिशयान्नृपा एव कर्मकारा इति दर्शितम् । भूमिदेवा ब्राह्मणाः कर्णमनोहरं यथा तथा पठन्तु । वैवाहिकमङ्गलवेदानित्यर्थात् । यद्वा यद्वेदस्वरूपं श्रवणसुभगं मङ्गलत्वात्तत्पठन्त्वित्यर्थः । पुरन्ध्रीर्लक्ष्यीकृत्याह—नानारचनानां मङ्गलादीनां समूहैः करणैश्चित्रमद्भुतं यथा तथा चेष्ट्यताम् । भावे तङ् । यद्वा चित्रं

---

१ आः पाप. २ विनिपातिता. ३ फलम्. ४ निबद्धा. ५ हे. ६ रचन; वचनविहितैश्चेष्टतां.

यावच्च संबन्धिनो न परापतन्ति तावद्धुत्सया मालत्या नगरदेवता-गृहमविघ्नमङ्गलाय गन्तव्य[१]मित्यादिशन्ति[२] भगवतीनिदेशवर्तिनोमात्यदाराः। अन्यच्च[३] यथा गृहीतसविशेषमण्डनः प्रतीक्ष्यतामानुयात्रिको जनः ।

**कपाल०**——भवतु । इतो मालतीविवाहपरिकर्मसत्वरप्रतीहारज-नशत[४]संकुलात्प्र[५]देशादपक्रम्य माधवापकारं प्रत्यभिनिविष्टा भवामि ।

( इति निष्क्रान्ता । )

**इति विष्कम्भकः ।**

---

[ ततः प्रविशति कलहंसकः । ]

**कल[६]०**——आज्ञप्तोऽस्मि नगरदेवतागर्भगृहस्थितेन समकरन्देन नाथ-माधवेन यथा जानीहि तावद्यात्राभिमुखं प्रवृत्ता मालती न वेति । तद्यावदेनमानन्दयिष्यामि । ( आणत्तोह्मि णअरदेव्वदागब्भघराहिदेणँ समअर-न्देण णाहमाहवेण जहा जाणीहि दाव जत्तां[७]हिमुहं प्पउत्ता मालदी ण वेत्ति । ता जाव णं आणन्दइस्सं । )

( ततः प्रविशतः माधवमकरन्दौ । )

---

नानाकर्म । केचिन्मङ्गलगीतं केचिद्वाद्यं केचिन्नृत्यं कुर्वन्त्वित्यर्थः । मङ्गलेभ्यो म-ङ्गलं कर्तुम् । क्रियार्थोपपदस्येति चतुर्थी । तादर्थ्ये वा । संचरध्वमिति ' समस्तृती-यायुक्तात् ' इति तङ् । ' वरस्निग्धेऽपि जन्यः स्यात् । ' इति मेदिनीकरः । एतेन चोरिकाविवाहमङ्गलमपि ध्वनिनोक्तम् ॥ २ ॥ संबन्धिनो वरस्य भ्रात्रादयः । पित्रादीनां नन्दने वृद्धेऽसम्भवादिति । परापतन्त्यायान्ति । अविघ्नेति माधवविवा-हायेति भावः । नन्दनविवाहस्य विघ्नवत्त्वात् । निदेश आज्ञा । अमात्यो भूरिवसुः । दाराः स्त्रियः । अनुयात्रानुगमनं तत्र नियुक्त आनुयात्रिको मालत्यनुगामी । **कपाल-कुण्डला** । कामन्दकीनामश्रवणभीता निष्क्रमणार्थमाह—**भवत्विति** । परिक-र्मेतिकर्तव्यता । **अपक्रम्येति** । अमङ्गलवेशतयान्येनापि संभावितनिःसारणा यत इति भावः । माधवापकारमित्यनेनाष्टमाङ्कं सूचयन्ती विघ्नमुद्योतयति । अभि-निविष्टा बद्धकक्षा ॥ ' भो राजानः ' इत्यादौ श्लेषेण चोरिकाविवाहस्याप्यभिधानाज्ज-न्यपदेन माधवपरिजनतया कलहंसस्यापि वचनात्तत्प्रवेशमाह—**प्रविश्येति** ।

---

१ गम्यताम्. २ दिशति भगवती कामन्दकी. ३ एतन्नास्ति क्वचित्. ४ सहस्रसं०. ५ देशात्प्रदे०. ६ कलहंसः–( प्रविश्य ). ७ वट्टिणा. ८ मअरन्दसणाहेण माह०. ९ इदो०.

**माधवः—**

**मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिणो**
**भूयःस्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम् ।**
**अद्यान्तः खलु सर्वथास्य मदनायासप्रबन्धस्य मे**
**कल्याणं विदधातु वा भगवतीनीतिर्विपर्येतु वा ॥ ३ ॥**

**मक०—**वयस्य कथं भगवत्याः सुमेधसो नीतिर्विपर्येष्यति ।

**कल०—**( उपसृत्य । ) नाथ दिष्ट्या वर्धसे । प्रवृत्ता खलु यात्राभिमुखं मालती । ( णाहं दिट्ठिआ वड्ढसि । पउत्ता क्खु जेत्ताहिमुहं मालदी । )

**माधवः—**अपि नाम सत्यम् ।

**मक०—**सखे किमश्रद्दधानः पृच्छसि । न केवलं प्रवृत्ता प्रत्यासन्ना च वर्तते । तथा हि ।

**अस्माकमेकपर्द एव मरुद्विकीर्ण-**
**जीमूतजालरसितानुकृतिर्निनादः ।**
**गम्भीरमङ्गलमृदङ्गसहस्रजन्मा**
**शब्दान्तरग्रहणशक्तिमपाकरोति ॥ ४ ॥**

---

गर्भगृहवर्तित्वेन माधवस्य गुप्तत्वम् । **माधवः** । राजविरुद्धचोरिकाविवाहस्य दुष्करतया कामन्दकीप्रतिज्ञासत्यत्वेन च संदेहवानाह—**मालत्या इत्यादि** । ममास्य विप्रलम्भजक्लेशस्य सर्वथोभयप्रकारेण निश्चितमद्यान्तः समाप्तिः । कीदृशस्य । मृगदृशो मालत्याः प्रचुरप्रेम्णा यानि विचेष्टितानि तैः परां कोटिं प्रकर्षकाष्ठां प्रापितस्य । आद्यदर्शनदिनादारभ्य विस्तारं गतैः । तत्र प्रथमे बकुलवीथिचेष्टाभिर्द्वितीये माधवचित्रावलोकनादिना तृतीये स्वप्नोपभोगवर्णनादिना चतुर्थे मोहनाशककरस्पर्शादिना पञ्चमे भयकम्पिताङ्गालिङ्गनादिना विस्तार इति भावः । पर्यवसानमाह—भगवतीनीतिः कामन्दकीनिसृष्टार्थदूतीकल्पः कल्याणं शुभं मालतीविवाहलक्षणं वा करोतु विपर्यये तु विफला वा भवतु । तथा च विवाहे सति शृङ्गारसंभोगलाभेन कामायासशान्तिः विपर्यये मरणादिति भावः ॥ ३ ॥ **मकरन्दः** । सुमेधसः सुबुद्धेः । विपर्येष्यति विपर्ययमेष्यति ॥ **कलहंसकः** । अत्र यात्रा गमनम् । तस्य मुखमारम्भम् ॥ **माधवः** । तद्वाक्यस्याश्वासपरत्वं तर्कयन्नाह—**अपीति** । अपि नामेति संभावनायाम् ॥ **अस्माकमित्यादि** । वातविस्तारिमेघसमूहशब्दिततुल्यो गम्भीरमङ्गलार्थमुरजसहस्रजन्मा शब्द एकपद

---

१ लोकनदिनादा. २ सस्य मे सर्वतः. ३ सुमेधायाः; सा मेधाशक्तिः. ४ णाह माहव. ५ इदोमुहं. ६ सत्यमेतद्. ७ दधान इव. ८ पदमेव. ९ निनदो. १० श्रवण.

तदेहि । जालमार्गेण पश्यामः । ( तथा कुर्वन्ति । )

**कलहंसकः**—नाथ प्रेक्षस्व प्रेक्षस्व । इमे तावदुत्पतितराजहंसविभ्रमाभिरामचामरसमीरणोद्वेल्लकदलिकावलीतरङ्गितोत्तानगगनाङ्गनसरोवरानिरन्तरोद्दण्डपुण्डरीकविभ्रमं वहन्तो धवलातपत्रनिवहा दृश्यन्ते । इमाः सविलासकर्वलिततताम्बूलवीटिकापूरितकपोलमण्डलाभोगव्यतिकरस्खलितमधुरमङ्गलोद्गीतबद्धकोलाहलैर्विविधरत्नालंकारकिरणावलीविडम्बितमहेन्द्रचापविच्छेदविच्छुरितनभःस्थलैर्वारसुन्दरीकदम्बैरध्यासिता उत्क्वणत्कनककिंकिणीजालझणझणझंकारिण्यः करिण्यः । ( णाह पेक्ख पेक्ख । इमे दाव उप्पडिअराअहंसविब्भमाहिरामचामरसमीरणोव्वेल्लकदलिआवलीतरङ्गिदुत्ताणगअणङ्गणसरोवरणिरन्तरुद्दण्डपुण्डरीअविब्भमं वहन्तो धवलादवत्तणिवहा दीसन्ति । इमाओ सविलासकवलिदतम्बूलवीडिआपूरिदकवोलमण्डलाभोअव्वइअरक्खलिदमहुरमङ्गलुग्गीअबद्धकोलाहलेहिं विविहरअणालंकारकिरणावलीविडम्बिदमहिन्दचावविच्छेअविच्छुरिदणहत्थलेहिं वारसुन्दरीकदम्बेहिं अज्झासिआ ओक्कणन्तकणअकिंकिणीजालझणझणझंकारिणीओ करिणीओ । ) ( माधवमकरन्दौ सकौतुकं पश्यतः । )

**मकरन्दः**—स्पृहणीयाः खल्वमात्यभूरिवसोर्विभूतयः । तथा हि ।

**प्रेङ्खद्भूरिमयूखमेचकचयैरुन्मेषिचाषच्छद-**
**च्छायासंवलितैर्विवर्तिभिरिव प्रान्तेषु पर्यावृताः ।**

---

एकस्मिन्क्षणेऽस्माकं शब्दान्तरग्रहणसामर्थ्यं निराकरोति । वाद्यरवेणान्यशब्दो न श्रूयत इत्यर्थः । सहस्रग्रहणमनेकोपलक्षणम् । सहस्रपत्रवत् ॥ ४ ॥ **कलहंसकः** । माधवोत्साहार्थमाह—**नाथेति** । अत्र उत्पतित उड्डीनः विभ्रमो विलासो विशिष्टभ्रमणं वा । अभिरामस्तुल्यः । उद्वेल्लन्कम्पमानः । कदलिका पताका । तरङ्गितं तरङ्गयुक्तम् । उत्तानमगभीरम् । गगनमेव सरः । उद्दण्डमुद्गतदण्डम् । आतपत्रं छत्रम् । मङ्गलातपत्रमिति पाठे विवाहे शुक्लच्छत्रस्य प्रशस्ततया मङ्गलपदेन श्वेतत्वमुक्तम् । एताः करिण्यश्च दृश्यन्त इत्यन्वयः । चकारोऽत्राध्याहर्तव्यः । चर्वितं भक्षितम् । व्यतिकरः संघट्टः । स्खलितं भाङ्गिमत् । मङ्गलोद्गीतं मङ्गलरूपमुच्चैर्गानम् । विडम्बितं सदृशीकृतम् । विच्छेदः खण्डः । विच्छुरितं व्याप्तम् । झणझणारूपो झङ्कारशब्दः । **प्रेङ्खदित्यादि** । तरणिकिरणसंपर्कादूर्ध्वमुखैर्मणिदीप्तिसङ्घैर्विवर्तिभिरितस्ततो गतैः प्रान्तेषु निकटेषु पर्यावृता

---

१ चर्विंतता०(टी.). २ लावलिपू०. ३ सरोणि०. ४ मङ्गलध०. ५ चापखण्ड. ६ किंकिणीझण०; जालरणिअ. ७ सकौतुकौ. ८ सस्पृहमिइत्य०. ९ रमणीयाः.

व्यक्ताखण्डलकार्मुका इव भवन्त्युच्चित्रचीनांशुक-
प्रस्तारस्थगिता इवोन्मुखमणिज्योतिर्वितानैर्दिशः ॥ ५ ॥

**कलहंसकः**—कथं ससंभ्रमानेकप्रतिहारमण्डलावर्जितोज्ज्वलकनककलधौतपत्त्रविचित्रवेत्रलतापरीक्षिप्तरेखारचितमण्डलो दूरत एव संस्थितः परिजनः । एषा च बहलसिन्दूरनिकरसंध्यारागोपरक्तमुखघूर्णत्कान्तनक्षत्रमालाभरणधारिणीं करेणुरजनीमलंकुर्वतीत एव कौतूहलोन्मुखसमस्तलोकदृश्यमानमनोहरा पाण्डुरपरिक्षामदेहशोभा प्रथमचन्द्रलेखाविभ्रमं वहन्ती किंचिदन्तरं प्रसृता मालती । ( कधं ससंभमाणेअपडिहारमण्डलावज्जिदुज्जलकणअकलधौअवॅत्तविचित्तवेत्तलदापरिक्खित्तरेहारइदमण्डलो दूॅरदो ज्जेव्व से संठिदो परिअणो । एसा अ बहलसिन्दूरणिअरसंज्झाराओवरत्त-

---

व्याप्ता इव दिशो व्यक्तेन्द्रचापा इव भवन्ति । कीदृशैः । प्रेङ्खन्त इतस्ततश्चलन्तो भूरीणां सुवर्णानां मयूखाः किरणा यत्र तादृशो मेचकः स्निग्धश्चयो येषु तैः । मयूरमेचकनिभैरिति पाठे प्रेङ्खन्नृत्यन्यो बहुमयूरस्तस्य मेचकाच्चन्द्रकान्निरतिशया भा येषां तैः । 'मेचकश्चन्द्रके स्निग्धे श्यामलेऽपि च दृश्यते ।' इति विश्वः । 'भूरि क्लीबं सुवर्णे च प्राज्ये स्याद्वाच्यलिङ्गकम् ।' इति मेदिनीकरः । उन्मेष्युड्डीनो यश्चाषः पक्षिभेदस्तस्य च्छदच्छायया पक्षकान्त्या संवलितैरिव मिलितैः । कीदृश्यः । उद्गतचित्रस्य चीनदेशभववस्त्रस्य प्रस्तारेण शय्यया प्रसारेण वा च्छन्ना इव । 'प्रस्तारस्तनितं शय्या' इति हारावली । मणय इहाभरणस्थरत्नानि ॥ ५ ॥ **कलहंसकः** । अत्रावर्जिता तिर्यक्त्यक्ता । कनकं हिरण्यम् । कलधौतं रजतम् । 'कलधौतं हेमरौप्ययोः' इति विश्वः । पङ्केन लेपेन । वेत्रलता वेत्रदण्डिका । परिक्षिप्ता रचिता । (रचित)**मण्डल** इति । अस्मान्मण्डलात्केनापि न बहिर्गन्तव्यमिति भावः । दूरत एव मालत्या इत्यर्थात् । पृथुसिन्दूरपूर एव सन्ध्यारागस्तेनोपरक्ता किञ्चिदारक्ता चटुला चपला घूर्णती लम्बमाना या नक्षत्रमाला सप्तविंशतिमौक्तिकमाला हस्तिप्रसाधनभेदो वा सैवाभरणं तद्धारिणीम् । रात्रिपक्षे नक्षत्रमाला तारकामाला । करेणुर्हस्तिनी सैव रात्रिस्ताम् । दृश्यमाना चासौ मनोहरा चेति समासः । पाण्डुरा धूसरा परिक्षामातिकृशाङ्गदीप्तिर्यस्याः सा । एतेन चन्द्रकलासाम्यमुक्तम् । दृश्यमानेत्यनेनान्येषां दर्शनमात्रं तव परमुपभोगो मालत्या इति सूचितम् । पाण्डुरेत्यादिना मालत्यामान्तर उद्वेग उक्तः । किञ्चिदन्तरं कियद्दूरम् । प्रसृता गता । कलधौतटङ्कपत्रेति पाठे टङ्कपत्रं पट्टिकेत्यर्थः ।

---

१ त्यक्ता. २ रक्तचटुलघू.(टी.). ३ पङ्क—पत्त-लिप्त. ४ दूरसंठिदो.

मुहघोलन्तकन्तणक्खत्तमालाभरणधारिणिं करेणुरअणिं अलंकरन्ती इदो ज्जव्वे कोदूहलुम्मुहसमत्थलोअदिस्सन्तमणुहरा पण्डुरपरिक्खामदेहसोहा पढमचन्दलेहाविब्भमं वहन्दी किंचि अन्तरं पसरिदा मालदी । )

**मकरन्दः**—वयस्य पश्य पश्य ।

**इयमवयवैः पाण्डुक्षामैरलंकृतमण्डना**
**कलितकुसुमा बालेवान्तर्लता परिशोषिणी ।**
**वहति च वरारोहा रम्यां विवाहमहोत्सव-**
**श्रियमुदयिनीमुद्गाढां च व्यनक्ति मनोरुजम् ॥ ६ ॥**

कथं निषादिता गजवधूः ।

**माधवः**—( सानन्दम् । ) कथमवतीर्य भगवतीलवङ्गिकाभ्यां समन्वितः प्रवृत्तैव ।

( ततः प्रविशति कामन्दकी मालती लवङ्गिका च । )

**कामन्दकी**—( सहर्षमपवार्य । )

**विधाता भद्रं नो वितरतु मनोज्ञाय विधये**
**विधेयासुर्देवाः परमरमणीयां परिणतिम् ।**
**कृतार्था भूयासं प्रियसुहृदपत्योपयमने**
**प्रयत्नः कृत्स्नोऽयं फलतु शिवतातिश्च भवतु ॥ ७ ॥**

---

**इयमित्यादि** । इयं वरारोहा प्रशस्तश्रोणिका विवाहमहोत्सवसंपत्तिं प्रकृष्टां रम्यां च वहति । सहजरमणीयत्वात् । उद्गाढां प्रबलां चित्तपीडां च प्रकाशयति । कीदृशी । पाण्डुक्षामैरङ्गैरलङ्कृतभूषणा । अतिरम्यतयामीभिरेव भूषणान्यलंक्रियन्त इति भावः । अन्तरभ्यन्तरे परिशोषिणी । अत एवाङ्गानां पाण्डुक्षामत्वम् । कलितं परिहितं कुसुमं यया सा । बाला षोडशवर्षवयस्का । अवयवैरित्यनेन सर्वांगीणं पाण्डुत्वाद्युक्तम् । लतेव । यथा लता नवा वसन्तादिप्रभावात्सुपुष्पापि कुतश्चिद्वैकृतादन्तःपरिशोषं वहति तथेयमपीत्यर्थः । निषादिता उपवेशिता । अवतारणार्थमिदम् ॥ ६ ॥ **कामन्दकी** । सहर्षमित्यभीष्टसंपादनादिति भावः । **विधातेत्यादि** । नोऽस्माकं मनोज्ञाय हृदिस्थाय विधये व्यापाराय प्रकृतविवाहाय भद्रं कुशलमविघ्नं विधाता ददातु । विधय इत्यत्र तादर्थ्ये चतुर्थी । क्रियार्थोपपदस्येति वा । वृत्तेऽपि कार्ये राजविरोधादनिष्टमाशङ्क्याह—परमरमणीयामविरोधिनीं परिणतिमुत्तरविशुद्धिं देवाः कुर्वन्तु । स्वस्यापि फलमाह—अहं कृतकृत्या भूयासम् । यतो मालतीमाधवयोर्विवाहे समस्तोऽयं प्रयत्नः फलतु । उत्तरकालशुद्ध्या फलदायी भवत्वित्यर्थः । परिणतिशुद्ध्या शिवदायी भवतु । कल्याणकरोऽस्त्वित्यर्थः ।

---

१ मुहमहुर. २ हलुप्फुल्लमुह. ३ सोहाविभाविदाणङ्गवेअणा. ४ पढमुग्गअचन्द. ५ हसन्ती. ६ किंवि ( किमपि ). ७ क्लान्तैः. ८ मण्डला. ९ सुमत्रातेवा; मा जातेवा०. १० रम्या. ११ मुद्धुतां. १२ कृतार्थी. १३ त्योपयमनः; हृदि यत्नैरभिमतः. १४ प्रयासः. १५ शिवदायी.

**मालती**—( स्वगतम् । ) केन पुनरुपायेन सांप्रतं मरणनिर्वाणस्यान्तरं संभावयिष्ये । मरणमपि मन्दभागधेयानामभिमतमिति दुर्लभं भवति । ( केण उण उवाएण संपदं मरणणिव्वाणस्स अन्दरं संभावइस्सं । मरणं वि मन्दभाअधेआणं अहिमदं त्ति दुल्लहं होदि । )

**लवङ्गिका**—( स्वगतम् ) अतिक्रामिता खलु प्रियसख्येतेनानुकूलविप्रलम्भेन । ( अदिकिलम्मिदा क्खु पिअसही एदिणा अणुऊलविप्पलम्भेण । )

( प्रविश्य पेटालकहस्ता )

**प्रतीहारी**—भगवति अमात्यो भणति एतेन नरेन्द्रानुप्रेषितेन विवाहनेपथ्येन देवतापुरतोऽलंकर्तव्या मालतीति । ( भअवदि अमच्चो भणादि एदिणा णरिन्दाणुप्पेसिदेण विवाहणेवत्थेण देवदापुरदो अलंकरिदव्वा मालदि त्ति । )

**कामन्दकी**—युक्तमाहामात्यः । माङ्गलिकं हि तत्स्थानम् । अतो दर्शय ।

**प्रती०**—एतत्तावद्धवलपट्टांशुकचोलकमेतच्चोत्तरीयरक्तवर्णांशुकम् । इमे च सर्वाङ्गिका आभरणसंयोगाः । अयं च मौक्तिका-

---

शिवतातिश्च भवत्विति पाठे शिवतातिः शिवकरः । सर्वदेवात्तातिलित्यनुवर्तमाने 'शिवशमरिष्टस्य करे' इति तातिल् । अत्र मरणमेव सर्वदुःखनाशकतया निर्वाणं मोक्षस्तस्यान्तरमवसरः । यद्वा मरणमेव निर्वाणं निर्वृतिः सुखम् । 'निर्वाणं निर्वृतौ मोक्षे' इति विश्वः । 'अन्तरमवसराध्यात्मसदृशेषु' इति मेदिनीकरः ॥ ७ ॥ **मालती** । संभावयिष्ये सम्यक् प्राप्स्यामि । भू प्राप्तावित्यस्यात्मनेपदिनो रूपम् । सांप्रतमित्यनेन माधवालाभान्नन्दनलाभविलम्बनाच्चेति दर्शितम् । मन्दभाग्यतया माधवप्राप्तिवन्मरणमपि न स्यादिति भावः । **लवङ्गिका** । अत्र क्रामिता क्लमं श्रमं प्रापिता । अनुकूलेन माधवेन सह विप्रलम्भो विरहस्तेन । यद्वा अनुकूलो नन्दनस्तस्य विप्रलम्भेन वञ्चनया । **प्रतीहारी** । पेटकं मञ्जूषा । 'पेटकं पुस्तकादीनां मञ्जूषायां कदम्बके ।' इति मेदिनीकरः । पेटकग्रहणं तु नन्दनप्रसाधनार्थम् । अत्र नेपथ्यं प्रसाधनम् । **कामन्दकी** । **युक्तमिति** । एतत्प्रसाधनेन मकरन्दमलंकृत्य मदयन्तिकां विवाहयिष्यामीति भावः । माङ्गलिकं मङ्गलहेतुः । **प्रतीहारी** । अत्र धवलं यत्पट्टं सूत्रमयमंशुकं तेन निर्मितश्चोलकः कूर्पासकः ।

---

१ मे मन्दभाअधेआए अहिमदं अदिदु०. २ अदिकीलालिआ ( अतिक्लेशिता ); किलामिदा. ३ पेटालक, भूषणपटलक. ४ अमच्चो भअवदिं विण्णवेदि. ५ देवदाए.

हारः । एतच्चन्दनम् । एष सितकुसुमापीड इति । ( एदं दाव धवलपट्टंसुअ-चोलॆअं एदं अ उत्तरीअरत्तवण्णंसुअं । इमे अ सव्वङ्गिआ आहरणसंजोआ अअं अ मोत्तिआहारो । एदं चन्दणं । एसो सिदकुसुमापीडो त्ति । )

**काम०**—( अपवार्य । ) रमणीयं हि वत्सं मकरन्दमवलोकयिष्यति मदयन्तिका ( प्रकाशम् । गृहीत्वा । ) भवत्वेवमित्युच्यताममात्यः ।

**प्रती०**—तथा । ( तहा । ) ( इति निष्क्रान्ता । )

**काम०**—लवङ्गिके प्रविश त्वमभ्यन्तरं वत्सया मालत्या सह ।

**लव०**—अथ भगवती पुनः क्व । ( अध भअवदी उण कहिं । )

**काम०**—अहमपि तावद्विविक्तेऽलंकरणरत्नानां प्राशस्त्यं शास्त्रतः परीक्षिष्ये । इति निष्क्रान्ता । )

**मालती**—( स्वगतम् ) लवङ्गिकामात्रपरिवारास्मि संवृत्ता । ( लवङ्गि-कामेत्तपरिवाराह्मि संउत्ता । )

**लव०**—एतद्देवतामन्दिरद्वारम् । तत्प्रविशावः । ( एदं देवतामन्दिर-दुवारं । पविसह्म । )

( इति प्रविशतः । )

**मक०**—वयस्य इतस्तावत्स्तम्भापवारितौ तिष्ठावः । ( तथा कुरुतः । )

**लव०**—सखि अयमङ्गरागः । इमाः कुसुममालाः । ( सहि अअं अङ्गराओ । इमाओ कुसुममालाओ । )

**मालती**—ततः किम् । ( तदो किं । )

---

'चोलः कूर्पासकोऽस्त्रियाम्' इत्यमरः । उत्तरीयरूपं रक्तांशुकं सिन्दूरीवस्त्रम् । 'आपीडः शेखरोऽस्त्रियाम्' इति मेदिनीकरः । भवतीति संबोधनम् । **कामन्दकी** । गुरुसमक्षं मालत्यनुरागानुभवो माधवस्य न स्यादत उक्तम्—प्रविश त्वमिति । **कामन्दकी** । विविक्ते विजने । **मालती** । हृद्गतमरणावकाशप्राप्त्या सानन्दोक्तिरियम् । बाह्यसंवेदनाभावान्मालती न पश्यतीति भावः । **मकरन्दः** । अपवारितं व्यवहितम् ॥ **लवङ्गिका** । अत्राङ्गरागः कुङ्कुमादिः । **मालती** । तत्प्रयोजनमपश्यन्तीवाह—ततः किं मयानेन कर्तव्यमित्यर्थः ।

---

१ जुअलं. २ रीअं; रत्तंसुअं. ३ इमे. ४ सिदेति नास्ति क्वचित्. ५ जनः. ६ भवत्वोमि. ७ आत्मगतम्. ८ वारा दाव. ९ अस्मात्परं ( प्रकाशं ) एदं देवता० इ०. १० ता ( तद् ) पविसदु पिअसही. ११ इतः स्तम्भान्तरितौ पश्यावः ।

**लव०**—सखि अस्मिन्पाणिग्रहणमङ्गलारम्भे कल्याणसंपत्तिनिमित्तं देवताः पूजयेत्यम्बयानुप्रेषितासि । ( सहि इमस्सिं पाणिग्गहणमङ्गलारम्भे कल्लाण-संवत्तिणिमित्तं देवदाओ पूजेहि त्ति अम्बाए अणुप्पेसिदासि । )

**मालती**—किमिदानीं दारुणसमारम्भदैवदुर्विलासपरिणामदुःखनिर्दग्ध-मानसां पुनः पुनर्मर्मच्छेददुःसहं मां मन्दभागिनीं दुनोषि । ( किं दाणिं दारुणसमारम्भदेव्वदुव्विलासपरिणामदुक्खणिद्दद्धमाणसं पुणो पुणो मम्मच्छेददूसहं मं मन्दभाइणीं दूमावेसि । )

**लवङ्गिका**—अथ किमसि वक्तुकामा । ( अह किंसि वत्तुकामा । )

**मालती**—यदिदानीं दुर्लभाभिनिवेशमनोरथविसंवदद्भागधेयो जनो मन्त्रयते । ( जं दाणिं दुल्लहाहिणिवेसमणोरहविसंवदन्तभाअधेओ जणो मन्तेदि । )

**मकरन्दः**—सखे श्रुतम् ।

**माधवः**—श्रुतमसंतोषश्च हृदयस्य ।

**मालती**—( लवङ्गिकां परिष्वज्य । ) परमार्थभगिनि प्रियसखि लवङ्गिके एषेदानीं ते प्रियसख्यनाथा मरणे वर्तमानागर्भनिर्गम-निरन्तरोपकारोपरूढविस्रम्भसदृशं परिष्वज्य त्वां प्रार्थयते । यदि तेऽहमनुवर्तनीया ततो मां हृदयेन धारयन्ती समग्रसौभाग्यलक्ष्मी-

---

**लवङ्गिका** । अत्र पाणिग्रहणेति सामान्योक्त्या माधवनन्दनयोर्विवाहश्श्लेषेण नर्मस्फोटोऽयं भावः । यदाह—‘ श्लेषेणोक्तिस्तु भावानां नर्मस्फोट इतीरितः । **मालती** । अत्र दुर्विलासपरिणामः प्रियत्यागाप्रियप्राप्तिलक्षणः । दुःसहमिति क्रिया-विशेषणम् । अनया श्लिष्टं मद्वचो न ज्ञातमत इयमेवं वदत्वित्यत आह ( लव० अथ किमित्यादि ) **मालती** । अत्राभिनिवेशिना मनोरथेन विसंवादं प्रतिकूलं भाग्यं यस्य सः । **मकरन्दः** । माधवे दुर्लभां वाञ्छां मत्वाह—सखे श्रुतमिति । **माधवः** । श्लिष्टे वचस्यनिष्टाशङ्कितमाह—असन्तोष इति । **मालती** । अत्र परमार्थेत्यादिना विश्वासपात्रत्वमुक्तम् । विरूढ उपचितः । सदृशं यथा तथा परिष्वज्येत्यन्वयः । अनुवर्तनीयोपकर्तव्या । समग्रसौभाग्य-पदेनारविन्दस्पर्धिनी शोभोक्ता । यदाह—‘ उत्तमैर्गुणिभिः स्पर्धा या

---

१ ग्गहणारम्भे. २ देवदां. ३ निव्वेद. ४ अइ. ५ विसंवाद ( टी. ). ६ किं. ७ श्रूयताम्. ८ षस्तु. ९ कारविरूढ.

परिग्रहैकमङ्गलं श्रीमाधवस्य मुखारविन्दमानन्दमसृणमवलोकयिष्यसि। ( परमत्थबहिणि पिअसहि लवङ्गिए एसा दाणिं दे पिअसही अणाहा मरणे वट्टमाणा आगब्भणिग्गमाणिरन्तरोवआरोवरूढविस्सम्भसरिसं परिस्सज्जिअ तुमं पेत्थेदि। जइ दे अहं अणुवट्टणीआ तदो मं हिअएण धारअन्ती समग्गसोहग्गलच्छीपरिग्गहेकमङ्गलं माहवसिरिणो मुहारविन्दं आणन्दमसिणं अवलोअइस्ससि ) ( इति रोदिति। )

**माधवः**—वयस्य मकरन्द

> **म्लानस्य जीवकुसुमस्य विकासनानि**
> **संतर्पणानि सकलेन्द्रियमोहनानि।**
> **आनन्दनानि हृदयैकरसायनानि**
> **दिष्ट्या मयाप्यधिगतानि वचोमृतानि ॥ ८॥**

**मालती**—यथा तस्य जीवितप्रदायिनो जनस्यावसितेति मां श्रुत्वा संतप्यमानस्य तत्तथाविधं शरीररत्नं न परिहीयते यथा च लोकान्तरगतामपि मामुद्दिश्य स जनः स्मरणसंकथामात्रपरिशेषां कालान्त-

---

सा शोभा प्रकीर्तिता।' मां हृदये धारयन्तीत्यनेन परंपरया ममापि दर्शनं स्यादित्युक्तम्। माधवश्रिय इत्यत्र प्राकृते पूर्वनिपातानियमाच्छ्रीमाधवस्येत्यर्थः। आनन्दमसृणत्वेन स्निग्धा दृष्टिरुक्ता। **म्लानस्येत्यादि**। वचांस्येवामृतानि मयापि दिष्ट्या निर्णीतानि। त्वया श्रुतमित्यादिना निर्णीतानि मया त्वधुनेत्यपिपदार्थः। अमृततुल्यत्वमाह—म्लानस्य प्रत्याशाभङ्गज्ञानेन संकोचितस्य जीवपुष्पस्य प्रकाशनानि। अमृतेऽपि सर्वप्रकाशकतया म्लानपुष्पप्रकाशकत्वम्। संतर्पणानि तृप्तिकरणानि। अमृतेऽप्येवम्। संतर्पणे सति बाह्येन्द्रियतर्पकाणि। अमृतेऽप्येवम्। आनन्दनान्यन्तर्मोदकानि। आय्यत आनीयतेनेनेत्यायनम्। रसस्यायनं रसायनम्। वचसां चित्तोल्लासकत्वेन नवत्वजननादि वा मृतस्य जरादिनाशकत्वेन नवत्वजननादिदमिति भावः। यद्वा अमृतपदेन जलमोक्षपीयूषाण्युच्यन्ते। तत्राद्यपदेन जलसाम्यम्। मोक्षसाम्यार्थपदत्रयम्। मोक्षे हि सम्यक्तृप्तिविषये निराकाङ्क्षतैव। इन्द्रियमोहोऽपि विषयग्रहाभावात्। 'आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्।' इति श्रुतेरानन्दमयता मोक्षे। यद्वा आद्यपदाभ्यां जलसाम्यमितरपदाभ्यां मोक्षसाम्यम्। पीयूषसाम्यार्थं शेषपदम्। अमृतं मोक्षपीयूषसलिलेषु घृतेऽपि च।' इति धरणिः॥ ८॥ **मालती**। अत्रावसिता

---

१ णिग्गमाणिम्मिद. २ अब्भत्थेदि. ३ माहवस्स सिरिमुहा०. ४ पलोएहि ( प्रलोकय ). ५ परलोक०.

रेपि लोकयात्रां न शिथिलयति तथा कुरुष्व । एवमेव प्रियसख्याः प्रसादान्मालती कृतार्था भवति । ( जहा तस्य जीविदप्पदाइणो जणस्स अवसिदत्ति मं सुणिअ संदप्पमाणस्स तं तहाविहं सरीररअणं ण परिहीअदि जहा अ लोअन्दरगदं वि मं उद्दिसिअ सो जणो सुमरणसंकधामेत्तपरिसेसं कालन्दरे[1] वि लोअजत्तं ण सिढिलेदि तहा करेसु । एवं ज्जेव्व पिअसहीए पसादादो मालदी किदत्था भोदि[2] । )

**मकरन्दः**—हन्त अतिकरुणं प्रस्तुतम्[3] ।

**माधवः**—

> **नैराश्यकातरधियो हरिणेक्षणायाः**
> **श्रुत्वा निकामकरुणं च मनोहरं च ।**
> **वात्सल्यमोहपरिदेवितमुद्वहामि**
> **चिन्ताविषादविपदं[4] च महोत्सवं च ॥ ९ ॥**

**लवङ्गिका**—अयि प्रतिहतमिदानीं तेऽमङ्गलम् । नातोऽप्यधिकतरं श्रोष्यामि । ( अइ पडिहदं दाणिं दे अमङ्गलं ण[5] अदो वि अधिअदरं सुणिस्सं । )

---

मृता । तथाविधमनिर्वचनीयम् । न परिहीयते न नश्यति तथा करिष्यसीत्यन्वयः । लोकयात्रा गार्हस्थ्यम् । सपत्नीकत्वं वा । माधवाप्तिप्रत्याशानाशादेवमेवेत्यवधारणम् । **मकरन्दः** । हन्तानुकम्पायाम् । **करुणमिति** । आलस्यादिसमुत्थो निरपेक्षभावः करुणः । औत्सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भ इत्यनयोर्भेदः । अत एव निरपेक्षपदोपलक्षितनैराश्यमाह माधवः—**नैराश्येत्यादि** । नैराश्येन प्रत्याशानाशेन कातरा विसंष्ठुला धीर्यस्या हरिणनेत्रायाः । वात्सल्यं प्रियविश्लेषे प्राणत्यागेच्छा । मोहो भ्रमः सप्रत्याशत्वेऽपि नैराश्याभिमानः । ताभ्यां यत्परिदेवितं विलपनं वृत्तवर्तमानभाव्यार्थचिन्तनमतिकरुणं मनोज्ञं च श्रुत्वा चिन्तया यो विषादस्तेन विपत्तिमुद्वहामि । चिन्ताविषादरूपां वा विपत्तिं महोत्सवं चोद्वहामि । चकारो मिथोविरुद्धरसयोजने । इह हेतुफलभावेनान्वयः । तथा हि नैराश्यकातरबुद्धित्वाद्वात्सल्यम् । ततः परिदेवनम् । तच्छ्रुत्वा मनोविषादः । तथा हरिणेक्षणत्वेनापहृतचित्तस्य ममालाभान्मनोज्ञपरिदेवितं श्रुत्वा महोत्सवः । ‘स पुनः क्रन्दनैर्मोहैः प्रलापैः परिदेवनैः । देहायासाभिघातैश्च करुणाभिनयो भवेत् ॥’ इति भरतः ॥ ९ ॥ **लवङ्गिका** । अत्रामङ्गलप्रतिघातो विवा-

---

१ कालन्दरेण. २ एव्वं दे पिअसही मालदी सकामा होइ. ३ वर्तते. ४ वसान, वसाद. ५ इदो वि अवरं ण.

**मालती**—सखि प्रियं खलु युष्माकं मालतीजीवितं न पुनर्मालती । ( सहि पिअं क्खु तुह्माणं मालदीजीविदं ण उण मालदी । )

**लवङ्गिका**—सखि किमेवं भणितं भवति । ( सहि किं एॅब्वं भणिदं भोदि । )

**मालती**—( आत्मानं निर्दिश्य । ) येन प्रत्याशानिबन्धनैर्वचनसंविधानैर्जीवयित्वेमं महाबीभत्सारम्भमनुभावितास्मि । सांप्रतं पुनर्मनोरथो मे एष एव यत्तस्य देवस्य परकीयत्वेनापराद्धमात्मानं परित्यक्ष्यामीति । तदस्मिन्प्रयोजने प्रियसखी मेऽपरिपन्थिनी भवतु । ( जेण पच्चासाणिबन्धणेहिं वअणसंविहाणेहिं जीआविअ इमं महाबीभच्छारम्भं अनुभाविदह्मि । सपदं उण मणोरहो मे एसो ज्जेव्व जं तस्स देवस्स परकेरअत्तणेण अवरद्धं अत्ताणं परिच्चइस्सं त्ति । ता इमस्सिं पओअणे पिअसही मे अपरिपन्थिणी होदु । ) ( इति पादयोः पतति । )

**मकरन्दः**—सैषा परमा सीमा स्नेहस्य ।

( लवङ्गिका माधवं संज्ञया समाह्वयति । )

**मकरन्दः**—वयस्य उपसृत्य लवङ्गिकास्थाने तिष्ठ ।

**माधवः**—परवानस्मि साध्वसेन ।

**मकरन्दः**—इयमेव नेदीयसां प्रकृतिरभ्युदयानाम् ।

( माधवः स्वैरं लवङ्गिकास्थाने तिष्ठति । )

**मालती**—सखि कुर्वनुकुलतया प्रसादम् ।( सहि करेहि अणुऊलदाए पसादं । )

---

हादिति बाह्यम् । माधवसन्निधानादित्यान्तरम् । **मालती** । बाह्यार्थमाकलय्याह—अत्र तच्छरीरावच्छिन्नात्मा मालती । जीवनं त्वदृष्टविशेषकारितदेहात्मसंयोग इति जीवनमालत्योर्भेदः । जीवनस्य सुखहेतुतया प्रियत्वं तच्चेह दुःखसंततिजनकमतस्त्याज्यमेव भवतीति भावः । **मालती** । अत्रान्यजनेत्यत्रान्यपदेन माधवाभिधानम् । नन्दनापेक्षयान्यत्वात् । दुर्लभत्वेन परकीयत्वारोपाद्वा । बीभत्समिह नन्दनविवाहार्थमङ्गलस्यानिष्ठस्य दर्शनात् । अनपराद्धमितीषदर्थे नञ् । आनन्दनविवाहपर्यन्तस्थायित्वे महापराधो यतः । अन्यस्य संभोगादेरभावादेष एवेत्युक्तम् । अपरिपन्थिन्यविरोधिनी । एतदात्मत्यागरूपम् । संज्ञया संकेतेन ॥ **माधवः** । परवानायत्तः । साध्वसेन जडतया । **मकरन्दः** । अत्यभीष्टलाभादियम् । नेदीयसां निकटानाम् ॥ स्वैरं शनैः । **मालती** । अत्र मर्तुं स्वीकुर्वित्यर्थः ॥

---

१ ति. २ उद्दिश्य. ३ अन्यजनप्र० (टी.). ४ पराधीनत्वेनानप० ५ उण मे. ६ महाभाअस्स. ७ परोक्खगुणसंकित्तणेण. ८ अणव०. ९ परिच्चइअ णिव्वुदा हुविस्सं ( परित्यज्य निर्वृता भविष्यामि ). १० वयस्य पर०. ११ स्वैरमुपसृत्य. १२ तायै.

**माधवः—**

**सरले साहसरागं परिहर रम्भोरु मुञ्च संरम्भम्।**
**विरसं विरहायासं सोढुं तव चित्तमसहं मे ॥ १० ॥**

**मालती—**सखि अलङ्घनीय एव ते मालतीप्रणामः। ( सहि अलङ्घणीओ ज्जेव्व दे मालदीप्पणामो। )

**माधवः—**( सहर्षम्। )

**किं वा भणामि विच्छेददारुणायासकारिणि।**
**कामं कुरु वरारोहे देहि मे परिरम्भणम् ॥ ११ ॥**

**मालती—**( सहर्षम्। ) कथमनुगृहीतास्मि। ( उत्थाय ) इयमालिङ्गामि। दर्शनं पुनः प्रियसख्या बाष्पोत्पीडेन निरुद्धं न लभ्यते। ( आलिङ्ग्य सानन्दम्। ) सखि कठोरकमलगर्भपक्ष्मलोऽन्यादृश एव तेऽद्य निर्वापयति मां शरीरस्पर्शः। ( सास्रम्। ) किं च मौलिविनिवेशिताञ्जलिर्मम वचनेन विज्ञापय तं जनं न मया मन्दभाग्यया विकसत्पुण्डरी-

---

माधवस्य संस्कृतभाषया लवङ्गिकाभ्रमो न स्यादिति भाषासमावेशेनाह—**सरल इत्यादि**। साहस आत्मनिरपेक्षकार्ये रागमनुरागं परिहर। रम्भोरु कदलीसमोरुदेशे हे संरम्भं मरणे त्वरां त्यज। जीवन्त्यां प्रत्याशापि स्यादिति भावः ) विरसं रसशून्यं तव विश्लेषदुःखं सोढुं मे चित्तमक्षमं यतः। अतोऽयं वल्लभस्त्वयि दत्तोऽतस्त्यज मरणाभिनिवेशमिति लवाङ्गिकाभिप्रायः। अत एव सरले अज्ञे ऋजुप्रकृतिके वा। माधवपक्षे सरले अजानति हे तव विरहायासं सोढुं मे चित्तमसहमतस्तव समीपमागतोऽस्मि तन्मरणं त्यज इतरत्सममेव। तदिह संस्कृतप्राकृतयोः साम्यात्प्राकृतसमकम् ॥ १० ॥ **किं वेत्यादि**। किं वा भणामि। त्वदारम्भनिषेधं न करोमीत्यर्थः। हे विरहदुःसहकष्टकारिणि सुश्रोणि काममभीष्टं कुरु। यद्येवं तदा ममालिङ्गनं देहीति लवङ्गिकापक्षे। माधवपक्षे तु किंवा भणामि किं वक्तव्येन। कामं कामव्यापारं कुरु। अतः परिरम्भणं देहि। 'आरोहः श्रोणिकाययोः' इति धरणिः। श्लोकद्वयमिदं सौरसेन्या। यदाह—स्पष्टार्थं लक्षणं प्रोक्तं सौरसेन्याः प्रपञ्चतः। लक्षणं त्वेकमेवास्याः संस्कृताद्यदनूनता' ॥ ११ ॥ **मालती** अत्र उत्पीडः प्रबलीभूय निर्गमः। उत्पीडः समूहो वा। अपश्चिमं चरमम्। प्रियस्पर्शाद्दाह्लादात्सहर्षम्। कठोरमरालगर्भो बीजकोशः। पक्ष्मलो रोमाञ्चयोगात्। समाधिना सुकुमारः। अन्यादृश एवानुभूतसखीस्पर्शविधर्मा स्मशानानुभूतस्पर्शतुल्यः। निर्वापयति तापं शमयति। तथा तादृशः स्पर्शः शङ्काविषयोऽप्यत्र नेति निर्वेदात्साश्रुता। अत्र विकसन्ति शतं पत्राणि यस्य तत्। अन्यथेदं व्यर्थं स्यात्। मण्डलपदं संपूर्णत्वार्थम्।

---

१ विरसा. २. वोढुम्. ३ एषः. ४ त्वां. ५ कारिणीं. ६ पीडिनेन निरुद्धं प्रियसख्या अपश्चिमं न ( टी० ). ७ पक्ष्मलसुकुमारः ( टी० ). ८ विज्ञापयिष्यासि ( टी० ). ९ यथा न.

कलक्ष्मीविलासहारिणो मुखचन्द्रमण्डलस्य ते स्वच्छन्ददर्शनेन संभावितश्चिरं लोचनमहोत्सवः। मुधामनोरथैश्चाविरतविजृम्भमाणदुर्वारोद्वेगव्यातिकरोद्वर्तमानबन्धनं धारितं हृदयम्। गमिताश्च वारंवारं सविशेषदुःसहारम्भदावितसखीजनाः शरीरसंतापाः। कथमप्यतिवाहिता च चन्द्रातपमलयमारुतप्रमुखाऽनर्थपरम्परा। सांप्रतं पुनर्निराशास्मि संवृत्तेति। त्वयापि प्रियसखि सर्वदा स्मर्तव्यास्मि। एषा च श्रीमाधवस्वहस्तनिर्माणमनोहरा बकुलमाला मालतीनिर्विशेषं प्रियसख्या द्रष्टव्या सर्वदा हृदये धारणीया।
(इति स्वकंठादपनीय माधवस्य हृदि बकुलमालां विन्यस्यन्ती सहसापसृत्य साध्वसोत्कम्पं नाटयति।)

(कधं अणुगहीदह्मि। इअं आलिंगामि। दंसणं उण पिअसहीए बाहु(ह)प्पीडेणे णिरुद्धं ण लम्भीअदि। सहि कठोरकमलगब्भपह्मलो अण्णारिसो ज्जेव्व दे अज्ज णिव्वावेदि मं सरीरप्फंसो। किं अ। मौलिविणिवेसिदञ्जली मह वअणेण विण्णवेहि तं जणं जह ण मए मन्दभाइणीए विअसन्तपुण्डरीअलच्छीविलासहारिणो मुहचन्दमण्डलस्स दे सच्छन्ददंसणेण संभाविदो चिरं लोअणमहोसवो। मुधामणोरहेहिं अ अविरआविअम्भमाणदुव्वारुव्वेअवइअरुव्वत्तमाणबंधणं धारिअं हिअअं। गमिआ अ वारंवारं सविसेसदूसहारम्भदूमाविदसहीअणा सरीरसंदावा। कधं वि अदिवाहिदा अ चन्दादपमलअमारुदप्पमुहा अणत्थपरम्परा। संपदं उण णिरासह्मि संउत्तेति। तुए वि पिअसहि सव्वदा सुमरीदव्वह्मि। एसा अ माहवसिरीसहत्थणिम्माणमणुहरा वउलमाला मालदीणिव्विसेसं पिअसहीए दट्ठव्वा सव्वदा हिअए धारणिज्जा त्ति।)

---

चिरमित्यनेन स्वाधीनभर्तृकात्वमुक्तम्। सुरतादिरसैर्यस्या बद्धः पार्श्वगतः प्रियः। सामोदगुणसंप्राप्ता भवेत्स्वाधीनभर्तृका॥' निवेद्य दुःखं सुखी भवेदिति पूर्वानुभूतदुःखं निवेदयति--**अविरतेत्यादि**। उद्वर्तमानमुन्मूलितं बन्धनं स्थैर्यं यस्य तत्। बन्धनं स्वस्थानावस्थानं तस्योद्वर्तनमुन्मूलनारम्भ इति पाठान्तरव्याख्या। गमिताश्चेत्यादिना व्याध्यवस्थोक्ता। अतिवाहितातिक्रान्ता। चन्द्रातप इति तापकारित्वादातपः। एतेषामनर्थत्वमाह भरतः-' संभोगे ये सुखं कुर्युस्ते दुःखं विरहे भृशम्।' इति। स्मर्तव्येत्यनेन करुणव्याभिचारिभावं स्मरणमाह। यदाह व्यभिचारिणोऽस्य—' निर्वेदो ग्लानिमरणव्याधिदैन्यभ्रमादयः।' नैराश्याच्च मरणोदयः। यदाह—' सर्वैरेतैः प्रतीकारैर्यदि नास्ति समागमः। कामाग्निना प्रदीप्ताया जायते मरणं

---

१ दुन्मुच्य. २ पीडणेण. ३ पच्चक्खं, णिरुद्धं पिअसहीए अपच्छिमं. ४ कमलपह्मलो, ०पह्मलसुउमारो ५ सदपत्त; सदपत्तपुण्ड०. ६ संपुण्णचन्दमण्डलाहिरामस्स मुहस्स. ७ महोसवो लोअणाणं. ८ दूसहाआस, ०रम्भदूमणाइअ (दुर्मनायित—टी०). ९ पराओ. १० हिअएण.

**माधवः**—( अपवार्य । ) हन्त ।

> **एकीकृतस्त्वचि निषिक्त[1] इवावपीड्य**
> **निर्भुग्न[2]पीनकुचकुड्मलयानया मे ।**
> **कर्पूरहारहरिचन्दनचन्द्रकान्त-**
> **निःस्यन्दशैवलमृणालहिमादिवर्गः ॥ १२ ॥**

**मालती**—( स्वगतम् । ) अहो लवङ्गिकया मालती विप्रलब्धा ।

( [3]अहो लवङ्गिआए मालदी विप्पलद्धा । )

**माधवः**—अयि स्वचित्तवेदनामात्रवेदिनि[4] परव्यथानभिज्ञे इयमुपालभ्यसे ।

> **उद्दामदेहपरिदाहमहाज्वराणि**
> **संकल्पसंगमविनोदित[6]वेदनानि ।**
> **त्वत्स्नेहसंविदवलम्बितजीवितानि**
> **किं वा मयापि न दिनान्यतिवाहितानि ॥ १३ ॥**

**लव०**—सखि उपालम्भनीयैवोपालब्धासि । ( सहि उवालम्भणिज्जेव्व[7] उवालद्धासि । )

---

ततः' ॥ विप्रलम्भकरुणानन्तरं स्थायिनः शृङ्गारस्योपक्रममाह—**एषा चेति** । साध्वसं भयम् । **माधवः** । हन्त हर्षे । **एकीकृत इत्यादि** । अनया मालत्या कर्पूरादिवर्ग एकीकृतः सन्नालिङ्ग्य मे त्वचि निषिक्त इव । स्पर्शस्य त्वगिन्द्रियग्राह्यतया त्वचीत्युक्तम् । निर्भिन्नौ निरन्तरावलग्नौ पीनौ स्तनकुड्मलौ यस्यास्तया । हरिचन्दनं चन्दनविशेषः । निःस्यन्देन द्रव्याभिधानम् । 'कृदभिहितो भावो द्रव्यवत्प्रकाशते ।' इति न्यायात् । निःस्यन्दीति पाठे निःस्यन्दिनः सरसाः शैवालादय इत्यर्थः । अनेन प्रशान्तो मे कामजस्ताप इत्युक्तम् । बहूपमेयम् ॥ १२ ॥ आत्मानुरागप्रकाशनायानुभूतवेदनामाह—**अयीति । उद्दामेत्यादि** । एतादृशानि दिनानि मयापि किं वा नातिक्रान्तानि । अपि त्वतिक्रान्तान्येव । किं वेति संभावनायाम् । यद्वा किं निषेधे वैवार्थे । कीदृशानि । उद्दाम उद्भटो देहदाह एव महाज्वरो येषु । एतेनोद्वेग उक्तः । संकल्पसंगमेनापनीता व्यथा येषु । अनेनोन्माद उक्तः । यदाह—'बाहू प्रसार्य गमनं संकल्पाकल्पिते प्रिये । निवृत्तिः सहसान्यस्मिन्नुन्मादे हि प्रजायते ॥' यद्वा । संकल्पसंगमेनान्यस्त्रीद्वेषः सूचितस्तेन च निःसपत्नीकत्वं कन्याहरणबीजमाह । यदाह—'आसक्तिं वा दर्शयेत्सुखमनुपहतमेकपत्नीकत्वे वा वर्णयेत्' । इति । त्वदीयस्नेहज्ञानेनावलम्बितं जीवितं येषु । त्वत्स्नेहाज्ञाने मम मरणमेव स्यादित्याशयः । 'उपलब्धिश्चित्संवित्' इत्यमरः ॥१३॥ **लवङ्गिका** ।

---

१ विषक्त. २ निर्भिन्न. ३ अह्महे. ४ निवे०. ५ व्यसना. ६ विनोदन, निवेदित. ७ ०णिज्जं.

**कल०**—अहो सरसरमणीयता संविधानस्य । ( अहो सरसरमणीअदा संविहाणस्स । )

**मक०**—महाभागे एवमेतत् ।

**त्वं वत्सलेति कथमप्यवलम्बितात्मा**
**सत्यं जनोऽयमियतो दिवसाननैषीत् ।**
**आबद्धकंकणकरप्रणयप्रसाद-**
**मासाद्य नन्दतु चिराय फलन्तु कामाः ॥ १४ ॥**

**लव०**—महानुभाव हृदयेऽप्यप्रतिहतस्वयंग्राहसाहसोऽयं जनः किमिदानीं कंकणाभरणं करं विचारयति । ( महाणुहाव हिअए वि अप्पडिहदसअंगाहसाहसो अअं जणो दाणिं किं कंकणाभरणं करं विआरेदि । )

**मालती**—हा धिक् । कन्यकाजनविरुद्धं किमप्येषोपन्यस्यति । ( हद्धि । कण्णआजणविरुद्धं किं वि एसा उवण्णस्सदि । )

( प्रविश्य । )

**कामन्दकी**—पुत्रि कातरे किमेतत् ।

( मालती कम्पमाना कामन्दकीमालिङ्गति । )

**काम०**—( तस्याश्चिबुकमुन्नमय्य । ) वत्से ।

---

अर्हेऽनीयर् । **कलहंसकः** । अत्र सरसत्वेन शृङ्गारादित्वेन रम्यता । यदाह–' शृङ्गारकरुणावेव रसेष्वादौ प्रकीर्तितौ ' । संविधानं नायिकासंघट्टनप्रकारः । **त्वमित्यादि** । त्वं वत्सला सस्नेहेति हेतोरयं जनो माधवो विधृतजीवितः सन्सत्यमियद्दिनानि कथमप्यनैषीन्नीतवान् । अत आबद्धकङ्कणो धृतविवाहसूत्रो धृतविभूषणो वा यः करस्तस्य प्रणयो विवाहकाले ग्रहणं तद्रूपं प्रसादं प्राप्य नन्दतु । बहुकालमभीष्टाः संभोगादयः फलन्तु । ' कङ्कणं भूषणे सूत्रे ' इति विश्वः ॥ १४ ॥ **लवङ्गिका** । अत्राप्रतिहतः परिगृहीतः । अयं जनो मालती । स्वयमेवास्याः करं गृहाणेत्याशयः । **मालती** । अत्र अम्मका कुलकन्यका । विरुद्धमिति कुलकन्यकाविवाहा दैवार्षब्राह्मा एव शुभा दृश्यन्त इति भावः । **कामन्दकी** । स्वयंग्राहविवाहं कर्तुमनर्हमिति मन्यमानां मालतीमाह—**पुत्रीति** । अत्र गौरादित्वान्ङीषित्यवधेयम् । कातरे विह्वले ॥ **मालती** । करग्रहभयेन तदङ्गस्पर्शेन माधवस्य दर्शनहर्षेण च मालत्याः कम्पः । यदाह–' शीतभयहर्षरोषस्पर्शजरासंभवः कम्पः ' । नर्मस्फोटोऽयम् । यदाह–' नर्मस्फोटस्तु भावानां देहस्थानां प्रकाशनम् ' । **कामन्दकी** । चिबुकमुन्नमय्यौष्ठाधःप्रदेशमुत्तोल्य । ' अधः स्याच्चिबुकम् ' इत्यमरः ।

---

१ यदिय. २ आलब्ध. २ महाभाअ. ३ दाणिं करग्गहणे. ४ हा हदह्मि ( हतास्मि ). ५ अम्मका ( टी० ).

पुरश्चक्षूरागस्तदनु मनसोऽनन्यपरता
तनुग्लानिर्यस्य त्वयि समभवद्यत्र च तव ।
युवा सोऽयं प्रेयानिह सुवदने मुञ्च जडतां
विधातुर्वैदग्ध्यं विलसतु सकामोऽस्तु मदनः ॥ १५ ॥

**लव०**—भगवति कृष्णचतुर्दशीरजनीश्मशानसंचारनिर्वर्तितविषमव्यवसायनिष्ठापितचण्डपाखण्डप्रचण्डदोर्दण्डसाहसः साहसिकः खल्वेषः । अतः प्रियसख्युत्कम्पिता । ( भअवदि किसणचउद्दसीरअणिमसाणसंचारणिव्वत्तिदविसमव्ववसाअणिट्ठाविदचण्डपाखण्डपअण्डदोद्दण्डसाहसो साहसिओ क्खु एसो । अदो पिअसही उक्कम्पिदा । )

**मक०**—( स्वगतम् । ) साधु लवङ्गिके साधु । अवसरे खल्वनुरागोपकारयोर्गरीयसोरुपन्यासः ।

**मालती**—हा तात हा अम्ब । ( हा ताद हा अम्ब । )

**काम०**—वत्स माधव ।

---

पुरावृत्तं सङ्कलय्याह—**पुर इत्यादि** । प्रथमं नेत्रप्रीतिरथ मनसस्तद्गतत्वं शरीरग्लानिश्च त्वद्विषये यस्याभूयद्विषये तवाप्येतादृशा अभूवन् । हे सुमुखि सोऽयं युवा प्रेयान् प्रियतमः । अतो जडतां कार्याप्रतिपत्तिं त्यज गान्धर्वविवाहपरा भवेत्याशयः । तेन विधातुः प्रयत्नो विलसतु । कामः पूर्णेच्छो भवतु । आत्मव्यापारस्त्वनौद्धत्याय नोक्तः । इह चक्षूरागादिकं कामावस्था । यदाह—'चक्षुःप्रीतिर्मनःसंगः संकल्पोत्पत्तिरेव च । निद्राच्छेदस्तनुत्वं च व्यावृत्तिर्विषयान्तरात् ॥ लज्जाप्रणाश उन्मादो मूर्च्छा मरणमेव च ' इति । मनसोऽनन्यपरतया मनःसंगसंकल्पोत्पत्ती उक्ते । ग्लानिरित्यनेन निद्राच्छेदादयो मूर्च्छान्ता उक्ताः । तेषां ग्लानिहेतुत्वात् । अत्र च पुरस्तदन्वित्यादिना हेतुफलभावः सूचितः । युवत्वप्रियत्वे प्रवृत्तिहेतू उक्ते । प्रियश्च 'यो विप्रियं न कुरुते न चायुक्तं प्रभाषते । तथार्जवसमाचारः स प्रियः परिकीर्तितः ॥ इति भरतोक्तः । तत्रापि प्रकर्षे ईयसुन् । जडता प्रियदर्शनात् ॥ १५ ॥ **लवङ्गिका** । अत्र कृष्णरजनी कृष्णपक्षचतुर्दशीरात्रिः । विषमव्यवसायो महामांसविक्रयः । निष्ठापितो निहतः । पाखण्डोऽघोरघण्टः । साहसं स्त्रीवधरूपम् । साहसिकाद्धि भयं भवत्येव । तथा च प्राणदानेन माधवक्रीतमात्मानं कथं न समर्पयसीति भावः । **मालती** । साहसविवाहारम्भाद्दुर्जनभयात्पित्रादिवियोगशङ्कनाच्च खेदे हाशब्दः ।

---

१ म्लानि. २ संचरण. ३ णिव्वूढ. ४ णिव्वापिअ ( निर्वापित—टी. ). ५ **काम०**—लवङ्गिके स्थाने खल्वनुरागो०. ६ ( स्वगतम् ) हा. ७ एतन्नास्ति पुस्तकान्तरे ।

**माधवः**—आज्ञापय ।

**काम०**—इयमशेष[1]सामन्तमस्तकोत्तंसपरागरञ्जितचरणाङ्गुलेरमात्यभूरिवसोरेक[2]मपत्यरत्नं मालती भगवता सदृशसंयोगरसिकेन वेधसा मन्मथेन मया च तुभ्यं दीयते । ( इति रोदिति[3] । )

**मक०**—फलितं नै[4]स्तर्हि भगवतीपादप्रसादेन ।

**माधवः**—तत्किमिति[5] बाष्पायितं भगवत्या ।

**काम०**—( चीवरा[6]ञ्चलेन नेत्रे प्रमृज्य । ) विज्ञापयामि[7] कल्याणिनम् ।

**माधवः**—नन्वाज्ञापय[8] ।

**काम०**—

> **परिणतिरमणीयाः प्रीतयस्त्वद्विधाना-**
> **[9]महमपि तव मान्या हेतुभिस्तैश्च तैश्च ।**
> **तदिह सुवदनायां तात मत्तः परस्ता[10]-**
> **त्परिचयकरुणायां[11] सर्वथा मा विरंसीः ॥ १६ ॥**

( इति नन्तुं[12]मिच्छति । )

**माधवः**—( वारयन् । ) अहो वात्सल्यादतिक्रांमति प्रसङ्गः ।

**मक०**—भगवति

---

**कामन्दकी** । 'उत्तंसः कर्णपूरे च शेखरे च प्रकीर्तितः ।' इति विश्वः । अङ्गुलिपदेन चरणाग्रे प्रणामादधृष्यतोक्ता । अन्योन्यदर्शनेन धात्रा । प्रीतिजननात्कामेन । चोरिकाविवाहान्मयेत्याशयः । **माधवः** । बाष्पायितमुद्गतबाष्पं वृत्तम् । मातृवत्स्नेहेनेदमुपपन्नम् । **परिणतीत्यादि** । त्वद्विधानां कुलादिमतां प्रीतयः परिपाकरम्या भवन्ति । अधुनावश्यत्वेन परिणतिपदम् । तैस्तैर्हेतुभिः पितृबन्धुत्वोपदेशकत्वादिभिरहं तव मान्या । हेतूनां बहुत्वेन वीप्सा । तत इह मालत्यां मत्तः परस्तान्मत्परोक्षे परिचयरूपकरुणायां मा विरंसीर्मा विरतो भविष्यसि । करुणाया इति पाठे 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ।' इति पञ्चमी । **तातेति** । सर्वं ततं व्याप्तमनेनेति तात व्यापक हे । यद्वा तातो विधेयः । 'तातो विधेये जनके' इति विश्वः । विरंसीरित्यत्र माङि लुङिति भविष्यति लुङ् । वात्सल्यात्प्रपन्नानुकम्पातः । अतिक्रमोऽन्यथात्वम् । अत्र माला नाम नाट्यालङ्कारकथनम् । यदाह—'माला

---

१ अशेषभुवन. २ एकापत्यं. ३ बाष्पं विसृजति. ४ हि. ५ किमित्यतिबाष्पायितमाननं भगवत्याः. ६ चीरा०, परिमृज्य. ७ वत्स किमपि कल्याणिनं वक्तुकामास्मि । **मा०**—तत्किम् । का०—विज्ञापयामि । ८ आज्ञापय. ९ वय. १० परस्मात्. ११ णायाः. १२ पादयोः पतितुम्.

श्लाघ्यान्वयेति नयनोत्सवकारिणीति
निर्व्यूढसौहृदभरेति[1] गुणोज्ज्वलेति ।
एकैकमेव हि वशीकरणं गरीयो
युष्माकमेवमियामित्यथ किं ब्रवीमि ॥ १७ ॥

**कामन्दकी**—वत्स माधव ।

**माधवः**—आज्ञापय[2] ।

**काम०**—वत्से मालति ।

**मालती**[3]—आज्ञापयतु भगवती । ( आणवेदु भअवदी । )

**काम०**—

प्रेयो मित्रं बन्धुता वा समग्रा
सर्वे कामाः शेवधि[4]र्जीवितं वा ।
स्त्रीणां भर्ता धर्मदाराश्च पुंसा-
मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ १८ ॥

**मक०**—अथ किम् ।

**लव०**—भगवती यथाज्ञापयति । ( भअ[5]वदी जधा आणवेदि । )

---

बहूनां हेतूनां निर्देशः साध्यसिद्धये ।' इति ॥ १६ ॥ **श्लाघ्यान्वयेत्यादि** । उज्ज्वलकुला । चक्षुःप्रीतिजननी रूपवती । उपचितसौहार्दातिशयानुरक्ता । गुणोज्ज्वला शीलादिमती । एतत्सर्वं वशीकरणमस्त्येव गुरुतरम् । एवं सति युष्माकमियमिति हेतोरनन्तरं किं ब्रवीमि । अतः परं न वाच्यमस्तीत्यर्थः । इतिकारचतुष्टयं स्वरूपोपदर्शनाय । तथा च त्वदभ्यर्थना सहजासिद्धैवेति भावः । इह प्रसिद्धिनामा नाट्यालङ्कारः । यदाह—'वर्णने वस्तुनो यत्तु गुणस्योत्कीर्तनं भवेत् । प्रसिद्धिरिह सा ज्ञेया नाटके कथिता बुधैः ॥' इति ॥ १७ ॥ **प्रेय इत्यादि** । वत्सयोर्मालतीमाधवयोरन्योन्यमेतद्विदितमस्तु यत्स्त्रीणां भर्ता प्रेयः प्रियतमं वस्तु मित्रं सुहृद् बन्धुता बन्धुसमूहः सर्वे ईप्सिताः समग्रा मिलिताः शेवधिर्निधिर्जीवनं च । पुरुषाणां धर्मदाराः पाणिगृहीताः प्रेय इत्यादि । बन्धुतेत्यत्र 'ग्रामजनबन्धुसहायेभ्यस्तल्' । इति समूहे तल् । 'निधिर्ना शेवधिः' इत्यमरः । अनेन गान्धर्वविवाहो दर्शितः । स चानुरागमूलत्वाच्छ्रेष्ठः । यदाह—'अनुरागात्मकत्वेन गान्धर्वः श्रेष्ठतां गतः' । इति ॥ १८ ॥ **मकरन्दः** । जवनिका पिधानपटः ।

---

१ रसे. २ अस्मात्परं—**काम०**—स्वीक्रियतामियम् । **मा०**—स्वीकरोमि । **का०**—वत्स माधव वत्से मालति । **मा०**—आज्ञापय । इत्य०. ३ लव०. ४ संपदो. ५ जह तुह्मे आणवेत्थ.

**काम॰**—वत्स मकरन्द त्वमनेनैव वैवाहिकेन मालतीनेपथ्येन प्रसाधितः[1] परिणाययात्मानम् । ( इति पेट्टालकमर्पयति )

**मक॰**—यथाज्ञापयति[2] भगवती । यावदितश्चित्रजवनिकामन्तर्धाय नेपथ्यं धारयामि । ( तथा करोति । )

**माधवः**—भगवति सुलभं[3] बह्वनर्थमतिसंकटमिदं[4] वयस्यस्य ।

**काम॰**—आः कस्त्वमस्यां चिन्तायाम् ।

**माधवः**—एवं भगवत्येव जानाति ।

**मक॰**[5]—( प्रविश्य विहसन् । ) वयस्य मालत्यस्मि ।

( सर्वे सविस्मयं सकौतुकं पश्यन्ति । )

**माधवः**—( मकरन्दं[6] परिष्वज्य सोपहासम्[7] ) भगवति कृतपुण्य एव नन्दनो यः[8] प्रियामीदृशीं कामयिष्यते ।

**काम**—वत्सौ मालतीमाधवौ इतो निर्गत्य वृक्षगहनेन गम्यतामुद्वाहमङ्गलार्थमस्माद्विहारिकायाः[9] पश्चादुद्यानवाटः । सुविहितं[10] च तत्र वैवाहिकं द्रव्यजातमवलोकितया । भूयश्च

**गाढोत्कण्ठकठोरकेरलवधूगण्डा[11]पाण्डुच्छदै-**
**स्ताम्बूलीपटलैः पिनद्धफलि[12]नव्यानम्रपूगद्रुमाः ।**
**कंक्कोली[13]फलजग्धि[14]मुग्धविकिरव्याहारिणस्तद्भुवो**
**भागाः प्रेङ्खितमातुलुङ्ग[15]वृतयः प्रेयो विधास्यन्ति वाम् ॥ १९ ॥**

---

तत्रान्तर्धानम् । स्त्रीणामग्रे स्त्रीवेषादिकरणेनौचित्यात् । **मकरन्दः** । मालत्यस्मि संवृत्त इत्यनेन वैमूढकनामा भाव उक्तः । यदाह 'वैमूढकं तु लास्यं स्यात्पुंसः स्त्रीवेषधारणम्' । इति । **माधवः** । कामयिष्यत इत्यनेन पराङ्कावतारः कृतः । **कामन्दकी** अनुपलम्भार्थमाह—वृक्षगहनेनेति । गहनेन वनेन विषमेण वा । 'गहनं विषमे त्रिषु' इति विश्वः । उद्वाहमङ्गलं विवाहार्थं कर्म । **गाढेत्यादि** । तद्भुवो भागा उद्यानवाटिकायाः प्रदेशा वां युवयोः श्रेयः शृङ्गारादिकं विधास्यन्ति । शृङ्गारस्योपवनविहरणजन्यत्वात् । यदाह—'उपवनगमनविहारैः शृ-

---

१ नेपथ्येनापवारितः प्रवर्तस्व परिणायायात्मनः. २ यदाज्ञापयसि. ३ सुलभमपि. ४ संकटमेतद्व॰. ५ मालतीवेषधारी म॰. ६ गाढं म॰. ७ एतन्नास्ति क्वचित्. ८ यतः प्रियवयस्यमीदृशं मनसा मुहूर्तमपि. ९ र्थम् । अस्ति तत्र दीर्घिकायाः. १० संनिहितम्; च तत्र-तत्रैव-. ११ ण्डाच्छ. १२ फलित. १३ कंकोली. १४ जग्ध. १५ मातुलि—ल-ङ्ग.

गत्वा च तत्रैव मकरन्दमदयन्तिकागमनं[1] यावत्स्थातव्यम् ।

**माधवः**—( सहर्षम् । ) कल्याणान्तरावतंसा[2] हि कल्याणसंपदुपरिष्टाद्भवति[3] ।

**कल०**—दिष्ट्या एवमपि नो भविष्यति । (दिट्ठिआ एव्वं[4] वि णो भविस्सदि ।)

**मक०**[5]—कथं संदेह एवात्र भवतः ।

**लव०**—श्रुतं प्रियसख्या । ( सुदं पिअसहीए[6] । )

**काम०**—वत्स मकरन्द भद्रे[7] लवङ्गिके इतः[8] प्रतिष्ठामहे ।

**मालती**—सखि त्वयापि गन्तव्यम् । (सहि तुए वि गन्दव्वं । )

**लव०**—( विहस्य । ) सांप्रतं खलु वयमत्रावशिष्यामहे । ( संपदं क्खु अह्मे एत्थ उवराम[9] । )

---

ङ्गाररसः समुद्भवति ।' कीदृशाः । ताम्बूली पर्णलता तासां समूहैः पिनद्धा वेष्टिता फलिनाः फलयुक्ता अत एवानताः क्रमुकवृक्षा येषु ते । सापेक्षत्वेऽपि गमकत्वात्समासः । कीदृशैः । गाढोत्कण्ठा यस्याः सा च कठोरा तृतीययौवनवयाः केरलदेशवधूस्तस्याः कपोलवदवपाण्डुरीषद्धूसरश्छदः पत्रं येषां तैः । ' रतिसंभोगे दक्षा प्रतिपक्षासूयिका गुणाढ्या च । अनिभृतगर्वितचेष्टा सा विज्ञेया तृतीया तु ' ॥ इति भरतः । अत एवोत्कण्ठाधिक्यम् । केरलदेशजत्वेन गौरत्वमुक्तम् । अतः पीतसंबन्धाच्छ्वेत ईषत्पाण्डुरत्वम् । यदाह-' सितपीतसमायोगादीषत्पाण्डुरिति स्मृतः ।' पिनद्धेति ' वष्टि भागुरिरल्लोपम् ' इत्यल्लोपे रूपम् । फलिन इति फलबर्हाभ्यामिनज्मत्वर्थीयः । तथा कक्कोलीफलस्य जग्ध्या भक्षणेन मुग्धा प्रीता ये विकिराः पक्षिविशेषास्तेषां व्याहार उक्तिर्येषु ते । ' कक्कोली बदरी कोली ' इत्यनेकार्थः । भूमिं नखैर्विलिख्य ये चरन्ति ते विकिराः । ' नगौकोवाजिविकिरविविष्किरपतत्रयः ।' इत्यमरः । अदो जग्धिः । ' व्याहार उक्तिर्लपितम् ' इत्यमरः । तथा प्रोङ्खिता वातेन चलिता मातुलुङ्गवृतिर्वेष्टनं येषु ते । तथा चैवंविधनानागुणवनगमनेन मनोरथसिद्धिस्ते भविष्यतीति भावः । मातुलुङ्गश्छोलङ्गवृक्षः । ' रुचको मातुलुङ्गकः ' इत्यमरः ॥ १९ ॥ **माधवः** । कल्याणान्तरावतंसा मकरन्दविवाहकल्याणभूषणा माधवविवाहसंपत्तिः । कलहंसकवाक्ये दिष्ट्येत्यादि । मकरन्दविवाहेनाप्यस्माकं प्रमोदः स्यादित्यर्थः । **कामन्दकी** । संभोगार्थं विजनकरणाय कर्तव्यमकरन्दविप्रलम्भार्थं च सर्वेषां निष्क्रमणमाह—**वत्स इत्यादि** । **मालती** । सखि त्वयापि गन्तव्यम् । एकाकिन्या मयात्र कथं स्थातव्यमिति भावः । **लवङ्गिका** । सांप्रतं

---

१ मद०न्दयोर्यावदागमनम्. २ कल्याणावतंसा. ३ भवतु. ४ इदं वि पिअ णो. ५ माध०. ६ तुए. ७ वत्से. ८ इत इतः. ९ तुव-अवस-रामो.

( इति निष्क्रान्ताः कामन्दकीलवङ्गिकामकरन्दाः ।

**माधवः**—अयमहमिदानीम्

**आमूलकण्टकितकोमलबाहुनाल-**
**मार्द्राङ्गुलीदलमनङ्गनिदाघतप्तः ।**
**अस्याः करेण करमाकलयामि कान्त-**
**मारक्तपङ्कजमिव द्विरदः सरस्याः ॥ २० ॥**

( इति निष्क्रान्ताः सर्वे । )

**इति चोरिका[1]विवाहो नाम षष्ठोऽङ्कः ।**

---

खलु वयमत्रावशिष्यामहे । यूयं सर्वे एव स्वार्थे चलिता इत्यर्थः । **आमूलेत्यादि ।** अस्या रम्यं हस्तं हस्तेन गृह्णामि । यथा सरस्या इषद्रक्तपद्मं मनोज्ञं हस्ती करेण स्थूलहस्तेन गृह्णाति तथेत्यर्थः । कोमलाङ्ग्याः कर ईषद्रक्त एवेति साम्यम् । कीदृशम् । आमूलं कक्षादेशपर्यन्तं कण्टकितो रोमाञ्चितः । कोमलो बाहुरेव नालं यस्य तम् । ' कण्टकः क्षुद्रशत्रौ च रोमाञ्चेऽपि च दृश्यते । ' इति विश्वः । आर्द्राङ्गुल्य एव दलानि पत्राणि यस्य तम् । रोमाञ्चितत्वार्द्रत्वे सात्विकभावात् । अहं कीदृशः । अनङ्ग एव ग्रीष्मस्तेन तप्तः । तथा च कामतापप्रशान्त्यर्थं करग्रहणमित्यर्थः । पद्मस्याप्युद्धृततया तस्य कण्टकितकोमलनालत्वमार्द्रपत्रत्वं च भवति । गजोऽपि ग्रीष्मतप्तः । पद्मपक्ष आमूलं कन्दपर्यन्तम् । तदनेनानन्तरकर्तव्यताध्यवसायस्य धैर्यमुक्तम् ॥ २० ॥

सूते स्म यं रत्नधरः पवित्रः पवित्ररूपा दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कः षष्ठोऽगमद्भव्यरसाधिवासः ॥

**इति षष्ठोऽङ्कः ।**

---

१ मालत्युपहारः, ०स्वयंवरः.

## सप्तमोऽङ्कः ।

( ततः प्रविशति बुद्धरक्षिता । )

**बुद्धरक्षिता**—अम्महे सुश्लिष्टमालतीनेपथ्यलक्ष्मीविप्रलब्धनन्दनकृतकरग्रहोऽमात्यभूरिवसुमन्दिरे भगवतीवचनसंविधानैः क्षेमेण गोपायितो मकरन्दः । अद्य [१]वयमपि नन्दनावासमुपगताः । ततो भगवती नन्दनमापृच्छ्य गता निजावसथम् । अयं च नववधूगृहप्रवेशविरचिताकालकौमुदीमहोत्सवप्रवृत्तिपर्याकुलाशेषपरिजनः प्रदोषोऽनुकूलयिष्यत्यद्य नो व्यवसितम् । सांप्रतं त्वरमाणकामः कामिनीं कामयितुं बहुशः सपादवन्दनमभ्यर्थ्य पुनरपि बलात्कारेणाभिद्रवन्मकरन्देन निष्ठुरं प्रतिहतो जामाता । [२]ततः स खल्वधिकवैलक्ष्यस्खलदक्षरो रोषनिर्भरदुःखितो मदप्रस्फुरन्नयनो न मे सांप्रतं त्वया कौमारबन्धक्या प्रयोजनमिति सशपथं प्रतिज्ञां कृत्वा वासभवनान्निर्गतः । तस्मादनेन प्रसङ्गेन

---

अधुना मालतीरूपधारिणा मकरन्देन कथं नन्दनविप्रलम्भो मदयन्तिकाहरणं च कृतं भवेदिति प्रबन्धाभिधानाय नियुक्तैव तत्र मयेत्यादिना प्रथमाङ्कसूचितबुद्धरक्षिताप्रवेशः ॥ **बुद्धरक्षिता** । अत्र माधवविवाहनिर्वाहाद्धर्षाश्चर्येऽम्महेशब्दः । सुश्लिष्टत्वं मकरन्दस्य गौरत्वाश्मश्रुलत्वादिना मालतीसाम्यात् । भगवतीति—भगवत्यैवालंकृत्य प्रहित इत्यर्थः । क्षेमेण कुशलेन । एतत्तु केनाप्यनुपलम्भात् । गोपायितो गुप्तीकृतः । आपृच्छ्य संवादं कृत्वा । तत्र नन्दनगृहं गच्छामीति तद्भवाननुमन्यतामिति संवादः । आपृच्छिः संवादार्थ इति शाब्दिकाः । अत एव 'आपृच्छस्व प्रियसखममुम्' इति मेघदूतादौ टीकाकृता तथैव विवृतमित्यवधेयम् । आवसथं गृहम् । कौमुद्याश्विनपूर्णिमाव्रतम् । यद्वा कार्तिक्यां चन्द्रमण्डलपूजा कौमुदीव्रतम् । तदुभयं च ग्रीष्मे प्रवृत्तमित्यकालकौमुदीत्युक्तम् । यद्वा जननयनानन्दकत्वेन कौमुदीव कौमुदीति रूपकम् । कौमुदी चन्द्रज्योत्स्ना यथाकालसंभवा संध्याकालीना वर्षर्तुभवा च जनानन्दाय तथेयमपीत्यर्थः । अः केशवस्तस्य कालो वर्षाकालः संध्याकालश्च । 'प्रदोषो रजनीमुखम्' इत्यमरः । व्यवसितं मदयन्तिकाविवाहरूपम् । अन्यकार्यव्यापृते जने तदप्रत्यूहं निर्वहेदिति भावः । त्वरमाणेति विलम्बासहकामावेश इत्यर्थः । तिरस्काराद्वैलक्ष्येण स्खलन्नक्षरैः सह स्वरो यस्य सः । रोषेण निर्भरं व्याप्तम् । खुलुङ्गितमिति पाठे खुलुङ्गितं मौनम् । खुलुङ्गितमाहुर्मुखसंकोचं च काव्यविदः । इत्यभिधानात् । कौमारबन्धकी वेश्या । माधवानुरक्तत्वात् । तदत्र नन्दनस्य विवाहदिन एव बलादभिद्रवणेनाधार्मिकत्वं कामशास्त्राविज्ञत्वं

---

१ च वयमिमं नन्दनावसथमु० ( टी. ). २ स चाधिकतरवैलक्ष्यस्खलदक्षरस्वरो रोषनिर्भर संज्ञाष्कितारुदितप्रस्फुरद्वदनः ( टी. ).

मदयन्तिकामानीय मकरन्देन सह संयोजयिष्यामि । ( अह्महे सुसिलिट्ठमालदीणेवत्थलच्छीविप्पलद्धनन्दनकिदं[1]करग्गहो अमच्चभूरिवसुमन्दिरे भअवदी[2]वअणसंविहाणेण खेमेण गोवाइदो मअरन्दो । अज्ज अह्मे वि णन्दणावासं उवगदा । तदो भअवदी णन्दणं आपुच्छिअ गदा[3] णिआवसहं । अ[4]अं अ णववहूघरप्पवेसविरइदाकालकोमुदीमहूसवप्पे[5]उत्तिपज्जाउलासेसपरिअणो पदोसो अणुऊलइस्सइ अज्ज णो ववसिदं । संपदं तु[6]वरन्तकामो कामिणीं कामेदुं बहुसो सपादव[7]न्दणं अब्भत्थिअ पुणो वि बलामोडिअ अभिद्दवन्तो मअरन्देण निट्ठुरं पडिहदो जामादा । तदो सो क्खु अधिअवेल्लक्खर[8]खलन्तअवखरो रोसणि[9]ब्भरदुक्खिदो मदपप्फुरन्तणअणो ण मे संपदं तु[10]ए कौमारबन्धई[11]ए पओअणं त्ति ससवहं पइण्णं काउण वासभवणादो णिग्गदो । ता एदेण पसङ्गेण मदअन्तिअं आणीअ मअरन्देण सह संजोजइस्सं । ) ( इति निष्क्रान्ता । )

### प्रवेशकः ।

( ततः प्रविशति शय्यागतो मालतीवेशो मकरन्दो लवङ्गिका च । )

**मकरन्दः**—लवङ्गिके अपि नाम बुद्धरक्षितासंक्रान्ता भगवतीनीतिर्विजेष्यते ।

**लव०**—कः संदेहोत्र महानुभावस्य । किं बहुना । यथैष मञ्जीरशब्दः श्रूयते तथा जानामि तेन व्यपदेशेनानीता बुद्धरक्षितया मदयन्तिकेति । तदुत्तरीयापवारितः प्रसुप्तलक्षणस्तिष्ठ । ( को संदेहो एत्थ महाणुभाअ[12]स्स । किं बहुणा । जहा एसो मञ्जीरसद्दो सुणी[13]अदि तहा ज्जाणामि तेण ववदेसेण आणीदा बुद्धरक्खिदाए मदअन्तिआ त्ति । त पसु[14]त्तलक्खणो चिट्ठ । )

---

च दर्शितम् । यदाह—'सुकुमाराः पुरुषाणामाराध्या योषितः सदा । अनिच्छया प्रवृत्तश्चेच्छृङ्गारं नाशयेद्रसम्'। बन्धकीति परुषवाक्येन दुराचारत्वमप्यस्य । यदाह–'ताडनं बन्धनं वा यो न विमृश्य समाचरेत् । ब्रूते परुषवाक्यं च दुराचारः स उच्यते ॥' प्रसङ्गेन संविधानकेन । एतेन सूचनात्प्रवेशः । **शय्यागत इति** । सुप्तस्य प्रवेशो भरतनिषिद्ध इति शय्यागत इत्युक्तम् । **मकरन्दः** । भगवतीनीतेरव्यभिचारित्वेऽप्याश्रयभेदात्तदाशङ्क्याह–अपीति संभावनायाम् । अव्यभिचारित्वमेवाह । लवङ्गिकावाक्ये । कः संदेहोऽत्रमहानुभावस्य । मदयन्तिकापरिणयोऽवश्यं भावीति भावः । अत्र किंबहुना भणितेनेत्यर्थः । मञ्जीरो नूपुरम् । व्यपदेशेन मालतीप्रबोधच्छले-

---

१ णन्दणकर. २ भअवदीए संविहाणेन. ३ गदा आवसहं. ४ अण्णं. ५ प्पमत्त. ६ क्खु, अ, तुव. ७ पडणं. ८ वेल्लक्खरोसक्ख. ९ सरोस; ओरुइदणअणपप्फुरन्तवअणो ( अवरुदितनयनप्रस्फुरद्वदनः ). १० इमाए. ११ वड्डुईए ( वर्धक्या ). १२ महाभाअस्स. १३ एतन्नास्ति क्वचित्. १४ सुत्त.

( मकरन्दस्तथा करोति । )

( ततः प्रविशति मदयन्तिका बुद्धरक्षिता च । )

**मद०**—सखि सत्यमेव परिकोपितो मम भ्राता मालत्या । ( सहि सच्चं जेव्व परिकोविदो मे भादा मालदीए । )

**बुद्ध०**—अथ किम् । ( अध इं । )

**मद०**—अहो अत्याहितम् । तदेहि वामशीलां मालतीं निर्भर्त्सयावः । ( अहो अच्चाहिदं । ता एहि वामसीलं मालदीं णिब्भच्छेह्म । ) ( इति परिक्रामतः । )

**बुद्ध०**—इदं वासभवनद्वारम् । ( इदं वासभवणंदुवारं । ) ( उभे प्रविशतः । )

**मद०**—सखि लवङ्गिके ज्ञायते प्रसुप्ता ते प्रियसखीति । ( सहि लवङ्गिए जाणीअदि पसुत्ता दे पिअसही त्ति । )

**लव०**—सखि एहि मैनां प्रतिबोधय । एषा हि चिरं दुर्मनायमानेदानी-मेवेषन्मन्युमुज्झित्वा प्रसुप्तेति । अतः शनैरिहैव शयनीयोपान्त उपविश । ( सहि एहि मा णं पडिबोधेहि । एसा हि चिरं दुम्मणाअन्दी दाणिं जेव्व ईस मण्णुं उज्झिअ पसुत्तेत्ति । अदो सणिअं इध जेव्व सअणुपन्ते उवविस । )

**मद०**—( तथा कृत्वा । ) सखि दुर्मनायत इयं वामशीला । ( सहि दुम्मणाअदि इअं वामसीला । )

---

न । उत्तरीयेति उपरिवासःपिहिताङ्ग इत्यर्थः । इह नर्मगर्भो कैशिकीवृत्तिः । यदाह—' कार्यकारणतो यत्र नायको गोपयेत्तनुम् । नर्मगर्भः स कथितो नाट्यवेदिभिरुत्तमः ॥ ' **मदयन्तिका** । अत्रात्याहितमतिक्रमः । **निर्भर्त्सयाव इति** । त्रिरात्रं नायकं ज्ञात्वा वाचा हीनं तु कन्यका । पश्यन्ती स्तम्भवच्छन्नं निर्विद्येत ततः परम् ' ॥ इति भरतानुरोधेन कन्याविस्रम्भपरे मे भ्रातरि व्यर्थमियं रुष्टेति निर्भर्त्सनमस्या इति भावः । बुद्धरक्षितावाक्ये—एतद्वासभवनद्वारम् । तत्प्रविशेति शेषः । **लवङ्गिका** । अत्र कथमस्माद्दुराचारात्स्थास्यामीति चिन्तया दौर्मनस्यान्निद्रा । यदाह—' आलस्यदौर्मनस्यक्लेशश्रमचिन्तनस्वभावेभ्यः । रात्रौ जागरणादपि निद्रा मनुजे दिवापि संभवति ' ॥ तथा च दुःखहानाय निद्रयापि क्षणं नय-

---

१ ०भवणं. २ जदो एसा. ३ मण्णे पसुत्तेति. ४ सअणद्धम्भि ( शयनार्धे ); ०णुद्धन्ते (शयनोर्ध्वान्ते). ५ कहं इअं.

**लव०**—कथं नाम नववधूविस्रम्भणोपायज्ञातारं मनोहरं विदग्धमधुरभाषिणं सस्नेहमरोषणं च ते भ्रातरं भर्तारं समासाद्य दुर्मनायिष्यते मे प्रियसखी। ( कहं णाम णववहूविस्सम्भणोवाअजाणुअं लडहं विअड्ढमहुरभासिणं ससिणेहं अ दे भादरं भत्तारं समासादिअ दुम्मणाइस्सदि मे पिअसही। )

**मद०**—बुद्धरक्षिते पश्य विप्रतीपं वयमप्युपालभ्यामहे। ( बुद्धरक्खिदे पेक्ख विप्पदीअं अह्मे वि उवालम्भीआमो। )

**बुद्ध०**—विप्रतीपं न वा विप्रतीपम्। ( विप्पदीअं ण वा विप्पदीअं। )

**मद०**—कथमिव। ( कधं विअ। )

**बुद्ध०**—यत्तावच्चरणपतितोपि भर्ता न बहुमानितोत्र लज्जादोषेणैष जन उपालम्भनीयः। यदपि प्रियसखि नववधूविरुद्धरभसोपक्रमस्खलनवैलक्ष्यविच्छर्दितमहानुभावत्वस्य भ्रातुस्ते वाचागतं किमप्यपरिस्थानं तेन

---

स्त्रियमित्याशयः। **लवङ्गिका**। अत्र विस्रम्भणं विश्वासमुत्पाद्य वशीकरणम्। लडहं मनोहरम्। विदग्धं कलाभिज्ञम्। नववधूविस्रम्भणोपायस्ताम्बूलादिदानम्। यदाह—'बाला ताम्बूलमालाफलरससुरसाहारसंमानहार्या' इत्यादिकः सुप्रसिद्ध एव। प्रकृते तूपालम्भपरत्वाद्विपरीतार्थकत्वमिति भावः। **मदयन्तिका**। विप्रतीपं विपरीतम्। पादपतितनन्दनाननुवर्तनान्मालत्यैवोपालभ्या तदकरणाद्विपरीतत्वमिति भावः। पादपतनेऽनुवृत्तौ भरतः—'व्रीडायुक्तापि या योषिदतिरुष्टापि या भवेत्। पादे पतन्तं पुरुषमनुवर्तेत सर्वदा॥' **बुद्धरक्षितावाक्ये**। विप्रतीपं न वा विप्रतीपम्। तच्चित्तानुवर्तनेन स्वीकृतयुक्त्या निराकरणेन न वैपरीत्यमिति भावः। **बुद्धरक्षिता**। स्वाभिप्रायं गोपयितुं साधारणोक्त्या स्ववचो वदति—अत्रेयमिति वक्तव्ये जन इत्यभिधानं मालतीमकरन्दसाधारण्यार्थम्। नववध्वा लज्जयातिक्रमेण दोषः। यदाह—'नवपरिणीता योषिद्यत्नादपनीय साध्वसं सद्यः। विविधविनोदकथाभिर्विश्वासं नीयते सरसैः॥' रभसोपक्रमः सहसा प्रवृत्तिः स च विरुद्धः। यदाह—'सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता। साध्वसं त्रासमुद्वेगं सद्यो द्वेषं च विन्दति॥ सा प्रीतियोगमप्राप्य तेनोद्वेगेन दुःखिता। पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा॥' स्खलनमुपक्रान्तानिर्वाहः। विच्छर्दितं विशीर्णम्। अपरिस्थानकमपरिस्थितिः। अधैर्यमिति यावत्। यूयमुपालभ्या इति मदयन्तिकां प्रति वचनम्। भ्रातृपक्षप्रवेशात्। अह्मे इति पाठे बुद्धरक्षिता मदयन्तिकया सह

---

१ विअद्धं. २ सही ण दुम्मणा०. ३ पश्य पश्य...वयमेव [टी०]. ४ विप्पदीपं उवालद्धं ह्म ( उपालब्धाः स्मः। ).

यूयमिति । किंच । ( संस्कृतमाश्रित्य । ) 'कुसुमस[1]धर्माणो हि योषितः सुकुमारोपक्रमाः । तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सद्यः संप्रयोगविद्वेषिण्यो भवन्ति । ' एवं किल कामसूत्रकारा आमनन्ति । ( जं दाव चलणपडिदो वि भत्ता ण बहुमाणिदो एत्थ लज्जादोसेण एसो जणो उवालम्भणिज्जो । जं वि पिअसहि णवबहूविरुद्धसाहसोपक्कमक्खलणवेलक्खविच्छडिदमहाणुहावत्तणस्स भादुणो दे वाआगअं किं वि अपरिट्ठाणं तेण तुह्मोत्ति । एवं किल कामसुत्तआरा आमणन्ति । )

लव०—( सास्रम् । ) गृहे गृहे पुरुषाः कुलकन्यकाः समुद्वहन्ति । न खलु कोऽपि लज्जापराधीनमनपराद्धं मुग्धसुकुमारस्वभावं कुलकुमारीजनं प्रभवामीति वाचानलेन प्रज्वालयति । एते खलु ते हृदयशल्यनिक्षेपा आमरणं संस्मर्यमाणदुःसहाः पतिगृहनिवासवैराग्यकारिणो महापरिभवा येषां कृते स्त्रीजन्मलाभं जुगुप्सन्ते बान्धवाः । ( घरे घरे पुरुसा कुलकण्णकाओ समुव्वहन्दि । ण क्खु को वि लज्जापराधीणं अणवरद्धं मुद्धलडहसहावं कुलकुमारीअणं पहवामि त्ति वाआणलेण पज्जालेदि । एदे क्खु दे हिअअसल्लणिक्खेवा आमरणं संभरिज्जन्तदूसहा पदिघरणिवासवेरग्गकारिणो महापरिहवा जाणं किदे इत्थिआजम्मलाहं जुगुच्छन्ति बान्धवा । )

मद०—बुद्धरक्षिते अतिदूना प्रियसखी लवङ्गिका । अतिमहान्कोऽपि मे भ्रात्रा वाचापराधोस्याः कृतः । ( बुद्धरक्खिदे अदिदूमिदा पिअसही लवङ्गिआ । अतिमहान्तो को वि मे भादुणा वाआवराहो से किदो । )

बुद्ध०—अथ किम् । श्रुतमस्माभिर्यथा न मम त्वया सांप्रतं कौमारबन्धक्या प्रयोजनमिति । ( अध इं । सुदं [11]अह्मेहिं जधा ण मम तुए संपदं कोमारबन्धईए पओअणं त्ति । )

स्वाभेदं मन्यमाना वयमित्याह । शिल्पकारित्वात्संस्कृताश्रयणम् ॥ यदाह—' दिव्याया गणिकायाश्च शिल्पकार्यास्तथैव च । विदग्धायाः स्त्रिया भाषां संस्कृतेनापि योजयेत् ॥ ' यद्वा कामसूत्रानुकरणात्संस्कृतभाषा । सधर्माणस्तुल्याः । उपक्रम आरम्भः । प्रसभं हठात् । संप्रयोगः सुरतम् । किल प्रसिद्धौ । कामसूत्रकारा मन्त्रयन्ते । **लवङ्गिका** । अत्र निक्षेप आरोपणम् । जुगुप्सन्ते निन्दन्ति । दुःशीला कन्या मा जायतामिति भावः । **मदयन्तिका** ।

१ सम. २ ताश्चा. ३ अहिणव. ४ साहसो. ५ अप्पडिट्ठाणं ( अप्रतिष्ठानं ). ६ तेण जाणीआदि किआवराहा उवालम्भणिज्जा अम्हेत्ति. ७ अग्गकाओ; उव्वहन्ति. ८ लज्जापसाहणं ( प्रसाधनं ). ९ अत्युपतापिता. १० अइ सहि बु०. ११ ज्जेव्व अह्मेहिं ण मे संपदं इमाए कोमारबद्धइए पओअणं त्ति ससपहं पइण्णं काऊण वासभवणादो णिग्गदो.

**मद०**—( कर्णौ पिधाय । ) अहो अतिक्रमः । अहो प्रमादः । सखि लवङ्गिके असमर्थास्मि ते मुखमपि सांप्रतं दर्शयितुम् । तथापि प्रभवामीति किमपि मन्त्रयिष्ये । ( अहो अदिक्कमो । अहो पमादो । सहि लवङ्गिए असमत्थह्मि[1] दे मुहंपि संपदं [2]दंसिदुं तधा वि पहवामि त्ति किं वि मन्तइस्सं । )

**लव०**—स्वाधीनस्तेऽयं जनः । ( साहीणो दे अअं जणो । )

**मद०**—तिष्ठत्वेव मम भ्रातुर्दुःशीलतापरिस्थानं च । युष्माभिरपीदृशोपि सांप्रतं यथाचित्तमनुवर्तनीयो येन भर्तैष इति । अन्यच्च यूयमस्यानभिजाताक्षराधिक्षेपोपालम्भदू[3]षणस्य यन्मूलं तन्न जानीथ । ( चिट्ठदु ज्जेव्व मह भादुणो दुःसीलदा अवरिट्ठाणं अ । तुह्मेहिं वि ईदिसो वि[4] संपदं जधाचित्तं अणुवट्टणीओ जेण भत्ता एसो त्ति । अण्णं अ तुह्मे इमस्स अणहिंजादक्खराहिक्खेवोवा[5]लम्भदूसणस्स जं मूलं तं ण जाणह । )

**लव०**—कथं वा[6]चामीन्त्रतमपि नाम न जानीमः । ( [7]कधं वाआमन्दिदं वि णाम ण जाणीमो । )

**मद०**—यदिदानीं तस्मिन्महानुभावे माधवे किमपि किल मालत्यास्तारामैत्रकमासीत्तत्र सर्वलोकस्यातिभूमिं गतः प्रवादः । तत्खल्वेतद्विजृम्भते । तत्प्रियसखि यथैष भर्तुरपक्षाभिनिवेशो निरवशेषं हृदयादुद्ध्रियते तथा कुरुत । अन्यथा महादोष इति ज्ञातं भवतु । निष्कम्पदारुणाः कन्यका दुन्वन्ति हृदयं मनुष्याणामीदृशादुरभिष-

कथमन्यथात्युद्विग्नेयमिति भावः । **मदयन्तिका** । अत्र प्रभवामीति वरभगिन्यपि त्वयि प्रणयवशादाश्वासवत्यहमिति भावः । **लवङ्गिका** । अत्र यथेच्छसि तथा ब्रूहीत्यर्थः । **मदयन्तिका** । अत्रेदृशोऽपि दुःशीलोऽपि । यथाचित्तं चित्तानतिक्रमेण । **भर्तेति** । 'कोऽपि देवः कुलस्त्रीणां पतिरेव पतन्नपि ।' इतिवचनात् स्त्रीषु भर्ता प्रभवतीति भावः । **न चेति** । न च न जानीथ । किंतु जानीथ एवेत्यर्थः । **मदयन्तिका** । अत्र किल प्रसिद्धौ । तारामैत्रकं प्रेम । तत्र माधवे । अतिभूमिमतिदूरम् । **तत्खल्विति** । माधवानुरक्ता मालतीत्यस्यानुशय इत्याशयः । विजृम्भते प्रकाशते । अपक्षे मालती माधवपरेत्यसत्पक्षे । अभिनिवेशो रोषः । निरवशेषमिति क्रियाविशेषणम् । दोष इत्यस्या दौर्भाग्यं त्यागो वा नित्यशङ्कानुकुलतया स्यादिति भावः । **निष्कम्पेति** । सततपरपुरुषालोकनेन लज्जाहीनतया दा-

१ अह्महे. २ दट्ठुं. ३ दौर्मनस्यस्य ( टी.) ४ वि एसो. ५ वालम्भस्स. ६ वाप्मतं. ७ कहं अह्मे असन्तं जाणीमो. ८ उपतापयन्ति.

ङ्गादिति । मैनां भणिष्यथ मदयन्तिकया कथितमिति । ( जं दाणिं तस्सिं महाणुहावे माहवे किं वि किल मालदीए त्तारामेत्तअं आसी तस्सिं सव्वलोअस्स अदिभूमिं गदो पवादो । तं क्खु एदं विअम्भदि । ता पिअसहि जधा एसो भत्तुणो अवक्खाहिणिवेसो णिरवसेसं हिअआदो उद्धरीअदि तधा करेध । अण्णहा महादोसो त्ति जाणीदं होद । णिक्कम्पदारुणा अम्मकाओ दूमावेन्ति हिअअं मणुस्साणं ईरिसादो दुरहिसंगादो त्ति । मा णं भणिस्सध मदअन्तिआए कधिदं त्ति । )

लव०—अयि असंबद्धलोकप्रवादमोहिते अपेहि । न त्वया सह जल्पिष्यामि । ( अई असंबद्धलोअप्पवादमोहिदे अवेहि । ण तुए सह जप्पिस्सं । )

मद०—सखि प्रसीद प्रसीद । अथवा न यूयमस्फुटं भणितास्तिष्ठथ । किं च वयं सत्यमेव माधवैकमयजीवलोकां मालतीं जानीमः । केन वा कठोरकेतकीगर्भविभ्रमावयवदौर्बल्यनिर्वाहितसुन्दरत्वविशेषं माधवस्वहस्तनिर्मितबकुलावलीविरचितकण्ठावलम्बमात्रसंधारितजीवनं मालत्या माधवस्य च प्रभातचन्द्रमण्डलापाण्डुरपरिक्षामरमणीयदर्शनं न विभावितं शरीरम् । किं च तद्दिवसे कुसुमाकरोद्यानपर्यन्तरथ्यामुखसमागमे सविभ्रमोल्लसितकौतूहलोत्फुल्लप्रसरन्नयनोत्पलबहलविलासमसृणसंचारतारकाविराजमानविभ्रमा अनङ्गनाट्याचार्यसर्वाकारोपदेशनिर्मितवैदग्ध्यमुग्धमधुरास्त्वयापि न निरूपिता अनयोर्दृष्टिसंभेदाः । किं च मम भ्रातुर्दानवृत्तान्तं श्रुत्वा तत्क्षणो-

---

रुणत्वमत एवेयं कुलटा न वेति परेषां संदेह इति भावः । **लवङ्गिका** । अत्रापेहि दूरं गच्छ । **मदयन्तिका** । अत्र न यूयमिति त्वदस्फुटवादे मेऽवसाद इत्यर्थः । न खलु न जानीमः । अपि तु जानीम एव । तथा च त्वमपह्नवं किंकरोषीत्यर्थः । कठोरः परिणतो जातपाण्डिमेत्यर्थः । यद्वा अकठोरा बाला केतकीत्यर्थः । तादृशी सातिपाण्डुरेव भवति । न विभावितं न ज्ञातम् । अपि तु सर्वैरेव ज्ञातमित्यर्थः । तत्किमपह्नवं करोषीति भावः । विभ्रमो विलासः । स च स्त्रियां यथा—'यानस्थानासनादीनां नेत्रवक्त्रादिकर्मणाम् । उत्पद्यते विशेषो यः स विलास इति स्मृतः ॥' पुरुषे यथा—मन्दसंचारिणी दृष्टिर्गतिश्च वृषभायिता । स्मृतिपूर्वस्तथालापो विलासः कथ्यते यथा ॥ किं न त्वया निरूपिता येनापह्नुष

---

१ वाआमेत्त. २ सा एसो. ३ उवेक्खा. ४ करेहि. ५ महन्तो पमादो ६ दारुणासु कुलकण्णकासु...दूमावेदि. ७ अइ असावधाणे. ८ किंवि मन्तइस्सं; मन्तिदव्वं. ९ न खलु न जा०. १० नृत्यायित.

च्छलितगम्भीरावेगव्यतिकरम्लायमानदेहशोभयोरुद्वर्तमानमूलबन्धनमिव न लक्षितं हृदयम् । किं चैतदप्यपरं स्मृतं मया । ( सहि पसीद पसीद । अहवा ण तुह्मे अफुडं भणिदाओ चिट्ठध । किं अ अह्मे सच्चं जेव्व माहवेक्कमअजीअलोअं मालदिं जाणीमो । केण वा कठोरकेदईगब्भविब्भमावअवदोब्बल्लणिव्वहिदंसुन्दरत्तणविसेसं माहवसहत्थणिम्मविदबउलावलीविरइदकण्ठावलम्बमेत्तसंधारिदजीवणं मालदीए माहवस्स अ पभातचन्दमण्डलापाण्डुरपरिक्खामरमणीअदंसणं ण विभाविदं सरीरं । किं अ तहिंअसे कुसुमाअरुज्जाणपेरन्तरच्छामुहसमागमे सविब्भमुल्लसिदकोदूहलुप्फुल्लपसरन्तणअणुप्पलबहलविलासमसिणसंचारचारुतारआविराअन्तविब्भमा अणङ्गणट्टाआरिअसव्वाआरोवदेसणिम्मविदविअद्धमुद्धमहुरा तुए वि ण णिरूविदा इमाणं दिट्ठिसंभेदा । किं अ मम भादुणो दाणवुत्तन्दं सुणिअ तक्खणुच्छलिदगम्भीरावेअव्वइअरमिलाअन्तदेहसोहाणं उव्वत्तमाणमूलबन्धणं विअ ण लक्खिअं हिअअं । किं अ । एदं अवरं वि सुमरिदं मए । )

**लव०**—किमिदानीमपरम् । किं दाणिं अवरं ।)

**मद०**—यत्खलु मम जीवितप्रदायिनस्तस्य महानुभावस्य चेतनाप्रतिलम्भप्रियनिवेदिकाया मालत्या भगवतीविदग्धवचनोपन्यासबोधितेन हृदयं जीवितं च माधवेन पारितोषिकत्वेन स्वयंग्राहसाहसे नियुक्तम् । अथ च लवङ्गिके तत्र त्वयैव भणितं प्रतीष्टः खलु नः प्रियसख्या अयं प्रसाद इति । ( जं क्खु मह जीविदप्पदाइणो तस्स महाणुहावस्स चेदणापडिलम्भपिअणिवेदिआए मालदीए भअवदीविअद्धवअणोवण्णासबोधिदेण हिअअं जीविदं अ माहवेण पारिदोसिअत्तणेण सअंगाहसाहसे णिउत्तं । अह अ लवङ्गिए तहिं तुए जेव्व भणिदं पडिच्छिदो क्खु णो पिअसहीए अअं पसादो त्ति । )

---

इत्यर्थः । आवेगोऽप्राप्तिदुःखम् । अङ्गारितं सुतप्तम् । उद्वर्तमानमुत्पतत् । आवेगोऽयमिष्टानाप्तिजः । यदाह—' आवेगश्च भवेत्पुंसामिष्टानावाप्तिसंभवात् । ' **लवङ्गिका** । किमिदानीमपरम् । त्वया स्मृतमिति शेषः । **मदयन्तिका** । अत्र चेतनाप्राप्तिरूपमेव प्रियम् । पारितोषिकं यद्वयालव्रणितेत्यादिश्लोके दर्शितम् । नि-

---

१ जीविदं. २ केदअ. ३ णिवाट्टिद. ४ वलम्बणमेत्तसंजीवणं. ५ तस्सिं. ६ परिसरुव्वेल्लमाणसविलास. ७ मसिणसिणिद्धसंचरण. ८ तारआविअम्भमाणाणङ्गसिङ्गाराआरिअ. ९ मणहरा. १० णुव्वत्तगम्भीरुव्वेअवइअरन्धआरिअ; व्वइअरंगारिदमि०. ( व्यतिकरांगारितम्ला० टी.). ११ उक्खण्डिअमाण. १२ मूलं विअ. १३ चोदिदेण. १४ सअंगाहे. १५ तुए क्खु एव्वं.

**लव०**—सखि कतमः पुनः स महाभाग इति विस्मृतं मया । ( सहि कदमो उण सो महाभाओ त्ति विसुमरिदं मए । )

**मद०**—सखि स्मर स्मर येन तस्मिन्दिवसे विकटदुष्टश्वापदापदेशकालगोचरं गताशरणा तत्कालसंनिहितेन जीवितप्रदायिना पीवरभुजस्तम्भेन निष्कारणबान्धवेन सकलभुवनैकसारनिजदेहोपहारसाहसं कृत्वा परिरक्षितास्मि । येन च दृढदंष्ट्राविदारितविकटमांसलोत्तानपरिणाहिवक्षःस्थलेन जरठजर्जरितजपापीडहारिणा करुणैकमनसा मम कृते विसोढा अतिदुष्टशार्दूलनखशिखावज्रप्रहारा मारितश्च स दुष्टश्वापदमहाराक्षस इति । ( सहि सुमर सुमर जेण तस्सिं दिअसे विअडदुट्ठसावदावदेसकालगोअरं गदा असरणा तक्कालसण्णिहिदेण जीविदप्पदाइणा पीअरभुअत्थम्भेण णिक्कारणबन्धवेण सअलभुवणेक्कसारणिअदेहोवहारसाहसं कदुअ परिरक्खिदह्मि । जेण अ दिढदाढाविदारिअविअडमंसुलुत्ताणपरिणाहिवक्खत्थलेण जरठजज्झरिदजवापीडहारिणा करुणेक्कमणेण मम किदे विसहिदा अतिदुट्ठसद्दूलणहसिहावज्जप्पहारा मारिदो अ सो दुट्ठसावदमहारक्खसो त्ति । )

**लव०**—हुं मकरन्दः । ( हुं मअरन्दो । )

**मद०**—( सानन्दम् । ) प्रियसखि किं किं भणसि । ( पिअसहि किं किं भणासि । )

---

युक्तं दत्तम् । तच्चितानुरागं विना नोपपन्नमिति भावः । **लव०**—अर्थान्तरोक्तिप्रसङ्गेन प्रकृतापह्नवार्थमाह—आं सखि इति । आमिति पूर्वस्मरणार्थः । विस्मृतमिति । ज्ञात्वापि तत्कथाकथनायायं प्रश्न इति भावः । **मदयन्तिका** । अत्र स्मर इति मकरन्दमिति भावः । विकृष्टो रुष्टः । श्वापद इति व्याघ्रव्याजेन यम इत्यर्थः । अवलम्नसंनिहितेति पाठेऽवलम्नं कण्ठः । संभावितः ख्यातः । कर्मधारयोऽत्र । विकटं विशालम् । मांसलं स्थूलम् । उत्तानमुच्छ्रितम् । जरठं कठिनं जर्जरितं विध्वंसितं यदोड्रपुष्पमुकटं तदिव हरति । कर्तर्युपमान इति णिनिः । हरणमिह समीकरणम् । रक्ताक्तदेहतया साम्यम् । शिखा अग्रम् । **लवङ्गिका** । अत्र हुं वितर्के । 'हुं वितर्के विस्मये' इत्यमरः । **मदयन्तिका** । अत्राह्लादातिशयात्पुनः पुनः प्रश्नः । प्रियनाममधुपानेऽपि न

---

१ आं सखि...पुनरसौ ( टी. ). २ महाणुहावो. ३ विकृष्ट ( टी. ). ४ स्तम्भसंभावितनिष्कारण०. ५ स्थललाञ्छनेन ( टी. ). ६ सावदाविणिवादगो०. ७ सुलग्ग. ८ म्भेण संभाविदा. ९ दिढविअडमंसु०. १० वक्खत्थललञ्छणेण; वच्छत्थललञ्छणजज्झरिद. ११ धारिणा. १२ करुणाधणेण; णाअरेण; करुणम०. १३ किदे वि णिमज्जन्तसअलणहणिआअवज्जपञ्जरप्पहारे ( निमज्जत्सकलनखनिकायवज्रपञ्जरप्रहारः ).

**लव०**—ननु भणामि मकरन्द इति । ( णं भणामि मअरन्दो त्ति ) ( सास्मितं शरीरमस्याः स्पृशन्ती संस्कृतमाश्रित्य । )

**वयं तथा नाम यथात्थ किं वदा-**
**म्ययं त्वकस्माद्विकलः कथान्तरे ।**
**कदम्बगोलाकृतिमाश्रितः कथं**
**विशुद्धमुग्धः कुलकन्यकाजनः ॥ १ ॥**

**मद०**—( सलज्जम् । ) सखि किं मामुपहससि । ननु भणामि निर्वापयन्ति मां तादृशस्यात्मनिरपेक्षव्यवसायिनः कृतान्तकवलयमानजीवितबलात्कारप्रत्यानयनगुरूकोपकारिणो जनस्य संकथासु नामग्रहणस्मरणानि । तथा च स त्वयापि गाढप्रहावेदनारम्भविस्मारितशरीरसंगलितस्वेदसलिलोत्पीडो मोहमुकुलायमाननेत्रनीलोत्पलयुगलो भूमिविलग्नासिलताविष्टम्भधैर्यधारितशरीरभारः प्रत्यक्षीकृत एव मदयन्तिकानिमित्तमात्रविच्छर्दितमहामहार्घजीवलोको महाभाग इति । ( स्वेदादीन्विकारान्नाटयति । )

( सहि किं मं उवहससि । णं भणामि णिव्वावेअन्ति मं तारिसस्स अप्पणिरवेक्खव्ववसाइणो किदन्तकवलिज्जन्तजीविदबलामोडिअपच्चाणअणगुरुओवआरिणो जणस्स

---

तृप्तातोऽश्रुत्वेवाहेति भावः । **लवङ्गिका** । ननुशब्द आशयाविष्कारे । **वयमित्यादि** । यथात्वमात्थ तत्तथा । मालती माधवानुरक्तेति स्वीकृतमित्यर्थः । अहं किं नाम वदामीत्यभिनिवेशमात्रम् । अयं पुनः कुलकन्यकाजनः कथामध्ये कथमकस्मात्कदम्बगोलकाकारमाश्रितः बहलपुलकशालित्वात् । विकलो विह्वलः सन् । कीदृशः । विशुद्धो निष्कलङ्कः । कामाभिषङ्गदोषशून्य इति यावत् । मुग्धो रसानभिज्ञः । सर्वमिदं सोत्प्रासम् । अत एव वैदग्ध्यतया शिल्पकारिणीत्वेन संस्कृताश्रयणम् ॥ १ ॥ **मदयन्तिका** । अत्र उपहससीति नाहं मकरन्दानुरक्ततया हृष्टा किंतु तद्वीरत्वमभिनन्दामीति न हासस्थानमिति भावः । अत एव चित्तचोरिकयाह—**नन्विति** । एवं स्वहर्षस्यान्यथासिद्धिमुक्त्वा निजाङ्गसङ्गजं स्वेदादिकं मकरन्देऽन्यथयति—तथा चेति । विस्मारितशरीरेति मूर्च्छाकथनम् । संगलितो मिलितः । उत्पीडः पूरः । कन्दोट्टो नीलोत्पलम् । मोहेति मोहेन नेत्रमीलनं न तु मदङ्गसङ्गादिति भावः । यदाह—'व्यसनाभिघातभयपूर्ववैरस्मरणजो भवति मोहः ।' इति । प्रहारमूर्छने कथमयं भूमौ न पतितोऽत आह—भूमीति । विष्टम्भः संबन्धः । विच्छर्दितः परित्यक्तः । महामहार्घमतिदुर्लभम् । जीवलोको

---

१ सस्मितं. २ अहं. ३ च कस्मात्. ४ गुरुतरो० ( टी० ). ५ णिव्वावेदि...सुमरणं.

संकधासु णामग्गहणसुमरणाइं । तधा अ सो तुए वि गाढप्पहारवेअणारम्भविह्लारिदसरीरसंगालिदसेअसलिलुप्पीलो मोहमउलाअन्तणेत्तकन्दोट्टजुअलो भूमिविलग्गिदासिलदाविट्ठम्भधीरधारिअसरीरभारो पच्चक्खीकिदो एव्व मदअन्तिआणिमित्तमेत्ताविच्छादिअमहग्घजीवलोओ त्ति । )

**बुद्ध०**—( शरीरमस्याः स्पृशन्ती । ) व्यवसितं प्रियसख्याः शरीरेण । ( विवँसिदं पिअसहीए सरीरेण । )

**मद०**—( सलज्जम् । ) प्रियसखि अपेहि । उद्भिन्नास्मि सहवासिन्या विस्रम्भेण । ( पिअसहि अवेहि । उब्भिण्णह्मि सहवासिणीएँ वीसम्भेण । )

**लव०**—सखि मदयन्तिके वयमपि ज्ञातव्यं जानीमः । तत्प्रसीद । विरम व्यपदेशात् । एहि विस्रम्भगर्भकथाबन्धसदृशं सुखं तिष्ठामः । ( सहि मदअन्तिए अह्मे वि जणिदव्वं जाणीमो । ता पसीद । विरम व्यवदेसादो । एहि विस्सम्भगब्भकहाबन्धसरिसं सुहं चिट्ठह्म । )

**बुद्ध०**—सखि शोभनं लवङ्गिका भणति । ( सहि सोहणं लवङ्गिआ भणादि । )

**मद०**—विधेयास्मि सांप्रतं प्रियसख्योः । ( विधेअह्मि संपदं पिअसहीणं । )

**लव०**—यद्येवं तत्कथय कथं नु ते कालो गच्छतीति । ( जइ एव्वं ता कधेहि कहं णु दे कालो गच्छदि त्ति । )

---

मर्त्यभुवनम् । प्रियालिङ्गनस्मरणादिना स्वेदादिकम् । स्वेदादीनित्यनेन किलकिंचितभावाविष्करणम् यदाह—'यदन्तर्निहितस्याङ्गैः सव्यापारैर्मनोभुवः । सव्रीडाविष्कृतिः स्त्रीणां तदाहुः किलकिंचितम् ॥' अत्र स्वेदादिमता तव शरीरेण मकरन्दसंभोगोऽभिलषित इत्यर्थः । **मदयन्तिका** । अत्र सहवासिन्याः सख्याः । नाहं कामजस्वेदादिनोद्भिन्ना किं तु त्वद्विस्रम्भकथयेति भावः । अभिण्णह्मीति पाठेऽभिज्ञातास्मीत्यर्थः । **लव०** । अत्र जानीम एवेति कामन्दक्यादिद्वारा तव मकरन्दस्य चेष्टितं ज्ञातमेव । तत्कथमपह्नव इति भावः । व्यपदेशाच्छलात् । सदृशमिति मकरन्दे स्नेहानुबन्धमपि कथयेत्याशयः । उभयमपि क्रियाविशेषणम् ॥ **बुद्धरक्षिता** । अत्र शोभनं कथयितुमर्हसीत्यर्थः । **लवङ्गिका** । अत्र मकरन्दवियोगेन कथं वर्ते-

---

१ संकहामित्तस्य० णं सुमरणं अ. २ गाढगुरुणह ( नख ). ३ विह्वलाविअ ( विह्वलित ). ४ लुग्गमो. ५ विगलिदासिअट्ठि ( विगलितासियष्टि ). ६ विच्छादिअमहग्घजीविदो. ७ अस्सत्थसरीरे किं वाआ । दंसिदं सरीरेण मअरन्दसमाअमोच्छुक्कं ( अस्वस्थशरीरे किं वाचा । दर्शितं शरीरेण मकरन्दसमागमौत्सुक्यम् । ). ८ आयि विसंवादसीले प्पिअ०. ९ णीए मालदीए; विस्रं० विस्रंभतया ( टी. ). १० पबन्धसुरसं. ११ ०आए भणिदं. १२ ०सहीओ.

**मद०**—निशामय प्रियसखि। मम बुद्धरक्षितापक्षपातप्रत्ययेन प्रथममेव तस्मिञ्जने भृतोद्वृत्त[1]कौतूहलोत्कण्ठामनोरथं हृदयमासीत्। ततो विधिनियोगानिर्वृत्तदर्शना भूत्वा दुर्वारदारुणाने[2]ङ्गदुःखसंतापित[3]कथञ्चित्तविघटमानजीविता संभावितास्मि। विजृम्भितापूर्वसर्वाङ्गप्रज्वलितमदनहुतवहोद्दामदाहदुःसहायासदुर्मनायमानपरिजना प्रत्याशाविमोक्षमात्रसुलभमृत्युनिर्वाणप्रतिकूलबुद्धरक्षितावचनविवर्धितावेगव्यतिकरविसंष्ठुलेमं जीवलोकपरिवर्तमनुभवामि।

(णिसामेहि पिअसहि। मम बुद्धरक्खिदापक्खवादप्पच्चएण पढमं ज्जेव्व तस्सिं[4] जणे भरिदुव्वरन्तकोदूहलुक्कण्ठामणोरहं हिअअं आसी। तदो विहिणिओअणि[5]उत्तदंसणा भविअ दुव्वारदारुणाणङ्गदुक्खसंदाविदकडुन्तचित्तविहडन्तजीविदा[6] संभाविआम्हि। विअम्भिआपुव्वसव्वङ्गप्पज्जलिदमअणहुदवहुद्दामदाहदूसहाआसदुम्मणाअन्तपरिअणा[7] पच्चासाविमोक्खमेत्तसुलहमित्तुणिव्वाणपडिऊलबुद्धरक्खिदावअणविवड्ढिआवेअवइअराविसंठुला[8] इमं जीवलोअपरिवत्तं अणुभवामि।)[9]

संकल्पस्वप्नान्तरेषु च मनोरथोन्मादमोहिता प्रेक्षे तं जनम्। सोपि प्रियसखि मुहूर्तनिर्व्यूढविस्मयविसंष्ठुलोद्वेल्लविस्तीर्यमाणललितने-

---

स इति भावः। **मदयन्तिका**। अत्र निशामय शृणु। एकवचनमिह लवङ्गिकापेक्षया। बुद्धरक्षिताया विदितवृत्तान्तत्वात्। कथाकथनं तु रागवृद्धये यदाह—'यात्रा पुरस्कन्दनमुत्सवो वा स्वप्नोऽथ चित्रं रतिसंकथा च। भवत्युपायाः प्रथमावलोके यूनोर्यतो वृद्धिमुपैति रागः॥' पक्षपात इति बुद्धरक्षितापक्षपातो गुणबाहुल्यं विना न भवतीति विश्वास इति भावः। भृतोद्वृत्तमतिरिक्तीभवत्। कौतूहलमुत्कण्ठा च मनोरथश्चेति विग्रहः। ततो बहुव्रीहिः। यद्वा अतिरिक्तीभवत् कौतूहलमुत्कण्ठा च यत्र मनोरथे तादृशो मनोरथो यत्र तत्तथा। सर्वाङ्गदाहो व्याध्यवस्थायाम्। यदाह—'मनःसंमोहसर्वाङ्गदाहवृत्त्यादिभिस्तथा। शिरसो वेदनाभिश्च व्याधेरभिनयो यथा॥' मरणमेव निर्वाणं मोक्षः सर्वदुःखापहारकत्वात्। मयत्नादिष्टसङ्गस्तव स्यादिति बुद्धरक्षितावचनम्। विसंष्ठुला संशयितचित्ता। जीवलोकस्य परिवर्तोऽन्यथात्वं मूर्छेत्यर्थः। यद्वा मूर्छानन्तरं पुनर्जीवलोकप्रवेशोऽत्र परिवर्तनम्। संकल्पान्तरे भावनाबलजज्ञानमध्ये स्वप्नज्ञानमध्ये चेत्यर्थः। निर्व्यूढ उपचितः।

---

१ भृतोद्वृत्त (टी.) २ मदन. ३ पितोत्कण्ठितचित्त. ४ तस्सिं जणे अदिभूमिं गदो अणुराओ। अवि अ तस्सिं जणे. ५ अविरलको०—मणहरं. ६ णिओइअचिर (नियोजितचिर). ७ दारुणाआसदुक्खसंदावडज्झन्त (संतापदह्यमान). ८ जीविदासा दूरविअम्भिआ० (दूरविजृम्भिता०). ९ पज्जलण.

त्रपुण्डरीकताण्डवोद्भटप्ररूढमैरेयमदघूर्णितामिव चिरं निर्ध्यायति माम् । किं च कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरस्खलितगम्भीरभारतीभरितकर्णविवरं प्रिये मदयन्तिके इति मां व्याहरति । अथ च प्रस्फुरत्पयोधरोच्छलदुत्तरीयांशुकाञ्चलावलम्बनपरिभवेन ससंभ्रमोत्तरङ्गिधमधमायमानहृदयां मां समुत्त्रासयति । ( संकप्पसिविणन्तरेसु अ मणोरहुम्मादमोहिदा पेक्खामि तं जणं । सो वि पिअसहि मुहुत्तणिव्वूढविब्भअविसंठुलुव्वेल्लवित्थरन्तलेलिदणेत्तपुण्डरीअताण्डवुब्भटप्परूढमैरेअमदघुण्णिदं विअ चिरं णिज्झाअदि मं । किं अ कवलिआरविन्दकेसरकसाअकण्ठकलहंसघोसघग्घरक्खालिअगम्भीरभारदीभरिदकण्णविवरं पिए मदअन्तिए त्ति मं वाहरदि । अध अ पप्फुरन्तपओधरुच्छलदुत्तरीअअंशुअञ्चलावलम्बणपरिभवेण ससंभमुत्तरङ्गिधमधमाअन्तहिअअं मं समुत्तासेदि । )

सहसा विसर्जितांशुकप्रसृतां च तत्क्षणकठोरकमलदण्डायमानबाहुबन्धनापवारितपयोधरोद्गमां विघटमानविकलमेखलावलयसंदानितपीवरोरुप्रतिषिद्धविप्रतीपगमनां प्रतिकूलवादिनीमप्यत्यादरप्रयत्ननिर्वर्तितमुहु-

---

उद्वेल्लत्सभ्रूक्षेपम् । प्ररूढमैरेयं प्रसन्नमद्यम् । तस्य मदो मत्तता । 'मैरेयमासवः सीधुः' इत्यमरः । घूर्णितमितिक्रियाविशेषणम् । निर्ध्यायति चिन्तयति । कषायः सुरभितः । कलहंसो राजहंसः । घोषः शब्दः । घर्घरमस्फुटम् । स्खलितं च्युतम् । एतदुभयं साध्वसवशात् । हर्षसंजातस्वरभेदाद्वा । यदाह—'स्वरभेदो भयक्रोधमदहर्षादिभिर्भवेत् ।' भरितकर्णविवरमिति क्रियाविशेषणम् । वस्त्राञ्चलग्रहणेन स्त्रीप्रसादनम् । यदाह—'रहसि ग्रहणेनापि हस्ते वस्त्रे च मूर्धनि । कार्यं प्रसादनं नार्या अपराधं समीक्षता ॥' परिभवेन प्रतिकारबुद्ध्या । सभयं पूर्वाननुभवात् । अत्र किं स्यादित्युत्तरंगि कम्पवत् । आतङ्काद्धमधमायमानमुष्णमिव चित्तं यस्यास्ताम् । यद्वा उत्तरङ्गयुद्गतकल्लोलम् । धमधमायमानं सकम्पम् । कल्लोलश्च कम्पस्योत्तरोत्तरप्रकर्षः । उत्त्रासयति चकितां करोति । शीघ्रं त्यक्तवस्त्रा च सा प्रसृता गमनोद्यता च । कर्मधारयः । पुलकितत्वेन दण्डायमानता । अपवारितोऽपिहितः । उद्गमो विस्तारः । आलिङ्गनविघटनं कृत्वापसरणे कुचालोकनादिकं नायकस्य जायते । नायिका च तदा संवरणाय न प्रभवतीति भावः । तर्हि पलायते किमिति नेत्यत आह—**विघटमानेति** । विघटमानालिङ्गनजरोमाञ्चसंचयात् । विकला स्वस्थानचलनात् । संदानं बन्धनम् । तत्प्रापिताभ्यामित्यर्थः । प्रतीपं प्रतिकूलम् । गमनाभावे पुनः का-

---

१ संकप्पचिन्ताए. २ तह अ. ३ मुहुत्तं उद्भूढ. ४ वित्थारिपेरन्तणाल (विस्तारिप्रान्तनाल). ५ रत्त ( रक्त ) टी०. ६ तण्डवुप्पीडडम्बरपडिरूढ. ७ मैरेअदप्पं; मदघुम्मन्तसीलं णिव्वण्णेदि ( घूर्णनशीलं निर्वर्णयति ). ८ नारधीरणादभरिद. ९ अध पहावन्तो ( प्रभवन् ) विअ उत्तरीअ; उत्तरिअअंचल. १० मपि मामत्या० ( टी. ).

र्तकोपोपरागदुःखपरुषीकृतहृदयां स्निग्धपुनरुक्तपर्यस्तलोचनविभाविताशेषचित्तसारामुपहसति। द्विगुणबाहुदण्डावेष्टननियन्त्रितां प्रियसखि प्ररूढशार्दूलकठोरकररुहाक्रमणविकटपत्रावलीप्रसाधनोत्तानवक्षःस्थलनिष्ठुरनिवेशानिःसहां कृत्वा सावेगविधुतमस्तकाविद्धकबरीनिहितकरपरिग्रहपुञ्जीकृतोन्नमितनिश्चलमुखावयवस्वच्छन्दविकासविदग्धवदनकमलो वामगण्डमूलचिरनिहितप्रस्फुरत्पुञ्जिताधरसमुद्गतमनोहरस्पर्शनिर्भरोद्धर्षितशरीरशोभामुल्लसितसाध्वसानन्दविषमसंभ्रमवलनमोहमन्थरभ्रमल्लोचनां किमपि दुर्विनयसाहसानुरूपव्यवसायो मामनभ्यर्थनीयमभ्यर्थयति।

(सहसा विसज्जिअंसुअप्पसारिदं अ तक्खणकठोरकमलदण्डाअमाणबाहुबन्धणाववारिअपओहरुग्गमं विहडन्तविअलमेहलावलअसंदाणिज्जन्तपीवरोरुप्पडिसिद्धविप्पदीवगमणं पडिऊलवादिणिं वि अच्चोअरपअत्तणिव्वत्तिदमुहुत्तकोवोवराअदुक्खपरुसीकिदहिअअं सिणिद्धपुणरुत्तपल्हत्थलोअणविहाविदासेसचित्तसारं मं उवहँसदि। दिउणबाहुदण्डावेट्ठणाणिअन्तिदं पिअसहि प्परूढसद्दूलकठोरकररुहोरम्फविअडपत्तावलीपसाहणुत्ताणवच्छत्थलणिट्ठुरणिवेसणीसहं कदुअ सावेअविहुअमत्थआविद्धकबरीणिहिदकरपरिग्गहोवग्गिदुण्णमिअणिच्चलमुहावअवसच्छन्दविआसविअड्ढवअणकमलो वाम-

---

न्तावरुद्धतया हूं हूमित्यादिनिषेधमाह--**प्रतिकूलेति**। उपरागः संबन्धः। निषिद्धपुनरुक्ते पुनः पुनर्निषेधवाक्ये पर्यस्तं निषेधविपरीतं स्निग्धत्वादिधर्मत्वात्। यद्वा पर्यस्तं विभ्रान्तम्। चित्तसारः संभोगेच्छापरता। उपहासः परिहासः। स च हृदि संभोगेच्छा वाचि परं ते निषेध इत्येवंरूप इत्यर्थः। स्निग्धपुनरुक्तेतिपाठे स्निग्धपुनरुक्तं पुनः पुनः स्निग्धं पर्यस्तं क्षिप्तं लोचनमित्यर्थः। आवेष्टनमाविष्टः तेन गाढालिङ्गनमुक्तम्। कररुहो नखः। ओरम्फ आक्रमणम्। प्रौढव्याघ्रनखवत्कठोरं यत्कररुहमिति भावः। निष्ठुरं निबिडम्। निवेशोऽर्पणम्। निःसहां वचनाद्यक्षमाम्। अत्र कररुहाक्रमणमेव पत्रावलीति रूपकम्। चुम्बनमाह—**सावेगेति**। ओवग्गिदं पुञ्जीकृतं लम्बितमित्यर्थः। मुखावयवा ललाटादयः। विकासितं चुम्बनादिनियुक्तम्। वदनस्य वैदग्ध्यं चुम्बनचातुर्यात्। इह कन्यायास्त्रिविधं चुम्बनम्। ललितकच्छुरितकघटितकभेदात्। तत्र ललितकमाह–प्रस्फुरितेति। घटितकमाह-

---

१ प्रौढ (टी०). २ विसज्जिअओसरिअ; विसज्जिअंसुअमोसरिअ० (०तांशुकामवसृत्य टी०). ३ विह्मल, विअड (विकट–टी०). ४ संधाणिज्जन्त. ५ संव्वादर. ६ निसिद्ध (निषिद्ध–टी०); रुत्तपह्मलविलोअण. ७ ०सारं उवहासिअ (उपहस्य). ८ वेढ्ढणणिच्चेट्ठाणिअमिअं; णिव्वनिअं. ९ रुहप्पहार. १० आवविद्ध. ११ विअसिद, विलसिद.

गण्डमूलचिरणिहिदप्पप्फुरन्तपुञ्जिदाहरसमुग्गदमणुहरफ्फंसणिब्भरुद्धंसिदसरीरसोहं उल्ल- सिदसद्धसाणन्दविसमसंभमवलणमोहमन्थरभमन्तलोअणं किं वि दुव्विणैअसाहसाणुरू- ववसाओ मं अब्भत्थेदि ।)

एवं नाम प्रियसखि समक्षं सर्वमनुभूय ततो झटिति प्रतिबुद्धा शून्यारण्यसंनिभं पुनरपि मन्दभाग्या विभावयामि जीवलोकमिति । ( एवं णाम पिअसहि समक्खं सव्वं अणुभविअ झत्ति पडिबुद्धा सुण्णारण्णसंणिभं पुणो वि मन्दाभाइणी विभावेमि जीअलोअं त्ति ।)

**लव०**—( विहस्य । ) सखि मदयन्तिके स्फुटमाख्याहि । अथ तस्मिन्नवसरे स्नेहविभ्रमोन्मिश्रहासविकसद्बुद्धरक्षितालोचननिरूपितं परि- जनाद्गोपनीयं त आसनमचूडकं शयनीयप्रच्छदपटापवारितं भवति किं न वेति । ( सहि मदअन्तिए फुडं आचक्खेहि । अध तस्सिं अवसरे सिणेह- बिब्भमुम्मीसहासविअसन्तबुद्धरक्खिदालोअणणिरूविदं परिअणादो गोवणिज्जं दे आस- णमचूलअं सअणिज्जपच्छदबडावारिदं भोदि किं ण वेत्ति ।)

**मद०**—अयि असंबद्धपरिहासशीले अपेहि । ( अइ असंबद्धपरिहा- ससीले अवेहि ।)

**बुद्ध०**—सखि मदयन्तिके मालतीप्रियसखी खल्वीदृशान्येव मन्त्रायितुं जानाति । ( सहि मदअन्तिए मालदीपिअसही क्खु ईदिसाइं ज्जेव्व मन्तिदुं जाणादि ।)

---

पुञ्जितं योजितम् । ईषत्परिगृह्य मीलितनेत्रा जिह्वाग्रेण घटयति करेण नेत्रे तस्या- च्छादयतीति घटितकम् । छुरितकं तु प्रागेवोक्तम् । समुद्गम उद्रेकः । एवं च सर्वाङ्गीणनायकस्पर्शात्प्रमोदमाह मनोहरेति । उद्धर्षितमुद्गतरोमाञ्चम् । नायि- काया वामाङ्गे सकलोपचारव्यवस्थापनाद्वामकपोलेत्युक्तम् । वर्धमानां सुरतावस्था- माह समुल्लसितेति । समुल्लसिताभ्यां साध्वसानन्दाभ्यां विषमो यः संभ्रमः संवेगस्तत्र मोहेन किंकर्तव्यतामूढतया मन्थरत्वमेकतरपक्षाव्यवस्थितिः । साध्वसेन प्रवृत्तिरानन्देन च निवृत्तिरित्याशयः । अनभ्यर्थनीयं सुरतादिकम् । ततो झटितीति जागरावस्थाकथनम् । **लवङ्गिका** । अत्र मचूडकं विथावीति ख्यातम् । निःसहत- नुत्वेनासनमचूडकेऽपि धातुत्यागप्रश्नवैदग्धीयमिति भावः । पुष्पवतीशङ्कया परिजन-

---

१ कपोल; मूलोवारिण०. २ मणहरसहअसारस्सदमणहरुक्कस्सिद ( सहजसारस्वतमनोह- रोत्कर्षित ). ३ रुब्भमाविद ( रोद्भ्रामित ). ४ संभममणहरसंवलण...चेअणं ( चेतनां ). ५ दुव्विणीद. ६ एवं नाम इति नास्ति बहुपुस्तकेषु. ७ तदो झत्ति. ८ विब्भमुज्जिअ (विभ्रमोर्जित). ९ णिअम्बस्स मूलं सअणिज्जं पच्छदवडो वा भोदि. १० ०सही एव्व इअं ईरिसाणि जा०.

**मद०**—सखि मा खल्वेवं मालतीमुपहस। ( सहि मा क्खु एव्वं मालदिं उवहस। )

**बुद्ध०**—सखि मदयन्तिके पृच्छामीदानीं ते किमपि यदि न मे विश्वासभङ्गं करोषि। ( सहि मदअन्तिए पुच्छिस्सं दाणिं दे किं वि जइ ण मे विस्सासभङ्गं करेसि। )

**मद०**—सखि किं पुनरपि प्रणयभङ्गेन कृतापराधोऽयं जनो येनैवं मन्त्रयसे। प्रियसखि त्वं लवङ्गिका च सांप्रतं मे हृदयम्। ( सहि किं पुणो वि पणअभङ्गेण किआवराहो अअं जणो जेण एव्वं मन्तेसि। पिअसहि तुमं लवङ्गिआ[1] अ संपदं मे हिअअं। )

**बुद्ध०**—यदि ते कथमपि मकरन्दः पुनरपि दर्शनपथमवतरति तदा किं त्वया कर्तव्यम्। ( जइ दे कधं वि मअरन्दो पुणो वि दंसणपहं ओदरदि तदो किं तुए कादव्वं। )

**मद०**—एकैकावयवनिःसङ्गलग्ननिश्चले चिरं लोचने निर्वापयिष्यामि। ( एक्केक्कावअवणीसङ्ग[2]लग्गणिच्चले चिरं लोअणे णिव्वावइस्सं। )

**बुद्ध०**—अथ सोपि मन्मथबलात्कारितो यदि कंदर्पजननीं त्वां रुक्मिणीमिव पुरुषोत्तमः स्वयंग्राहसहधर्मचारिणीं करोति ततः का प्रतिपत्तिः। ( अध[3] सोवि मम्महबलक्कारिओ जइ कंदप्पजणणिं तुमं रुक्किणिं विअ पुरुसोत्तमो सअंग्गा[4]हसहधम्मचारिणिं करेइ तदो का[5] पडिवत्ती। )

**मद०**—( निःश्वस्य। ) किं मामेतावदाश्वासयसि। ( किं मं एत्तिअं[6] आसासेसि। )

---

हासानिवारणाय गोपनम्। **बुद्ध०**। अत्र पृच्छामि यदि हृद्गतं रहस्यं कथयसीति भावः। **मदय०**। अत्र कृतापराध इत्यत्र शिरश्चालनगतिः। **बुद्ध०**। अत्रात्मसमर्पणमेव त्वया कार्यमिति भावः। **मदय०**। अत्र तद्दर्शनामृतसेकशीतला भविष्यामीति भावः। निःसङ्गः सर्वाङ्गव्यापी। **बुद्ध०**। अत्राथशब्दो यद्यर्थे। बलात्कारितो बलात्कारेण प्रवर्तितः। रुक्मिणी काममाता प्रद्युम्नमातृत्वात्। पक्षे कामावस्थाकारिणीम्। पुरुषोत्तमः कृष्णः। अथ च पुरुषेषूत्तमो मकरन्दः। स्वयंग्राहेण

---

१ ०ङ्गिआए समं. २ निसग्ग ( निसर्ग ). ३ जइ. ४ ग्गाहसाहसेण. ५ कीरिसी. ६ किं एत्तिअं आसासिदाह्मि.

**बुद्ध०**—सखि कथय । ( सहि कहेहि । )

**लव०**—सखि कथितमेव हृदयावेगसूचकैर्दीर्घनिःश्वासैः । ( सहि कधिदं ज्जेव्व हिअआवेअसूअएहिं दीहणीसासेहिं । )

**मद०**—सखि काहमस्य तेनैवात्मानं पणीकृत्य दुष्टशार्दूलकवलनादाकृष्टस्य तस्यैव कृत्यकरस्यात्मनः शरीरस्य । ( सहि का अहं इमस्स तेण ज्जेव्व अत्ताणअं पणीकदुअ दुट्ठसद्दूल[1]कवलणादो कड्ढिअस्स तस्स ज्जेव्व[2] केरअस्स अत्तणो सरीरस्स । )

**लव०**—सदृशं खलु महानुभावतायाः । ( सरिसं क्खु महाणुभावदाए ।

**बुद्ध०**—स्मरिष्यस्येतद्वचनम् । ( सुमरेसि[3] एदं वअणं )

**मद०**—कथं द्वितीयप्रहरनाडिकाविच्छेदपटहस्ताड्यते । तद्यावन्नन्दनं निर्भर्त्स्य सपादपतनमभ्यर्थ्य मालत्या उपर्यनुकूलयिष्यामि । ( कधं दुदीअप[4]हरनाडिकाविच्छेदपडहो ताडीअदि । ता जाव णन्दणं णिब्भच्छिअ सपादपडणं[5] अब्भत्थिअ मालदीए उवरि अणुऊलइस्सं । ) ( इत्युत्थाय गन्तुमिच्छति । )

( मकरन्दो मुखमुद्घाट्य हस्तेन[6] गृह्णाति । )

**मद०**—सखि मालति प्रतिबुद्धासि । ( विलोक्य सहर्षसाध्वसम्[7] । ) अम्मो अन्यदेव किमप्येतद्वर्तते । ( सहि मालदि पडिबुद्धासि । अम्मो[8] अण्णं जेव्व[9] किं वि एदं वट्टदि । )

---

गान्धर्वेण । स्वधर्मचारिणी भार्या । प्रवृत्तिर्वार्ता । **मदयन्तिका** । इह ममाभाग्येन किं स्यादिति निःश्वास इति भावः । **मदयन्तिका** । अत्र काहमात्मशरीरस्य किंतु न कापि । मकरन्दस्यैव मच्छरीरमिति भावः । केरकशब्दः कृत्यकरवाची । पणीकृत्य मूल्यतया यो व्यवस्थाप्यते स कृत्यकरः । **लवङ्गिका** । अत्र महानुभावता कृतज्ञता । **बुद्धरक्षिता** । सांप्रतमेवैतद्वचनस्योपयोगं स्थिरीकृत्याह । स्मरिष्यसीदं वचनम् । **मदयन्तिका** । अत्र ' नाडी कालेऽपि षट्क्षणे ' इत्यमरः । षट्क्षणावच्छिन्नः कालो नाडी । द्वितीया नाडी द्वादशक्षणात्मकः कालः । मदयान्तिकामकरन्दसंघट्टनविषयस्य समाप्तिपटहोऽयमित्यर्थः । यद्वा द्वितीयनाडी द्वितीयभगिनी मालती तया सह विच्छेदो वियोगो यथोपक्रान्तसंबन्धविघटनामित्यर्थः । **मकरन्दः** । गृह्णाति मदयन्तिकामित्यर्थः । **मदयन्तिका** । अत्राम्मो इति स्वच्छंदप्रलपितस्वा-

---

१ मिच्चु० (मृत्यु) कवलादो. २ परकेर०, एव्व परएअस्स (परकीयस्य) किच्चकिंकरस्स. ३ सुमरेहि. ४ दुदिअआमवि०. ५ पडणं वा. ६ हस्ते. ७ सहर्षं ससाध्वसं च. ८ अम्हहे. ९ एदं एव्व व०.

मक०—

रम्भोरु संहर भयं क्षमते विसोढु-
मुत्कम्पितं स्तनभरस्य न मध्यभागः ।
इत्थं त्वयैव कथितप्रणयप्रसादः
संकल्पनिर्वृतिषु संस्तुत एष दासः ॥ २ ॥

बुद्ध०—( मदयन्तिकामुखमुन्नमय्य संस्कृतमाश्रित्य । )

प्रेयान्मनोरथसहस्रवृतः स एष
सुप्तप्रमत्तजनमेतदमात्यवेश्म ।
प्रौढं तमः कुरु कृतज्ञतयैव भद्र-
मुत्क्षिप्तमूकमणिनूपुरमेहि यामः ॥ ३ ॥

मद०—सखि बुद्धरक्षिते क्व पुनरिदानीमस्माभिर्गन्तव्यम् । ( सहि बुद्धरक्खिदे कहिं पुणो दाणिं अह्मेहिं गन्दव्वं । )

बुद्ध०—यत्रैव मालती । ( जहिं ज्जेव्व मालदी । )

---

भिप्रायानुतापे । **रम्भेत्यादि** । हे रम्भोरु भयं त्यज । यतस्तव स्तनभारस्योत्कम्पं सोढुं मध्यभागो न क्षमते समर्थो न भवति । अतिकृशो मध्यदेशः कुचयोर्भयकम्पस्य भारं न सहत इति भावः । भयमिहापरिचितदर्शनात् । विकारमिति पाठे तत्र सकम्पस्य स्तनभारस्य विकारं मध्यभागो न क्षमते । संकल्पसुखेष्वनेनोक्तप्रकारेण त्वयैव कथितप्रार्थनासंपत्तिरेषोऽहं संस्तुतः परिचितो दासो विधेयः । प्रणयः प्रेम तद्रूपो वा प्रसादः ॥ २ ॥ **प्रेयानित्यादि** । प्रेयान् प्रियतमो मनोरथसहस्रैर्वृतः प्रार्थितो यस्त्वया संकल्पादिष्वनुभूतः स एष सोऽयमित्यर्थ इति प्रागनुरागोद्भेदः । अतः कृतज्ञतया पूर्वोपकारस्य स्मरणेनैव भद्रमभीष्टं विवाहरूपं कुरु । तत्र सामग्रीमाह—एतदमात्यगृहं केचित्सुप्ताः केचित्प्रमत्ता जना यत्र तादृशम् । गाढं तमः । अन्धमिति पाठेऽन्धं करोतीत्यन्धम् । तम इत्यर्थः । उत्क्षिप्तमुत्तोलितमत एव मूकमशब्दं मणिप्रधानं नूपुरं यथा तथैहि यामः । विवाहसंपादनायेति भावः । तत्र सुप्तादिना गृहलोकानामदर्शनं प्रौढान्धकारतया बहिर्लोकानामदर्शनम् । नूपुरस्याप्यशब्दतया परवितर्काभाव इति गमनमप्रत्यूहं स्यादिति दर्शितम् । प्रमत्त इति रदाभ्यां निष्ठातो न इति नत्वं न भवति । न ध्याख्यापृमूर्छिमदामिति निषेधात् ॥ ३ ॥ **मदयन्तिका** । अत्रानेन मकरन्दसंमतिमाह—यत्रैव मालती । वर्तत

---

१ विकारमुत्कम्पिनः स्तनतटस्य; उत्कम्पनं. २ संस्कृत. ३ लवङ्गिका. ४ उत्क्षिप्य. ५ मालदी गआ.

**मद०**—किं निर्वृत्तसाहसा मालती । ( किं णिव्वुत्तसाहसा मालदी । )

**बुद्ध०**—अथ किम् । अन्यच्च । त्वं भणासि । ( अध ईं । अण्णं अ तुमं भणासि । ) ( 'काहं इमस्य' इत्यादि पठति । मदयन्तिकाश्रूणि पातयति । )

**बुद्ध०**—महाभाग दत्तः खलु स्वयमात्मा प्रियसख्या । ( महाभाअ दिण्णो क्खु सअं अप्पा पिअसहीए । )

**मक०**—

**अद्योर्जितं विजितमेव मया किमन्य-**
**द्द्योत्सवः फलवतो मम यौवनस्य ।**
**यस्य प्रसादसुमुखेन समुद्धृतेयं**
**देवेन बान्धवधुरा मकरध्वजेन ॥ ४ ॥**

तदनेन पक्षद्वारेण निर्गत्य साधयामः ।

( निभृतं परिक्रामन्ति । )

**मक०**—अहो निशीथनिःसंचाररमणीयता राजमार्गस्य । तथा हि संप्रति ।

**प्रासादानामुपरि वलभीतुङ्गवातायनेषु**
**भ्रान्त्वावृत्तः परिणतसुरागन्धसंस्कारगर्भः ।**

---

इति शेषः । एतेनागामिनोऽङ्कस्यावतारः सूचितः । **मदयन्तिका** । अत्र पितृनैरपेक्ष्येण मालत्यात्मनिवेदनं यदि तदा ममापि तत्स्यादित्याशयः । **बुद्धरक्षिता** । अत्र च तथा प्रागेव मत्समक्षं त्वया मकरन्दायात्मा दत्तः । इदानीं कुतस्तेऽपास्यमित्याशयः । स्वगृहत्यागदुःखादश्रुपातेन सूचितात्मदानां मदयन्तिकामाह [बुद्ध०]—अत्र तुभ्यमिति शेषः । **अद्येत्यादि** । अद्योर्जितं सातिशयं कृत्वा मया विजितम् । सर्वकार्यसंपादनात् । सफलस्य मम यौवनस्याद्योत्सवः । अत एवान्यत्किम् । अपि तु न किमपि । साध्यमस्तीति शेषः । यस्य मम बान्धवधुरा मित्रकृत्यं कामदेवेन सम्यग्धृता । प्रसन्नतया सुमुखेन । एवकारोऽप्यत एव । यदि माधवसंगतेयं स्यात्तदा मया सर्वाकारं जितं न स्यादिति भावः । कन्यावरणे बान्धवा एव भवन्ति । यदाह—' कन्याया वरणे माता पितरौ बान्धवा अपि । ' पक्षद्वारं खडिकिका ॥ ॥ ४ ॥ ' अर्धरात्रनिशीथौ द्वौ ' इत्यमरः । **प्रासादानामिति** । अयं वायुस्तरुणानां नूतनस्त्रीसमागमं प्रकाशयति । अनेन मदयन्तिकाप्रोत्साहनमुक्तम् । कीदृशः

---

१ दिण्णं क्खु अत्ताणं पिअसहीए पडिवज्जस्स ( प्रतिपद्यस्व ). २ यन्मे. ३ समुद्यता. ४ एतन्नास्ति क्वचित्. ५ जाल. ६ भ्रान्त्या, प्राप्तामोदः.

मालयामोदी मुहुरुपचितस्फारकर्पूरवासो
वायुर्यूनामभिनववधूसंनिधानं व्यनक्ति ॥ ५ ॥
( इति निष्क्रान्ताः सर्वे । )

इति नन्दनविप्रलम्भो नाम सप्तमोऽङ्कः ।

---

उक्तस्थानेषु भ्रान्त्वावृत्तः । आदौ भ्रान्तः पुनरावृत्त आयातः । अनेन मन्दत्वम् । भ्रान्त्या भ्रमणेनायात इति वा । परिणतपुष्परसगन्धसमूहबन्धुः । पुष्पस्रजा हृष्टः सुरभिर्वा । मुहुरुपचितोऽत्यर्थं प्रवृद्धः । स्फारो दीर्घतया बृहत्तरः । कर्पूरसंपर्की च । पश्चात्कर्मधारयः । यद्वा कर्पूरविशेषणमेव द्वयम् । एभी रतिसौगन्ध्ये ध्वनिते । यतोऽतिमनोहरोऽत एव स्त्रीसांनिध्यकर इति भावः । उपहितम्लानेति पाठेऽपि कर्मधारयः ॥ ५ ॥

प्रासोष्ट यं रत्नधरो द्विजेशो द्विजेशवन्द्या दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगमन्मनोहारिणि सप्तमोऽयम् ॥

इति सप्तमोऽङ्कः ।

---

१ स्फीत. २ वातो यूनामभिमत.

## अष्टमोऽङ्कः ।

( ततः प्रविशत्यवलोकिता । )

**अवलोकिता**—वन्दिता मया नन्दनावासप्रतिनिवृत्ता भगवती । तद्यावन्मालतीमाधवसकाशं गच्छामि । ( परिक्रम्य । ) एतौ तौ निर्वर्तितग्रीष्मदिवसावसानमज्जनौ दीर्घिकातटशिलातलमलंकुरुतः । तद्यावदुपसर्पामि । ( वन्दिदा मए णन्दणावासपडिणिउत्ता[1] भअवदी । ता जाव मालदीमाहवसआसं[2] गच्छह्मि । एदे दे णिव्वत्तिद[3]गिह्मदिअहावसाणमज्जणा दीहिआतड[4]सिलातलं अलंकेरन्ति[5] । ता जाव उपसप्पामि[6] । ) ( निष्क्रान्ता[7] । )

**प्रवेशकः ।**

---

( ततः प्रविशत उपविष्टौ मालतीमाधवाववलोकिता च । )

**माधवः**—( सानन्दम्[8] । ) वर्तते[9] हि मन्मथप्रौढसुहृदो निशीथस्य[10] यौवनश्रीः । तथा हि ।

> **दलयति परिशुष्यत्[11]प्रौढतालीविपाण्डु-**
> **स्तिमिरनिकरमुद्यन्नैन्दवः प्राक्प्रकाशः ।**
> **वियति पवनवेगादुन्मुखः केतकीनां**
> **प्रचलित इव सान्द्रो मन्दमन्दं[12] परागः ॥ १ ॥**

( स्वगतम् । ) तत्कथं वामशीलां मालतीमुपावर्तये । भवत्वेवं तावत् । ( प्रकाशम् । ) प्रिये मालति प्रत्यग्रसायंतनस्नानसविशेषशीतलामत्र भवतीं निदाघ[13]संतापशान्तये किंचिद्विज्ञापयामि । तत्किमित्यद्यानिमित्तमन्यथैव मां संभावयसि ।

---

तदेवं मदयन्तिकामादाय मकरन्दे माधवान्तिकं चलिते मालतीमादाय निर्गतस्य माधवस्य कामन्दकीगृहस्थितस्य वार्ताप्रस्तावनायावलोकिताप्रवेशः । सूचनं च पूर्वाङ्के । जहिं ज्जेव्व मालतीति वचनेन मालतीमाधवयोरेकत्र वासः सूचितः । तत्र च यद्यपि तयोरेव प्रवेशोऽर्हति तथापि कन्याप्रलोभने सख्यानुकूल्ये तत्प्रवेश इति पूर्वाङ्के कृतमेव । **अवलोकिता** । अत्र 'सरो वापी तु दीर्घिका' इत्यमरः । **दलयतीत्यादि** । अयं चान्द्र उद्योत उद्गच्छन्नत एव शुष्यत्प्रगल्भतालीपत्रवत्पाण्डुरस्तिमिरसंघं खण्डयति । प्रथमतो व्योम्नि वायुवेगेनोर्ध्वमुखीभूय प्रचलितो घनः केतकीपराग इव । इन्दोरयमैन्दवः । मन्दमन्दमिति प्रचलनक्रियाविशेषणम् । उपावर्तये संमुखीक-

---

१ णावसथ. २ आसं ज्जेव. ३ परिणिव्व०. ४ तीर. ५ ०न्ति मालदीमाहवा. ६ उवसप्पिस्सं [ उपसर्प्स्यामि ]. ७ इति नि०. ८ स्वगतं, स्व० सा०. ९ वर्धते. १० निशीथिनीनाथस्य. ११ शुष्क. १२ ०न्दः; माकरन्दः; स्फारस्फारम्. १३ निदाघशा०.

निश्चोतन्ते सुतनु कबरीबिन्दवो यावदेते
यावन्मध्यः स्तनमुकुलयोर्नार्द्रभावं जहाति।
यावत्सान्द्रप्रतनुपुलकोद्भेदवत्यङ्गयष्टि-
स्तावद्गाढं वितर सकृदप्यङ्कपालीं प्रसीद॥ २॥

अयि निरनुरोधे

जीवयन्निव समूढसाध्वसस्वेदबिन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः॥ ३॥

अथ वा दूरे तावदेतत्। कथमालापसंविभागस्याप्यभाजनमयं जनो भवत्याः।

दग्धं चिराय मलयानिलचन्द्रपादै-
र्निर्वापितं तु परिरभ्य वपुर्न नाम।
आमत्तकोकिलरुतव्यथिता तु हृद्या-
मद्य श्रुतिः पिबतु किंनरकण्ठि वाचम्॥ ४॥

---

रोमि॥ १॥ **निश्चोतन्त इत्यादि**। हे सुशरीरे यावदेते कबरीजलबिन्दवः स्रवन्ति यावत्कुचकलिकयोर्मध्य आर्द्रतां न त्यजति यावच्च निबिडव्यापि रोमाञ्चं प्रकाशयन्ती काययष्टिस्तावद्गाढं यथा तथा सकृदपि मेऽङ्कपालीं क्रोडप्रदेशं देहि। अतः प्रसीद। तदिह निदाघतापशान्तये जलबिन्दवः। कुचार्द्रता पुलकोद्गमश्च सर्वाङ्गशैत्यापत्तये। यावत्तावच्छब्दाववध्यर्थौ। सान्द्रेत्यादिपदे कर्मधारयमत्वर्थीयाद्बहुव्रीहिरेवेष्टो लघुत्वादिति न्यायेन बहुव्रीहिसंभवे कथं मत्वर्थीय इति न देश्यम्। एतद्वचनस्य प्रायिकत्वात्। तथैव नानाप्रयोगदर्शनादिति दिक्। 'पालिः पङ्क्तिप्रदेशयोः' इति शाश्वतः॥ २॥ **जीवयन्नित्यादि**। बाहुः कण्ठेऽर्प्यताम्। कीदृशः। समूढं सद्योजातं पुञ्जितं वा यत्साध्वसं भयं तेन स्वेदबिन्दुर्यत्र सः। अननुभूततया भयम्। चान्द्रकरस्पृष्टोऽत एव स्यन्दी क्षरन्बालचन्द्रकान्तहारस्तत्तुल्यः। घर्मविघातकत्वात्। अत एव सौहित्याज्जीवयन्निव। 'समूढः पुञ्जिते भुग्ने सद्योजाते सुनिश्चिते।' इति विश्वः। ससाध्वसश्रमेति पाठे ससाध्वसो भयवान्यः श्रम इत्यर्थः। संविभागो भेदः। अभाजनमस्थानम्। अजहल्लिङ्गोऽयम्। अयं जन इत्यनेन दीनतोद्भावनेनानुकूल्यं स्वीयमाह। भवत्या इत्यनेन नायिकोत्तेजनम्॥ ३॥ **दग्धमित्यादि**। चिरं दक्षिणवायुचन्द्रकरैस्तापितं मे वपुरालिङ्ग्य न चेन्निर्वापितमतप्तीकृतं तदा समदकोकिलरवपीडिता मे श्रुतिः कर्णोऽप्येदानीं हृद्यां वाचं पिबतु। सादरं शृणोत्वित्यर्थः। अत एव वाङ्माधुर्यद्योतनाय किंनरकण्ठि इति संबोधनम्। किंनरस्येव कण्ठः स्वरो यस्यास्तादृशि

---

१ युगुलयोः; कलशयोः; मुकुलयोरा० २ मतत. ३ अङ्ग. ४ अयि मालति निरनुक्रोशे. ५ स्यन्द. ६ पुनर्न. ७ कर्णरसायनानि.

**अव०**—( उपसृत्य ) अयि अनिर्वहणशीले यदिदानीं मुहूर्तमात्रान्तरितमाधवा दुर्मनायमाना मम पुरतो भणसि चिरयत्यार्यपुत्रोऽपि नाम क्रियच्चिरेण प्रेक्षिष्ये येन पुनर्विच्छर्दिताशेषसाध्वसा विस्मृतनिमेषविघ्नमवलोकयन्त्येवं भणिष्यामि द्विगुणावेष्टनपरिरम्भेण संभावयेरिति तस्य ते सांप्रतमयं परिणामः । ( अइ अणिव्वहणसीले जं दाणिं मुहुत्तमेत्तन्दरिदमाहवा दुम्मणाअन्ती मह पुरदो भणासि चिराअदि अज्जउत्तो अवि णाम किअच्चिरेण पेक्खिस्सं जेण पुणो विच्छडिआसेससज्झसा विसुमरिअणिमेसविग्घं ओलोअन्ती एव्वं भणिस्सं दुउणवेठ्ठणपरिरम्भेण संभावअसि त्ति तस्स दे संपदं अअं परिणामो । )

( मालती सासूयमिव तां पश्यति । )

**माधवः**—( स्वगतम् । ) अहो भगवतीप्रधानान्तेवासिन्याः सर्वतोमुखं वैदग्ध्यमक्षय्यश्च सुभाषितरत्नकोषः । ( प्रकाशम् ) प्रिये सत्यमवलोकिता वदति ।

( मालती मूर्धानं चालयति । )

**माधवः**—शापितासि मम लवङ्गिकावलोकितयोश्च जीवितेन यदि वाचा न कथयासि ।

---

हे । 'स्वरे कण्ठः प्रकीर्तितः' इति रत्नकोशः । अङ्गकण्ठगात्रेषूपसंख्यानान्डीष् । पूर्वार्धे तुशब्दो यद्यर्थः । द्वितीये पुनरर्थः । यदि नालिङ्गनं देयं तदा मधुरमालपेति भावः । नाम संभावनायाम् । आलिङ्गनादानं संभाव्यते यतः । त्वयि वदन्त्यां कलकोकिलरवोऽपि कर्णकटुरित्यनुरागाधिक्यमात्मन उक्तम् । इहाद्यपदमिदानीमर्थे । अन्यथा निशीथवर्णनेऽद्यास्मिन्नहनीत्यस्यानर्थक्यापत्तेः । एवं चाद्यास्मिन्नहनीति व्युत्पत्तिः प्रायिका ॥ ४ ॥ **अवलोकिता** । अत्र यदिदानीमिति वाक्यभूषायाम् । भणनस्वरूपमेवाह—चिरयतीति संभावयेरित्यन्तम् । सांप्रतमिति शिरश्चालनकाकौ । चिरयति विलम्बते । विच्छर्दितं त्यक्तम् । विघ्नमिति क्रियाविशेषणम् । **परिणाम इति** । या त्वं चिरविरहमसहमाना माधवार्थिनी सा कथमधुना तत्र वाग्यमनमालम्बस इति भावः । असूया गुणेषु दोषारोपः । सा चेह हास्यनिवेदनादिति भावः । **माधवः** । सर्वतोमुखं सर्वतोगामि । सुभाषितान्येव रत्नानि तेषां कोषः पात्रम् । 'कोषोऽस्त्री कुड्मले पात्रे' इति मेदिनीकरः । प्रियेत्यादिप्रश्नवाक्यम् ॥ मूर्धकम्प उक्तनिषेधाय । **माधवः** । शापितासि शपथीकृतासि ।

---

१ मुहुत्तंतरिदमाहवा; महावेवि. २ विवाद्धिआ. ३ आलोअअन्ती. ४ वेट्टणं, विउणवेढ [द्विगुणवेष्ट]०; दुउणिआवे-म्भणेण संभावइस्सं. ५ स एव्व अअं परि०. ६ अपवार्य. ७ भगवत्याः प्रथमा०. ८ एतदादि नास्ति क्वचित्; अक्षय्यः, अक्षय्यं '०रत्नसंचारसंस्करणम्' इ. पा. ९ प्रिये अपि सत्य०. १० मे.

**मालती**—नाहं किमपि जानामि । ( णाहं किं वि जाणामि । )

( इत्यर्धोक्ते लज्जां नाटयति )

**माधवः**—अहो अनवसितार्थमन्थरस्य[1] वचसश्चारुता । ( सहसा निरूप्य[2] । ) अवलोकिते किमेतत् ।

**बाष्पाम्भसा मृगदृशो विमलः कपोलः**
**प्रक्षाल्यते सपदि राजत एष यस्मिन् ।**
**गण्डूषपेयमिव कान्त्यमृतं पिपासु-**
**रिन्दुर्निवेशितमयूखमृणालदण्डः ॥ ५ ॥**

**अव०**—सखि किमिदानीमुच्छलितबाष्पोत्पीडमन्थरं रोदिषि । ( सहि किं दाणिं उच्छलिअबाहुप्पीडमन्थरं रोदिसि । )

**मालती**—सखि कियच्चिरं प्रियसख्या लवङ्गिकाया असंनिधानदुःखमनुभविष्यामि । प्रवृत्तिलाभोऽप्यस्या दुर्लभः । ( सहि केच्चिरं पिअसहीए लवङ्गिआए असण्णिधाणदुक्खं अणुहविस्सं । पउत्तिलम्भो वि से दुल्लहो । )

**माधवः**—अवलोकिते किं नामैतत् ।

**अव०**—तवैव शपथोपन्यासेनैषा लवङ्गिकां स्मृत्वा तस्याः प्रवृत्तिनिमित्तमुत्ताम्यति । ( तुह ज्जेव्व सवधोवण्णासेण एसा लवङ्गिअं सुमरिअ ताए पउत्तिणिमित्तं उत्तम्मदि । )

**माधवः**—नन्विदानीमेव तत्र मया कलहंसकः प्रेषितः प्रच्छन्नमुपगम्य नन्दनावासप्रवृत्तिमुपलभस्वेति । ( साशंसम् । ) अवलोकिते अपि नाम बुद्धरक्षिताप्रयत्नः सफलोदर्क एव मदयन्तिकां प्रति स्यात् ।

---

अनवसितोऽनिश्चितः । किमेतदिति वक्ष्यमाणवाक्यार्थस्य प्रश्नः । **बाष्पेत्यादि** । हरिणाक्ष्या एव कपोलो बाष्पजलेन सपदि प्रक्षाल्यते । अत एव विमलः । किमेतत् । यत्र चन्द्रो राजते । कीदृक् । गण्डूषेण मुखपूरणेन पातव्यं दीप्त्यमृतं पातुमिच्छुरिव निहितः किरण एव मृणालदण्डो येन सः । किरणरूपमृणाललतिकया पातुमिच्छतीत्यर्थः । अनेन कपोलस्य चन्द्राधिककान्तिमत्त्वमुक्तम् । 'गण्डूषो मुखपूर्तौ स्यात्' इति शाश्वतः ॥ ५ ॥ **अवलोकिता** । अत्रोच्छलितो बहुलीभवन् । मन्थरमिति क्रियाविशेषणम् । **मालती** । अत्रासंनिधानदुःखमसंगमेन जनितक्लेशम् । प्रवृत्तिलम्भो वार्ताप्राप्तिः । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथा-

---

१ ०र्थरम्यवच०; र्थमन्दधर्षव०. २ अवलोक्य. ३ उच्च०. ४ ०पीडं रोदिआदि. ५ लाहो वि मे. ६ वअणो ७ पउत्तिलाह—लम्भ. ८ एव हि. ९ प्रेषितः गच्छ त्वं...नावसथं प्र०; प्रच्छन्नः संनिपत्य नन्दनावासं प्र०.

**अव०**—कुतः संदेहो महानुभावस्य । महाभाग प्रथममेव शार्दूलनखरालंकृतस्य मकरन्दस्य मोहविराममहोत्सवं निवेदयन्त्यै भगवत्या नियुक्तेन भवता मालत्यै जीवितेन समं प्रसादीकृतं हृदयम् । यदि कोऽपि त्वां सांप्रतं मदयन्तिकालाभेन वर्धयति किमिदानीं तस्य पारितोषिकं भविष्यति । ( कुदो संदेहो महाणुभाअस्स[1] । महाभाअ पुढमं ज्जेव्व सद्दूलणहरालंकिदस्स मअरन्दस्स मोहविराममहूसवं[2] णिवेदअन्तीए भअवदीए णिउत्तेण भवदा मालदीए जीविदेण समं पसादीकिदं हिअअं । जइ को वि तुमं संपदं मदअन्तिआलम्भेण[3] वड्ढावेदि तदा किं दाणिं तस्स पारितोसिअं भविस्सदि[4] । )

**माधवः**—अनुयोक्तव्यमेवानुयुक्तोऽस्मि । ( हृदयमवलोक्य । ) इयमस्ति मालतीप्रथमदर्शनाभिषङ्गसाक्षिणः[5][6] कामकाननालंकारस्य लक्ष्मीवतः केसरतरोः प्रसूनमाला[7] ।

> **प्रेम्णा मद्ग्रथितेति यां प्रियसखीहस्तोपनीतानया**
> **विस्तारिस्तनकुम्भकुट्मलभरोत्सङ्गेन संभाविता ।**[8]
> **संप्राप्ते त्वथ[9] पाणिपीडनविधौ मां प्रत्यपेताशया**
> **या मय्येव लवङ्गिकेत्यवगते सर्वस्वदाथीकृता[10] ॥ ६ ॥**

**अव०**—सखि मालति वल्लभा खलु त इयं बकुलमाला । ततोऽवहिता भव मेदानीमेषा सहसैव परहस्तगता भविष्यतीति । ( सहि मालदि वल्लहा क्खु दे इअं वउलमाला । तदो[11] अवहिदा भव मा दाणिं एसा सहसज्जेव्व परहत्थगदा भविस्सदित्ति । )

---

हृयः ।' इत्यमरः । **अवलोकिता** । अत्र निवेदयन्त्या मालत्या इत्यन्वयः । मालत्या इति षष्ठ्यन्तम् । मालत्याः कृत इत्यर्थः । **माधवः** । अनुयुक्तः पृष्टः । स्वकीयहृदयालोकनमागामिश्लोकस्य रसद्योतनाय । प्रसवः पुष्पम् ॥ **प्रेम्णेत्यादि** । या माला प्रियसख्या लवङ्गिकया हस्तेनोपनीता मद्ग्रथितेति हेतोः प्रेम्णानया मालत्या पीनकुचघटमुकुलस्य भरो यत्र तेन क्रोडेन सह संभाविता संभावनां नीता । ततो नन्दनेन सह विवाहे संप्राप्ते मां प्रति निरस्तप्रत्याशया लवङ्गिकेयमित्यधिगते मय्येव यया सर्वस्वदानं कृतम् । अनेन पूर्वानुरागकथनेन नायिकाविस्रम्भ उक्तः । विस्तारः परिणाहः । कुम्भपदेनोन्नतता कुट्मलपदेन मृदुता भरशब्देन प्रौढिरुक्ता । पाणिपीडनं विवाहः । दीयत इति दायः ॥ ६ ॥ **अवलोकिता** । अत्र

---

१ एतन्नास्ति क्वचित्. २ मोहाविच्छेअं. ३ लाहेण. ४ करेसित्ति. ५ अनया अनु०. ६ साक्षिणी. ७ प्रसव. ८ वा...नीतेति वा. ९ तेप्यथ. १० दायः. ११ एसा दाणिं परस्स हत्थं गमिस्सदि.

**मालती**—प्रियं प्रियसखी मे उपदिशति । ( [1]पिअं पिअसही मे उवदिसदि । )

**अव०**—कथं पदशब्द इव । ( कधं पदसद्दो विअ । )

**माधवः**—( नेपथ्याभिमुखमवलोक्य । ) अये कलहंसकः प्राप्तः ।

**मालती**—दिष्ट्या वर्धसे मदयन्तिकालाभेन । ( दिट्ठिआ वड्ढसि मदअन्तिआल[2]म्भेण । )

**माधवः**—( सहर्षं परिष्वज्य । ) प्रियं प्रियं नः । ( आत्म[3]नः कण्ठादवतार्य बकुलमालां ददाति । )

**अव०**—निर्व्यूढः खलु भगवत्याः संभावनाभारो बुद्धरक्षितया । ( णिव्वूढो क्खु भअवदीए संभावणाभारो बुद्धरक्खिदाए । )

**मालती**—( सहर्षम् । ) अम्महे प्रियसखि लवङ्गिकापि दृश्यते । ( अ[4]म्महे पिअसही लवङ्गिआ वि दीसइ । ) ( इत्युत्तिष्ठति । )

( [5]ततः प्रविशन्ति संभ्रान्ताः कलहंसकबुद्धरक्षितामदयन्तिकालवङ्गिकाः । )

**सर्वाः**—परित्रायतां परित्रायतां महाभागः । अर्धमार्गे खलु नगररक्षिपुरुषाभियोगो मकरन्दस्य जातः । ततस्तत्कालमिलितेन कलहंसकेन समं वयमनुप्रेषिताः । ( परित्ताअदु परित्ताअदु महाभाओ । अद्धमग्गे क्खु णअररक्खिपुरिसाभिओओ मअरन्दस्स जादो । तदो तक्कालमिलिदेण कलहंसएण स[7]मं अह्मे अणुप्पेसिदाओ । )

**कलहंसः**—यथेतोमुखागतैरपि महान् कलकलः श्रुतोऽस्माभिस्तथा तर्कयाम्यन्यदपि पारक्यं बलमुपगतमिति । ( जधा इदोमुहा[8]गदेहिं पि महन्तो कलअलो सुदो अम्हेहिं तधा तक्केमि अण्णं वि पारक्कअं बलं उव[9]गदं त्ति । )

---

येनैव मकरन्दस्य मदयन्तिकालाभः कथनीयस्तेनैवेयं प्राप्या । अतस्त्वमेव तं कथयेति गुप्त्या माधवेन सहात्मानं संभावयेत्याशयः । **मालती** । तथा चाहमेव कथयामीति भावः । **अवलोकिता** । अत्र श्रूयत इति भावः । **मालती** । अत्र मकरन्दस्य मदयन्तिकाविवाहेनेत्यर्थः । इदं वचनं मालत्या माधवं प्रति । **माधवः** । प्रियं न इति । आलापलाभेनातिप्रियमित्यर्थः । **अवलोकिता** । अत्र निर्व्यूढो निर्वाहं नीतः । खलु निश्चये । संभावना प्रतिष्ठा । **मालती** । अम्महे विस्मये । **सर्वाः** । अत्राभियोगः अवस्कन्दः । **कलहंसकः** । अत्र

---

१ सहि पिअं मे उवदिसासि; अस्मात्परं—अवलोइदे उभअं वि तुमं एव्व उवदिस । इत्यधिकमेक० पु०. २ लाहेण. ३ इति बकुलमालां कण्ठे ददाति. ४ अह्मेहिं वि ( अस्माभिरपि ). ५ प्रविश्य संभ्रान्ताः कल० बु० मद० ल० च. ६ लव०. ७ सहिदा. ८ गदेहिं अम्हेहिं कल०. ९ उवागदं.

**मालत्यवलोकिते**—हा धिक् हा धिक् सममेव हर्षोद्वेगसंभेद उपनतः।
( हद्धी हद्धी। सं[1]मं ज्जेव्व हरिसुव्वेअसंभेदो उवणदो । )

**माधवः**—सखि मदयन्तिके स्वागतमेह्येहि । अनुगृहीतमस्मद्गृहं भवत्या । ननु स[2] एवासौ किमित्यस्वस्था भवती । एकाकि[3]नो बहुभिरभियोग इति यत्किंचिदेतद्वयस्यस्य ।

> **हरेरतुलविक्रमप्रणयलालस[4]ः साहसे**
> **स एव भवति क्वणत्कररुहप्रचण्डः सखा ।**
> **स्फुट[5]त्करटकोटरस्खलितदानसिक्तानन-**
> **द्विपेश्वरशिरःस्थि[6]तास्थिदलनैकवीरः करः ॥ ७ ॥**

तदहमपि विक्रान्तप्लु[7]तं विलसतः प्रियसुहृदः प्रत्यनन्तरो भवामि ।

( इति विकटं परिक्रम्य कलहंसकेन सह निष्क्रान्तः । )

**अर्व० लव० बुद्धरक्षिताः**—अपि नामानाहतौ प्रतिनिवर्तिष्येते एतौ महानुभावौ । ( अवि णाम अणाहदा[9] पडिणिव्वट्टिस्सन्दि एदे महाणुहावा । )

**मालती**—सख्यावलोकिताबुद्धरक्षिते त्वरितं गत्वा भगवत्या एतं वृत्तान्तं निवेदयतम् । त्वमपि प्रियसखि लवङ्गिके त्वरितं विज्ञापयार्यपुत्रं यदि तावद्युष्माकं वयमनुकम्पनीयास्ततोऽप्रमत्ताः परिक्रामतेति । ( सहिओ [10]अवलोइदाबुद्धरक्खिदाओ तुरिदं गदुअ भअवदीए एदं उत्तन्दं णिवेदेह[11] । तुमं वि पिअसहि लवङ्गिए विण्णावेहि अज्जउत्तं जइ दाव तुह्माणं अह्मे अणुकम्पणीआओ तदो अप्पमत्ता[12] परिक्कमेद्धत्ति । )

( निष्क्रा[13]न्ता लवङ्गिकाबुद्धरक्षितावलोकिताः । )

---

पारक्यं परकीयम् । **माधवः** । स्वागतं कुशलम् । स एव प्रसिद्धपौरुषः । असौ मकरन्दः । यत्किंचिदिति न गणनीयमित्यर्थः । **हरेरित्यादि** । हरेः सिंहस्य स उक्तगुणः कर एव सखा द्वितीयो भवति । विक्रमे कर्तव्ये । नान्यमत्रापेक्षत इत्यर्थः । करः कीदृशः । अतिपराक्रमप्रश्रये सतृष्णः । शब्दायमाननखैः प्रचण्डः । स्फुटतः करटस्य गण्डस्थलस्य मध्याच्च्युतेन मदजलेन सिक्तमुखहस्तिराजमस्तकस्थितास्थिविदारणे श्रेष्ठवीरः । तथा च सखा मकरन्दः सिंह इव साहसे द्वितीयानपेक्ष इत्यर्थः । 'काकेभगण्डौ करटौ' इत्यमरः । 'निष्कुहः कोटरं वा ना इत्यपि ॥ ७ ॥ विक्रान्तस्य वीरस्य प्लुतं गतिविशेषम् । विलसतः कुर्वतः । प्रत्यनन्तरो द्वितीयः ।

---

१ समकालं. २ स्वस्था भवन्तु भवत्यः. ३ ०नोऽपि. ४ सस्याहवे. ५ स्फुरत्. ६ स्थिरा; कदनास्थिरैकः. ७ विक्रान्तिपूतं-र्वं; विक्रमानुरूपं; न्तिपूतः सुहृदः प्रत्यन्तरी०. ८ अवलोकितादयः. ९ अप्पडिहदा. १० बुद्ध० वलो०. ११ कहेध. १२ ०मत्तं. १३ मालतीमदयन्तिकावर्जं सर्वास्तथेति निष्क्रान्ताः।

**मालती**—हा धिक् हा धिक् । न ज्ञायते कथं वेला गम्यत।मिति । भवतु । प्रियसख्या लवङ्गिकायाः प्रतिनिवृत्तिमार्गमवलोकयन्ती स्थास्यामि । ( परिक्रामति । सातङ्कम् ) स्फुरितं मे वाममवामलोचनेन । ( हद्धी हद्धी । ण जाणीअदि कधं वेला गमिअदुत्ति । होदु । पिअसहीए लवङ्गिआए पडिणिउत्तिमग्गं ओलोअन्ती चिट्ठिस्सम् । फुरिदं मे वामं अवामलोअणेन । ) ( उपविशति । )

( प्रविश्य )

**कपालकुण्डला**—आः पापे तिष्ठ ।

**मालती**—(सत्रासम् ।) हा आर्यपुत्र । ( हा अज्जउत्त । ) ( इत्यर्धोक्ते वाक्स्तम्भं नाटयति । )

**कपाल०**—( सक्रोधहासम् । ) नन्वाक्रन्द ।

**त्वद्वत्सलः क्व स तपस्विजनस्य हन्ता**
**कन्याविटः पतिरसौ परिरक्षतु त्वाम् ।**
**श्येनावपातचकिता वनवर्तिकेव**
**किं चेष्टसे ननु चिरात्कवलीकृतासि ॥ ८ ॥**

यावच्छ्रीपर्वतमुपानीय लवशो लवश एनां निकृत्य दुःखमरणां करोमि । ( इति मालतीमाक्षिप्य निष्क्रान्ता । )

---

**मालती** । [ स्फुरितमिति ] अत्र वाममनिष्टम् । अवामो दक्षिणः । दक्षिणाक्षिस्पन्दनं स्त्रीणामनिष्टसूचकमिति भावः । अनेन कपालकुण्डलाप्रवेशोऽपि सूचितः ॥ **त्वदि-त्यादि** । ननु हे स त्वत्प्रियः क्व वर्तते । तापसजनस्याघोरघण्टस्य घातकः । कन्याया विटोऽतिकामुकोऽसौ त्वां रक्षतु । अत एव पातीति पतिः । यच्चिराय कवलितासि किं चेष्टसे वनवर्तिकेव । श्येनः 'सैवान' इति ख्यातः पक्षी । तस्याव-पातोऽतिवेगस्तेन त्रस्तारण्यवर्तिका यथेत्यर्थः । 'वर्तको वर्तिकादयः' इत्यमरः । अत्र वनग्रहणेन वर्तिकायाः स्वकुलवेष्टितत्वमुक्तम् । एतस्यास्तद्वैपरीत्यमिति भावः । यद्वा वनेनारक्षितत्वेन वर्तिकाया अतिभीरुत्वमुक्तम् । यद्वा वनावस्थानेन वर्तिकाया एकाकिनीत्वमुक्तम् । अत एव मालत्यपि तथेति साम्यम् । नववर्तिकेत्यपि पाठः ॥ ८ ॥ लवशो लवशोऽनेककणान् कृत्वा । आक्षिप्य गृहीत्वा ।

---

१ साशंकम्. २ कधं इयदी; लवंगिका किं चिराअदि कधं एदावदी. ३ अतिक्कमेम. ४ पिअसहिमद०. ५ फुरिदं क्खु मे वामेदरेण; लोअणेण अणेन. ६ ततः प्रविशति कपा०. ७ आक्रन्द आक्रन्द. ८ वल्लभः. ९ नु. १० रक्षति-क्षिता. ११ नव, ०तानन. १२ नेक्षसे ननु मया. १३ उत्तीर्य. १४ प्रतिपर्व तिलशः १५ आदाय; मालत्यासह.

**मद०**—अहमपि मालतीमेवानुगमिष्यामि । (परिक्रम्य) सखि मालति । ( अहं वि मालदीं ज्जेव्व अणुगमिस्सं । सहि मालदि । )

**लव०**—( प्रविश्य । ) सखि मदयन्तिके लवङ्गिका खल्वहम् । ( सहि मदअन्तिए लवङ्गिआ क्खु अहं )

**मद०**—अपि संभावितस्त्वया महाभागः । ( अवि संभाविदो तुए महाभाओ । )

**लव०**—नहि नहि । स खलूद्यानवाटोपनिर्गमादेव कलकलं श्रुत्वा सावक्षेपापविद्धविकटोरुदण्डनिष्ठुरं प्रधाव्य परानीकं प्रविष्टः । ततः प्रतिनिवृत्तास्मि मन्दभागिनी । शृणोमि च गृहे गृहे गुणानुरागनिर्भरस्य पौरलोकस्य हा माधव महानुभाव हा मकरन्द साहसिकेति परिदेवनाः । महाराजोपि किल मन्त्रिदुहित्रोर्विप्रलम्भवृत्तान्तं श्रुत्वा संजातमत्सराधिक्षेपस्तत्क्षणविसर्जितानेकप्रौढपदातिनिवहश्चन्द्रातपेन सौधशिखरस्थितः प्रेक्षत इति मन्त्र्यते । ( णहि णहि । सो क्खु उज्जाणवा[१]डोवणिग्गमादो ज्जेव्व कलअलं सुणिअ सावक्खेवावविद्धवि[२]अडोरुदण्डणि[३]ट्ठुरं पधाविअ पराणीअं पविट्ठो । तदो पडिणिउत्तह्मि मन्दभाइणी । सुणेमि अ घरे घरे गुणाणुराअणिब्भरस्स पोरलोअस्स हा माहव महाणुभाव हा मअरन्द साहसिअ त्ति परिदेवणाओ । महाराओ वि किल मन्तिधीआणं विप्पलम्भवुत्तन्तं सुणिअ संजादमच्छराधिक्खेवो तक्खणविसज्जिदाणेअप्पोढपदाइणिवहो[११] चन्दादवेण सोहसिहरट्ठिदो पेक्खदित्ति मन्तीअदि । )

**मद०**—हा हतास्मि मन्दभागिनी । ( हा हदह्मि मन्दभाइणी । )

**लव०**—सखि मालती पुनः क्व । ( सहि मालदी उण कहिं । )

---

**मदयन्तिका** । अत्रापिः प्रश्ने । संभावितो लब्धः । **लवङ्गिका** । अत्र उपनिर्गमः समीपगमनम् । एतेन मार्गस्य शून्यत्वमुक्तम् । अवक्षेपोऽत्रहेला । अपविद्धम् क्रान्तम् । विशालोरुयुगलदण्डाभ्यां निर्भरं गाढं यथा तथा धावित्वेत्यर्थः । अनीकं सैन्यम् । धिआ दुहिता । विप्रलम्भो वञ्चनम् । चन्द्रातपश्चन्द्रप्रकाशः । मालत्या वियोगदशायां तापकत्वेनानुभवादातप इत्युक्तम् । मन्त्र्यते पौरलोकेनैव । **मदयन्तिका** । अत्र

---

१ अणुवट्टिस्सं. २ पिअसहि. ३ अइ. ४ वाडाणि०. ५ साधिक्खेवं दूरणिक्खेवा०. ६ विअडणिजोरु (निजोरु). ७ णिब्भरं. ८ महाभाअ. ९ मच्छरावेओ. १० पाइक्क. ११ चन्दादवसोहिद(शोभित)सोह०.

**मद०**—सखि सा खलु प्रथममेव ते मार्गमवलोकयितुं प्रसृता। पश्चादहं तां न प्रेक्षे। अपि नामोद्यानगहनं प्रविष्टा भवेत्। (सहि सा क्खु पढमं एव्व दे मग्गं ओलोइदुं पसरिदा। पच्चादो अहं तं ण पेक्खामि। अवि णाम उज्जाणगहणं पविट्ठा भवे।)

**लव०**—सखि त्वरितमन्विष्यावः। अतिकातरा मे प्रियसखी उपस्थितानर्थेऽस्मिन्नवसरे सा न धारयत्यात्मानम्। (त्वरितं परिक्रम्य।) सखि मालति ननु भणामि सखि मालतीति। (सहि तुरिदं अण्णेसह्म। अदिकातरा मे पिअसही उवट्ठिदानत्थे इमस्सिं अवसरे सा न धारेदि अत्ताणं। सहि मालदि णं भणामि सहि मालादि त्ति।) (इतस्ततः परिक्रामतः।)

(प्रविश्य प्रहृष्टः)

**कलहंसकः**—दिष्ट्या कुशलेन वयं निर्गताः संघट्टदुर्गमात्। हीमाणहे प्रक्ष्यामीव निर्मलनिरन्तरोद्धूतधौततरवारिधारापरिस्फुरितचन्द्रकिरणोज्ज्वलभीषणदर्शनं मदलीलाकलितकामपालविकटभुजदण्डाविद्धहलहेलाविक्षुभितोद्वेल्लिततरङ्गकलिन्दतनयास्रोतःसंनिभंविकटविशृङ्खलोत्पतितनिर्दयामन्दमकरन्दव्यतिकरक्षोभविकलप्रतियोधपरिवर्तनोद्गतसमस्तगगनाङ्गनावकाशविशंकलितकलकलं पारक्यबलसमूहम्। स्मरामि च भीषणभुजवज्रजर्जरितपञ्जरावसन्नसुभटहस्तावलुप्तविविधायुधनिवहघातिताशेषरिपुसैन्यदत्तविकटापसाररिक्तमार्गसंचारनिर्वर्तितविषमसमरसाहसं नाथमाधवम्।

---

प्रसृता निर्गता। अहं प्रसृतेत्यन्वयः। अपीत्यादि शङ्कायाम्। **लवङ्गिका**। अत्र नन्वहम्। अव्ययत्वादनेकार्थत्वम्। तथा च मद्वचनमपि न शृणोषीत्यर्थः। **कलहंसकः**। अत्र हीमाणहे इति हे मातरितिवन्नीचस्य हर्षाश्चर्ये। पश्यामीव परबलमित्यन्वयः। धौतो निशितः। तरवारिः खड्गः। विडुरिल्लं भीषणम्। कलितः स्वीकृतः। 'कलिवली कामधेनू' इति शाब्दिकाः। 'कामपालो हलायुधः' इत्यमरः। आविद्धा वक्रं प्रेरिता। हेला क्रीडा। कलिन्दतनया यमुना। संनिभमिति यथा बलेन हलाकृष्टा यमुना प्रतीपमागता तथा परबलमपीति भावः। विस्तारेण वा बलस्य तादृग्यमुनासाम्यम्। विकटं विस्तीर्णं यथा तथा। विशृङ्खलः आपतितः संमुखागतः। निर्दयो निष्करुणः। अमन्दः सत्वरः। व्यतिकरेण मिलनेन क्षोभः। परिवर्तनेन पलायनेन। उद्गत उत्थितः। विशङ्कलितो व्याप्तः। 'दोर्दोषा भुजा भुजः' इति शब्दप्रकाशः। जर्जरितपञ्जरा अत एवापसृताः पलायिताः। ओअल्लोऽपसृतः। हस्तेभ्योऽवलुप्त आच्छे-

---

१ सा. २ उववणट्ठिदा इम०. ३ अरमात्परं **लव—न्तिके**-(त्वरितं परिक्रामन्त्यौ) सहि इ०. ४ विच्छुरित.

( दिट्ठिआ कुसलेण अह्मे णिग्गदा संघट्टदुग्गमादो । हीमाणहे पेक्खामि विअ णिम्मल-णिरन्तरुद्धूदधोदतरवारिधारापरिप्फुरिदचन्दकिरणुज्जलविड्डुरिल्लिदंसणं मदलीलाकलिदकाम-वालविअडभुअदण्डाविद्धहलहेलाविक्खुभिदुव्वेल्लिदतरंगकलिन्दतणआसोतसंणिहं विअड-विसङ्कुलुप्पडिदणिद्दआमन्दमअरन्दव्वइअरक्खोभविअलपडिजोहपरिवत्तणुग्गदसमत्थगअ-णङ्गणावआसविसंकलिदेकलअलं पारक्कबलसंमूहं । सुमरामि अ भीसणभुअवज्जजज्जरि-दपञ्जरावसण्णसुभटहत्थावलुत्तविविहाउहणिअहघातिदासेसरिपुसेण्णदत्तविअडापसाररिक्क-मग्गसंचारणिव्वत्तिदविसमसमरसाहसं णाहमाहवम् । )

अहो गुणानुरागो नरेन्द्रस्य यदिदानीं सौधशिखरावतीर्णप्रतीहारविन-योपन्यासप्रशामितविरोधसंकट उपनीतमाधवमकरन्दमुखचन्द्रयोर्वारंवारं संचारितस्निग्धलोचनः कलहंसकादभिजनं ज्ञात्वा निर्वर्तितमहार्घगुरुबहु-मानः प्रस्फुरन्मत्सरवैलक्ष्यमसीमलिनितमुखौ भूरिवसुनन्दने मधुरवचनो-पन्यासेन किमिदानीं युवयोर्भुवनाभोगभूषणाभ्यां महानुभावाभ्यां नवयौवन-गुणाभिरामाभ्यां जामातृभ्यामपरितोष इति प्रतिबोध्य गतोऽभ्यन्तरं राजा । इमावपि माधवमकरन्दावागच्छतः । अहमपि भगवत्या इमं वृत्तान्तं निवेदयामि । ( अहो गुणाणुराओ णरिन्दस्स जं दाणिं सोधसिहरावदिण्णपडिहारविण-ओवण्णासपसमिदविरोहसंकडो उवणीदमाहवमअरन्दमुहचन्दे वारंवारं संचारिदसिणिद्ध-लोअणो कलहंसआदो अहिजणं जाणिअ णिव्वत्तिअमहग्घगुरुबहुमाणो पप्फुरन्तमच्छर-वेलक्खमसीमलिणिदमुहे भूरीवसुणन्दणे महुरवअणोवण्णासेण किं दाणिं तुह्माणं भुवणा-भोअभूसणेहिं महाणुहावेहिं णवजोव्वणगुणाभिरामेहिं जामादुकेहिं अपरितोसो त्ति पडिबोधिअ गओ अब्भन्दरं राआ । इमे वि माहवमअरन्दा आअच्छन्दि । अहं वि भअवदीए इमं उत्तन्दं णिवेदेमि । ) ( इति निष्क्रान्तः । )

---

दितः । विकटो विषमः । अपसारः पलायनम् । रिक्तः शून्यः । **सौधेति ।** प्रतीहारेण सौधाग्रादवतीर्य तयोः स्वरूपं ज्ञात्वा तदुपन्यासः कृत इत्यर्थः । अभि-जनो वंशः । बहुमानः संमानः । तावानीय दृष्ट्वा तयोः सापराधयोरपि गुणानुरागा-

---

१ ह्मि णिग्गदो...दुग्गमगादो. २ रव्वुत्त ( रोद्वृत्त. ) ३ पडिफलि ( प्रतिफलित–टी० ). ४ ज्जलरमणीयभीसण; ज्जुलन्तपिञ्जरिअभीसण. ५ ओसरन्त ( अवसरत् ); विअसन्दको-लाहलम्. ६ पाइक्कसमूहं. अस्मात्परं–दाणिं वि पेक्खामि विअ. इत्यधिकं क्वचित्. ७ रोवसण्ण; भुजवज्जखचितपञ्जरपज्जत्थसमरविमुह. ८ उद्दोपमद्दसमोसारिअसेणिअणिअरं पाइक्करिक्क ( युधोपमर्दसमवसारितसैनिकनिकरं पदातिरिक्त ). ९ सिहरंतरिदात. १० विरोहो सोमेक्करसोवणीद. ११ चन्दे ओलोइअ. १२ पसारिद. १३ सुणिअ. १४ महुरोवण्णासेण,–सेहिं. १५ दर्शन; नव–अभिजन.

( ततः प्रविशतो माधवमकरन्दौ । )

**मक०**—अहो प्रेयसः सर्वपुरुषातिशायि निर्व्याजमूर्जितं तेजः । तथा हि ।

**दोर्निष्पेषविशीर्णसंचयदलत्कङ्कालमुन्मथ्नतः**
**प्राग्वीराननुपत्य तत्प्रहरणान्याच्छिद्य विक्रामतः ।**
**उद्वेल्लद्बहुनरुण्डखण्डनिकराकीर्णस्य संख्योदधे-**
**र्द्वेधास्तम्भितपत्तिपङ्क्तिविकटः पन्थाः पुरस्तादभूत् ॥ ९ ॥**

**माधवः**—नन्वनुशयस्थानमेतत् । पश्य ।

**अद्यैवेन्दुमयूखखण्डखचितं पीतं निशीथोत्सवे**
**यैर्लीलापरिरम्भदायिदयितागण्डूषशेषं मधु ।**
**संप्रत्येव भवद्भुजार्गलगुरुव्यापारभग्नास्थिभि-**
**र्गात्रैस्ते कथयन्त्यसारविधुरान्प्रायेण संसारिणः ॥ १० ॥**

स्मर्तव्यं तु सौजन्यमस्य नरपतेर्यदपराद्धयोरप्यनपराद्धयोरिव नौ सांप्रतं चेष्टितवान् । तदेहि । मालतीसमक्षमधुना मदयन्तिकाहरणवृत्तान्तं विस्तरतः कथ्यमानं श्रोतुमिच्छामि । तथा च ।

**कथयति त्वयि सस्मितमालतीवलितलोलकटाक्षपराहतम् ।**
**वदनपङ्कजमुल्लसितत्रपास्तिमितदृष्टि सखी नमयिष्यति ॥ ११ ॥**

---

दतिगौरवमेव राज्ञा कृतमिति भावः । न परितोष इति नः शिरश्चालने । **मकरन्दः** । प्रेयसः प्रीतस्य । माधवस्येत्यर्थः । निर्व्याजं वास्तवम् । ऊर्जितं बलवत् । **दोरित्यादि** । प्रेयसो युद्धार्णवस्य पन्था अग्र एवमभूत् । द्वेधा पार्श्वद्वये स्तम्भितया पत्तिपङ्क्त्या भयंकरः । प्रेयसः कीदृशस्य । बाहुसंचूर्णनत्रुटितसंधिस्फुटत्कङ्कालं यथा तथा प्रथमं वीरानुन्मथ्नतोऽभिभवतः । इतरत्र तदीयायुधानि गृहीत्वा पराक्रमं कुर्वतः । इदं विशेषणद्वयं योग्यतया प्रेयस इत्यस्य । संख्योदधेः कीदृशस्य । स्फुरन्नरमुण्डखण्डसमूहव्याप्तस्य ॥ ९ ॥ **अद्येत्यादि** । यै रात्र्युत्सवे चन्द्रकिरणखण्डखचितं क्रीडालिङ्गनदातृवनितागण्डूषावशिष्टं मधु पीतमद्यैव ते संप्रत्येव लोकान्बाहुल्येन तुच्छविकलाङ्गशरीरैः कथयन्ति । कीदृशैः । त्वदीयभुजार्गलप्रबलताडनात्त्रुटितास्थिभिः । तथा च क्षणदृष्टमुग्धचेष्टिताः प्राक्तनकर्मायत्ता जना इति भावः ॥ १० ॥ **कथयतीत्यादि** । त्वयि कथयति सति वदनपद्मं सखी मालत्या एव मदयन्तिका नमयिष्यति । कीदृशम् । सहासमालतीचञ्चलपक्ष्मकटाक्षैः पराहतम् । उद्गतलज्जानिश्चलदृष्टि च । मदयन्तिकानिमित्तयुद्धश्रवणेन

---

१ गलत्. २ अनुपात्य. ३ छन्नरिरुण्ड; रुण्ड-तु-मु-ण्ड. ४ वयस्य ननु. ५ निचितं. ६ तैः. ७ भिदुरान्. ८ अपराधिनोः. ९ कृतोपसदनं, कृतप्रसादम्. १० चलित. ११ त्रपं, सितभ्रु ततः.

( इति परिक्रामतः । ) अयमसावुद्यानवटः । ( प्रविशतः । )

**माधवः**—कथं शून्य एव दीर्घिकाप्रदेशः ।

**मकरन्दः**—वयस्य नूनमस्मद्व्यतिकरोद्वेगपर्याकुलत्वादितस्ततः परिभ्रमन्त्य आत्मानमत्रैवोद्यानगहने विनोदयन्त्यो भविष्यन्ति । तदेहि पश्यावः ।

( उभौ परिक्रामतः । )

**लवङ्गिकामदयन्तिके**—सखि मालति । ( सहसावलोक्य सहर्षम् । ) दिष्ट्या पुनरप्येतावनाहतौ महानुभावौ दृश्येते । ( सहि मालदि । ) ( दिठ्ठिआ पुणो वि एदे अणाहदा महाणुभाआ दीसन्ति । )

**माधवमकरन्दौ**—भवत्यौ क्व मालती ।

**उभे**—कुतो मालती । पदशब्देनावां विप्रलब्धे मन्दभागिन्यौ । ( कुदो मालदी । पदसद्देण अह्मे विप्पलद्धाओ मन्दभाइणीओ । )

**माधवः**—भवत्यौ कथं कथमपि सहस्रधैव विध्वंसते मे हृदयमतः स्पष्टमभिधीयताम् ।

> **मम हि कुवलयाक्षीं प्रत्यनिष्टैकबुद्धे-**
> **र्भृशमयमनुबद्धात्कम्प एवान्तरात्मा ।**
> **स्फुरति च खलु चक्षुर्वाममेतच्च कष्टं**
> **वचनमिह भवत्योः सर्वथा हा हतोऽस्मि ॥ १२ ॥**

**मद॰**—तया खल्वितो निर्गते महानुभावे बुद्धरक्षितामवलोकितां च भगवतीसकाशं विसृज्याप्रमादानिमित्तं विज्ञापयार्यपुत्रमिति लवङ्गिकानुप्रेषिता । तत उत्ताम्यमानैतस्या मार्गमवलोकयितुमग्रतः

---

मालत्या हासः ॥ ११ ॥ **लवङ्गिकामदयन्तिके** । अत्रानेनावाभ्यां समर्थिता मालती । अधुना तु युवयोरवलोकनेनावां वञ्चिते इत्यर्थः । **माधवः** । कथमिति त्रासे । कथमप्यनिर्वचनीयेन रूपेण ध्वंसते । स्थितिं न बध्नाति । **ममेत्यादि** । यतोऽयं ममान्तरात्मात्यर्थमनुगतोत्कम्प एवास्ति । कीदृशस्य । पद्माक्षीं प्रत्यनिष्टैकमतेः । मम वामं चक्षुः स्फुरति च । इह भवत्योर्वचनम् । कष्टमेतद्दुःखदायि । हा कष्टे । सर्वथा हतोऽस्मि । अन्तरात्मनोऽशकुनस्य भवद्वचनस्य चैकमत्यादिति भावः ॥ १२ ॥ **मदयन्तिका** । अत्र पश्चादावां प्रसृते इत्यन्वयः । विचितान्य-

---

१ शून्या इवामी–इदानीमिमे–प्रदेशाः. २ नूनं शङ्के आवयोः समरसंकटोद्वेगेन व्याकुलत्वात्. ३ विनोदयन्ति. ४ विलोक्य. ५ क्वासौ, क्व सा. ६ कथमिव सहसैव. ७ नो. ८ द्रवति हृदयमन्तर्भ्रश्यती० ९ हि...चक्षुः स्पष्टमेतच्च वामं. १० नमपि.

प्रसृता । पश्चादहम् । ततो न प्रेक्षे । तत आवाभ्यां यावद्विटपान्तराणि विचितानि तावद्युवां दृष्टाविति । ( तए क्खु इदो णिग्गदे महाणुहावे चुद्धरक्खिदं अवलोइदं अ भअवदीसआसं विसज्जिअ अप्पमादणिमित्तं विण्णवेहि अज्जउत्तं त्ति लवङ्गिआ अणुप्पेसिदा । तदो उतम्ममाणा एदाए मग्गं ओलोइदुं अग्गदो पसरिदा[1] । पच्चादो अहं । तदो ण पेक्खामि । तदो अह्मेहिं[3] जाव विडवन्दराइं विजिणिदाइं ताव तुह्मे दिट्ठत्ति । )

**माधवः**—हा प्रिये मालति

**किमपि किमपि[4] शङ्के मङ्गलेभ्यो यदन्य-**
**द्विरमतु परिहासश्चण्डि पर्युत्सुकोऽस्मि ।**
**कलयसि[5] कलितोऽहं वल्लभे देहि वाचं**
**भ्रमति हृदयमन्तर्विह्वलं निर्दयासि ॥ १३ ॥**

**उभे**—हा प्रियसखि क्वासि । ( हा पिअसहि कहिं सि[6] । )

**मक०**—वयस्य किमित्यविज्ञाय वैक्लव्यमवलम्ब्यते ।

**माधवः**—सखे त्वमपि किं न जानासि माधवस्नेहदुःखितायास्तस्याः[7] कातर्यचेष्टितानि ।

**मक०**—अस्त्येतत् । किं तु भगवतीपादमूलगमनमप्याशङ्क्यते । तदेहि[8] तत्र तावत्पर्यावः ।

**उभे**—एतदपि संभाव्यते । ( इदं[9] वि संभावीअदि । )

**माधवः**—एवं नामास्तु । ( इति परिक्रामति[10] । )

**मकरन्दः**—( विचिन्त्य स्वगतम् । )

---

न्विष्टानि । **किमपीत्यादि** । मङ्गलेभ्योऽन्यदनिष्टं किमप्यनिर्वचनीयं यद्यस्मात्परिहासादहं शङ्के स परिहासो विरमतु । परिहासेन तव निह्नवेऽनिष्टं शङ्केऽतस्त्वं मुञ्चेति भावः । हे चण्डि कोपने समुत्सुकोऽस्मि यतः । तथा च कोपेनापि निह्नवं मा कुर्वित्याशयः । अथ मामनेन प्रकारेण कलयसि जिज्ञाससे तर्हि कलितो ज्ञातोऽहम् । हे वल्लभे वाचं देहि । त्वमेव वल्लभा । अतो वदेत्यर्थः । विह्वलमधीरं सन्मम चित्तमन्तर्भ्रमति स्थितिं न लभते । अत एव सोपालम्भमाह निष्करुणासि ॥ १३ ॥ **मकरन्दः** । वैक्लव्यं दुःखितत्वम् । **माधवः** । कातर्यं कातरत्वं तेन चेष्टितानि

---

१ ०रिदा मालती. २ पच्छादो अह्मे न तां पेक्खामो. ३ अह्मेहिं मग्गिदा एत्थ विड० जाव तुह्मे. ४ मनसि. ५ कलय विक०. ६ गदासि. ७ मत्स्नेह. ८ गच्छाव. ९ एवं. १० सर्वे परिक्रामन्ति.

याता भवेद्भगवतीभवनं[1] सखी नो[2]
जीवन्त्युपेष्यति[3] न वेत्यभि[4]शङ्कितोऽस्मि ।
प्रायेण बान्धवसुहृत्प्रियसंगमादि
सौदामनीस्फुरणचञ्चलमेव सौख्यम् ॥ १४॥

( इति निष्क्रान्ताः सर्वे । )

## इति मालत्यपहारो नामाष्टमोऽङ्कः ।

---

प्राणत्यागादीनि । **यातेत्यादि** । अस्माकं सखी भगवतीगृहं यदि गता भवेत्तदा जीवन्ती समागमिष्यति । न वा गता तदा नागमिष्यतीत्याशङ्कितोऽस्मि । तत्र हेतुः । बन्धुजनमित्रप्रियाणां संगम आदौ यस्य तत्सौख्यं बाहुल्येन विद्युत्स्फुरणचञ्चलमेव भवति । तदिह भगवतीपादमूलेति साधारणपदोल्लेखेन मालत्या भविष्यत्सौदामिनी-पार्श्वगमनस्य सूचनेन नवमाङ्कावतारोऽपि सूचितः । अत एवाङ्कावतारोऽयम् । यदाह—'समाप्यमान एकस्मिन्नङ्केऽन्यस्य च सूचनम् । समासतो हि नाट्यज्ञैरङ्कावतार उच्यते' ॥ सुहृन्मित्रम् । प्रियं प्रीतिविषयं मनोज्ञं वस्तु ॥ १४ ॥

सूते स्म यं रत्नधरोऽतिमान्यो मान्यातिमान्या मदयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्को गतोऽष्टमोऽयं रसरम्यरूपः ॥

## इत्यष्टमोऽङ्कः ।

---

१ सदनं. २ सा. ३ त्यथैष्यति. ४ चेत्य., त्युपश०

# नवमोऽङ्कः ।

( ततः प्रविशति सौदामिनी । )

**सौदामिनी**—एषास्मि सौदामिनी भगवतः श्रीपर्वतादुत्पत्य[1] पद्मावतीमुपाश्रिता । मालती[2]विरहिणः संस्तुतप्रदेशदर्शनासहिष्णोः संस्त्यायं परित्यज्य सह सुहृद्वर्गेण बृहद्द्रोणीशैलकान्तारप्रदेशम्[3]अधितिष्ठतो माधवस्याधुनान्तिकं प्रयामि । भोस्तथाहमुत्पतिता यथा सकल एष गिरिनगरग्रामसरिदरण्यव्यतिकरश्चक्षुषा परिक्षिप्यन्ते[4] । ( पश्चाद्विलोक्य । )

**पद्मावती विमल[5]वारिविशालसिन्धु-**
**पारासरित्परिकरच्छलतो बिभर्ति ।**
**उत्तुङ्गसौध[6]सुरमन्दिरगोपुराट्ट-**
**संघट्टपाटितविमुक्तमिवान्तरिक्षम् ॥ १ ॥**

अपि च ।

**सैषा विभाति लवणा[7] ललितो[8]र्मिपङ्क्ति-**
**रभ्रागमे जनपदप्रमदाय यस्याः ।**
**गोगर्भिणीप्रियनवोलपमालभारि-**
**सेव्योपकण्ठविपिनावलयो भवन्ति[9] ॥ २ ॥**

---

अधुना पूर्वसूचितसौदामिन्या मालतीजीवननिवेदनेन माधवप्रत्युज्जीवनाय प्रवेशमाह—**तत इति** । नानासिद्धिस्थानत्वेन देवतात्मकतया भगवत्पदं श्रीपर्वते । संस्तुतः परिचितः द्रोणी नद्या मध्यम् । तथेत्यनेनोत्पतनस्य दूरत्वमुक्तम् । व्यतिकरः समूहः । परिक्षिप्यत इव नेत्रमण्डले प्रविष्टीक्रियत इव । **पद्मावतीत्यादि** । पद्मावती पुरी गगनमिव धारयति । विमलवारिरच्छजला महती सिन्धुश्च पारा च सरितौ तयोः परिकरो वेष्टनं तद्व्याजात् । उच्छ्रितप्रासाददेवकुलपुरद्वाराट्टालिकानां घर्षणेनादौ विदीर्णं ततो विशेषेणोभयतस्त्यक्तम् । उत्तुङ्गसौधादय आकाशं पाटयित्वा निर्गताः । अथ नदीच्छलेन तदाकाशं पतितमिवेत्यर्थः ॥ १ ॥ **सैषेत्यादि** । सैषा लवणा नदीभेदो विभाति । मनोज्ञकल्लोलावलिः । वर्षासु यस्या गवां गर्भिणीनां प्रिया नवा योलपमाला तृणविशेषराजिस्ता बिभ्रति । ताच्छील्ये णिनिः । अत एव सेव्याः परिशीलकसुखदाः समीपवनपङ्क्तयो लोकहर्षाय भवन्तीति । सैषेत्यनेन पूर्वदृष्टत्वमुक्तम् । अपो बिभर्तीत्यभ्रम् । अभ्रति गच्छति ।

---

१ दुपेत्य. २ तत्र मा०. ३ शमुपश्रुत्याधुना; प्रवेशो माधवस्य तदन्तिकमनुप्रयामि. ४ परिषिच्यते. ५ त्रिपुल. ६ पुरगोपुरमन्दिरा. ७ वरदा. ८ चलितो०, वालितो. ९ विभान्ति.

( अन्यतोऽवलोक्य । ) अयमसौ भगवत्याः सिन्धोर्दारितरसातलस्तटप्रपातः ।

**यत्रत्य एष तुमुलध्वनिरम्बुगर्भ-**
**गम्भीरनूतनघनस्तानितप्रचण्डः ।**
**पर्यन्तभूधरनिकुञ्जविजृम्भमाणो**
**हेरम्बकण्ठरसितप्रतिमानमेति ॥ ३ ॥**

एताश्च चन्दनाश्वकर्णकेसरपाटलाप्रायतरुगहनाः परिणतमालूरसुरभयोऽरण्यगिरिभूमयः स्मारयन्ति खलु तरुणकदम्बजम्बूवनावनद्धान्धकारगुरुनिकुञ्जगम्भीरगह्वरोद्गारगोदावरीमुखरितास्निग्धविशालमेखलाभुवो दक्षिणारण्यभूधरान् । अयं च मधुमतीसिन्धुसंभेदपावनो भगवान्भवानीपतिरपौरुषेयप्रतिष्ठः सुवर्णबिन्दुरित्याख्यायते । ( प्रणम्य । )

**जय देव भुवनभावन जय भगवन्नखिलवरद निगमनिधे ।**
**जय रुचिरचन्द्रशेखर जय मदनान्तक जयादिगुरो ॥ ४ ॥**

---

वेत्यभ्रम् । अतो बकारयुक्तं तत् । अयुक्तं चेदं पदमित्यवधेयम् । चतुष्पादो गर्भिण्येति समासः । ‘ उलपो नाम तृणान्तरे ’ इति मेदिनीकरः । मालभारीत्यत्र ‘ इष्टकेषीकमालानां चिततूलभारिषु ’ इति ह्रस्वः ॥ २ ॥ रसातलतटः पृथ्वीतटः । तलशब्दः स्वरूपे । प्रपातोऽतटम् । यद्वा तटे प्रपातोऽतिशयितं पतनम् ॥ **यत्रत्येत्यादि** । यदीय एष महाध्वनिः सिन्धोः पर्यन्तगिरिकुञ्जेषु वर्धमानो विघ्नेशगलध्वनिसाम्यं गच्छति । तस्य गजास्यत्वेन गभीरध्वनित्वात् । कीदृशः । जलपूर्णगभीरनवमेघध्वनिवत्प्रचण्डः । ‘ तुमुलो महति स्मृतः ’ इति विश्वः ॥ ३ ॥ चन्दनं रक्तचन्दनं देवदारुर्वा । उपचारात् । अन्यथास्य मलयजत्वविरोधात् । अश्वकर्णो वृक्षभेदः । प्रायःशब्दः प्रभृत्यर्थो बाहुल्यार्थो वा । परिणतं पक्कम् । मालूरं बिल्वफलम् । तरुणो वृक्षभेदः । अवनद्धो धृतः । उद्गारः प्रतिशब्दः । गोदावरीनदीभेदः । मेखला नितम्बः । भूधरान्मलयादीन् । सौदामिन्या दक्षिणदेशवासित्वेन स्मरणम् । मधुमतीसिन्ध्वोर्नद्योः संभेदः संगमस्तस्य पावनः पावित्र्यहेतुः । स्वयंभूसंनिधानस्य महातीर्थहेतुत्वात् । अपरिमिताज्ञाता पुरुषकृता प्रतिष्ठा स्थितिर्यस्य । एतेन स्वयंभूतत्वमुक्तम् । आख्यानं प्रसिद्धिः ॥ अदृष्टार्थं शिवनुतिमाह—**जयेति** । भुवनानां कार्यजातानां भावन उत्पादक । दीव्यतीति देव द्युतियुक्त । भगवन् भगं तत्वज्ञानं तद्युक्त । तथा च रागद्वेषादिरहित इत्यर्थः । स्तुतिफलमाह–अखिलवरान्भुक्तिमुक्त्यादीन्ददाति तादृशो निगमो वेदस्तन्निधे तत्कर्तः । यद्वा निगम आविर्भावस्तदाश्रय । तथा च । वेदद्वाराविर्भावेन जगदुपकारक इत्यर्थः ।

---

१ विलोक्य. २ स एष. ३ तुमुलः ४ म्भणेन. ५ रणित. ६ सरल. ७ वबद्ध. ८ गुरुगिरिनिकुञ्जगुञ्जद्गम्भीरगह्वरोद्गारघोरघोषणगोदा. ९ सकल. १० न्नाखिल०, निखिलवाङ्गिगम. ११ जय जया.

( गमननमभिनीय । )

अयमभिनवमेघश्यामलोत्तुङ्गसानु-
मदमुखरमयूरीमुक्तसंसक्तकेकः।
शकुनिशबलनीडानोकहस्निग्धवर्ष्मा
वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ ५ ॥

अपि च।

दधाति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ ६ ॥

( ऊर्ध्वमवलोक्य । ) अये कथं मध्याह्नः । तथा ह्यत्र संप्रति

काश्मर्याः कृतमालमुद्गतदलं कोयष्टिकष्टीकते
तीराश्मन्तकशिम्बिचुम्बिनमुखा धावन्त्यपः पूर्णिकाः।
दात्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थितं
वीरुन्नीडकपोतकूजितमनुक्रन्दन्त्यधः कुर्कुभाः ॥ ७ ॥

---

मनोज्ञचन्द्रभूषण । तथा च वेदकारणाय कृतशरीरपरिग्रह इत्यर्थः । तर्हि पौरुषेयत्वाद्वेदाप्रामाण्यं स्यादित्यत आह—मदनेति । सर्वदोषनिधेः कामस्य नाशन निर्दोष । अत एव भगवन् । तथा च नोक्तदोषः । आदौ सर्गादौ गुरो । ब्रह्मादीनामित्यर्थात् । तथा च वेदस्य भगवत्कर्तृत्वमायाति ॥ ४ ॥ **अयमित्यादि** । अयं गिरिर्नेत्रयोर्हर्षं ददाति । कीदृशः । नवीनमेघश्यामतुङ्गसानुः । हर्षप्रीतमयूरस्त्रीकृता संसक्ता मिलिता केका मयूरवाणी यत्र सः । शकुनिभिः पक्षिभिः शबला कर्बुरा ये नीडानोकहाः पक्षिवासवृक्षास्तैः स्निग्धं वर्ष्म शरीरं यस्य सः । तरूणां पक्षिव्याप्तत्वेनाशेषपक्षिणो नीड एव वसन्तीति भावः । बृहदश्मा विपुलशिलः । 'केका वाणी मयूरस्य' इत्यमरः । 'शबलैताश्च कर्बुरः' इति च । कुलायो नीडमस्त्रियाम्' इति च । 'अनोकहः कुटः शालः' इति च । 'शरीरं वर्ष्म विग्रहः' इति च ॥ ५ ॥ **दधतीत्यादि** । अत्र गिरौ गुहावासिनां तरुणभल्लूकानामम्बूकृतानि सश्लेष्मकघूत्कारध्वनयोऽनुरसितेन प्रतिरवेण स्थूलानि स्त्यानं घनतां दधति । शल्लकीनां वृक्षभेदानां गजखण्डितविस्तीर्णसंधिपर्वनिर्गतगन्धः स्त्यायते निविडीभवति । निष्यन्दः स्पर्शाच्छिशिरः शीतो रसतः कटुः कषायः । स्त्यानमिति भावप्रधानो निर्देशः । 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः ॥ ६ ॥ **काश्मर्या इत्यादि** । गम्भार्याः सकाशात्कृतमालमारग्वधवृक्षमुद्भूतपत्रम् । घनच्छायमिति यावत् ।

---

१. मयूरा०. २ नीला. ३ स महीयान्. ४ भाजां मत्तभ०. ५ शल्ल०. ६ तीरात्तबिक, तीराश्मा०; श्मान्तरकच्छ०. ७ तिलिशस्य. ८ कुक्कुटाः.

तद्भवतु । माधवमकरन्दावन्विष्य यथाप्रस्तुतं साधयामि । ( इति निष्क्रान्ता । )

विष्कम्भकः[2] ।

( ततः प्रविशतो[3] माधवमकरन्दौ । )

मक०—( सकरुणं निःश्वस्य । )

न यत्र प्रत्याशामनुपतति नो वा[4] रहयति
प्रविक्षिप्तं[5] चेतः प्रविशति च मोहान्धतमसम् ।
अकिंचित्कुर्वाणाः पशव इव तस्यां[6] वयमहो
विधातुर्वामत्वाद्विपदि परिवर्तामह इमे ॥ ८ ॥

---

कोयष्टिकः ‘ कोवा ’ इति ख्यातः पक्षी टीकते गच्छति । गम्भार्या अल्पपत्रत्वात् । यद्वा कृता संपन्ना माला वृक्षपङ्क्तिर्यत्र तं प्रदेशं गच्छतीत्यर्थः । तीरस्थोऽश्मन्तकस्तीराश्मन्तकः । शाकपार्थिवादिः । ‘ अश्मन्तकोल्लकोला ’ इति ख्यात आम्रातको वा वीरणं वा । तस्य शिम्बिः शिखा लताभेदो वा तस्याश्चुम्बिनं चुम्बनकरणं मुखं यासां तादृशाः पूर्णिकाः पक्षजातयः अपः पानीयानि धावन्ति गच्छन्ति । ग्रीष्मतप्तास्ता नीडं विहाय जलमनुगच्छन्तीत्यर्थः । यद्वा तीराश्मन्तकं तीरवर्ति वीरणमपःपूर्णिकाः कुम्भीरमक्षिका धावन्ति व्रजन्ति । ग्रीष्मतप्तजलं त्यक्त्वा तीरवीरणादिच्छायामनुसरन्तीत्यर्थः । यद्वा अश्मन्तकं शिंशिपावृक्षस्तस्य शिम्बिरग्रमित्यर्थः । तिनिशस्यातिमुक्ताख्यवृक्षस्य छिद्रवति स्कन्धे प्रकाण्डे छायासेवनार्थं दात्यूहैः पक्षिभेदैः ‘ कोण्डाडाडक ’ इति ख्यातैर्निलीय स्थितम् । वीरुल्लता नीडं वासो यस्य कपोतस्य पाण्डुनामपक्षिणः शब्दितं लक्षीकृत्य कुक्कुभा अधस्तरूणां रुदन्ति । ग्रीष्मतापात्कपोता निजनीडवासिनः कुक्कुभाश्च तृषार्ता रुदन्तीत्यर्थः । जातिस्वभाव एवासौ । यद्वा कुक्कुभाः क्रन्दन्त्याह्लादयन्ति । अहो कपोतरुतमित्यभिलषन्तीत्यर्थः । ‘ गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका । ’ इत्यमरः । ‘ आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः । आरेवतव्याधिघातकृतमालसुवर्णकाः । ’ ॥ इति च । ‘ कोयष्टिकष्टिट्टिभकः ’ इत्यपि । आम्रतकेऽम्लिकायामश्मन्तको वीरणेऽपि च । शिंशिपाश्मन्तकं प्राहुः’ इति धरणिः । शिम्बिः शिखा लताभेदः’ इति विश्वः । ‘ नासाच्छिन्न्यां तु पूर्णिका ’ इति च । पूर्णिका पल्लीति ख्याता पतविङ्केति ख्याता वा । ‘ अपःपूर्णिका कुम्भीरमाक्षिका ’ इत्यपि धरणिः । दात्यूहः कालकण्टकः ’ इत्यमरः । ‘ तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः । ’ इति च । ‘ अस्त्री प्रकाण्डः स्कन्धः स्यात् ’ इति च । ‘ तित्तिरिः कुक्कुभो लावः’ इति च । मयूरप्रमाणोऽयं पक्षी ॥ ७ ॥ तदित्युपसंहारे । **विष्कम्भक इति** । शुद्धविष्कम्भकोऽयम् । यदाह—‘ शुद्धो मध्यमपात्रेण संस्कृतोक्त्या निबध्यते ’ ॥ इति । **न यत्रेत्यादि** । यैरस्माभिस्तादृशं राजसैन्यं जितमिमे वयं स्रष्टुर्वाम्याद्विपत्तौ पुनःपुनर्वर्तामहे ।

---

१ यावत. २ शुद्धवि०. ३ प्रविशति मा० म०इश्च. ४ वाहयति च. ५ प्रतिक्षिप्तं. ६ तस्याः.

**माधवः**—हा प्रिये मालति क्वासि । कथमविज्ञाततत्त्वमद्भुतं झटिति पर्यवसितासि । नन्वकरुणे प्रसीद । संभावय माम् ।

प्रियमाधवे किमसि मय्यवत्सला
ननु सोऽहमेव यमनन्दयत्पुरा ।
स्वयमागृहीतकमनीयकंकण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ ९ ॥

वयस्य मकरन्द दुर्लभः पुनर्जगति तावतः स्नेहस्य संभवः ।

सरसकुसुमक्षामैरङ्गैरनङ्गमहाज्वर-
श्चिरमाविरतोन्माथी सोढः प्रतिक्षणदारुणः ।
तृणमिव ततः प्राणान्मोक्तुं मनो विधृतं तया
किमपरमतो निर्व्यूढं यत्करार्पणसाहसम् ॥ १० ॥

---

यत्र विपत्तौ चित्तम् । कर्तृ । प्रत्याशां नानुगच्छति न वा त्यजति । अन्वयव्यतिरेकानिश्चयात् । तथा च सा जीवति न वेति न ज्ञायत इति भावः । रहत्यागे स्वार्थे णिच् । प्रतिक्षिप्तं पुनः पुनः प्रेरितं सच्चेतः पुनर्मोहरूपगाढान्धकारं प्रविशति । किं कर्तव्यमिति न जानीम इति भावः । अत एव काममप्यर्थक्रियामकुर्वाणाः पशव इव ॥ ८ ॥ **माधवः** । यत एवाविज्ञातं तत्त्वमत एवाश्चर्यम् । पर्यवसिता समाप्तिं गता । संभावयाश्वासय । **प्रियेत्यादि** । हे प्रियमाधवे मयि किमस्निग्धासि । माधवान्यशङ्कामपयनति—ननु हे अहमेव स यं पूर्वं तव करः स्वयमनन्दयत् । तथा च माधवान्यशङ्कामपि मा कृथा इति भावः । आगृहीतमीषद्गृहीतं सात्विककम्पादिना चपलतया मनोज्ञसूत्रं येन सः । यद्वा आगृहीतमभिगृहीतं करसमर्पणात् । अत एव मूर्तिमान्कृतदेहपरिग्रहो महोत्सव इव । सोऽपि गृहीतमण्डनो नन्दकश्च भवति । उद्गृहीतमिति पाठ उच्चैर्गृहीतमित्यर्थः । 'कङ्कणं मण्डने सूत्रे' इति विश्वः । तादृशस्येत्यनुस्मृतिः करग्रहणमहोत्सवानुध्यानस्वास्थ्यात्तदभ्यासाद्वा । यदाह—'स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसंभवानुस्मृतिः' ॥ इति ॥ ९ ॥ **सरसेत्यादि** । तया काममहाज्वरोऽवस्थादशको बहुकालं सोढः । अनङ्ग एव महाज्वर इति वा । नवपुष्पमृदुभिरङ्गैः । कीदृशः । संततमर्मव्यथाकारी । अत एव प्रतिमुहूर्तमुन्मूलनोद्यतः । एतेन दुःसहत्वमुक्तम् । ततः प्राणांस्त्यक्तुं तया मनो विशेषेण निरपेक्षतया धृतम् । अत एव तृणमिव । सारमाह—इतः करार्पणसाहसादपरं किमस्ति । अपि तु न किमपीत्यर्थः । यत्करस्यार्पणं स्वयमेव दानं तदेव साहसं निर्व्यूढं निःशेषेण दोषमपहाय वृत्तम् । कुलकन्यकानां तन्निषेधात्साहसत्वम् । तृणमिवेत्यत्र लिङ्गवचनभेदे नोपमादोषो भवति ।

---

१ क्वासि देहि मे प्रतिवचनं कथ०. २ द्रुततमं. ३ अयमा. ४ पुनस्तादृशस्य स्नेहस्य, पुनः खलु. ५ सरल. ६ मितो.

**त्वया सह न याति[1] योत्र दिवसोपि स ध्वंसतां**
**प्रमोद[2]मृगतृष्णिकां धिगपरत्र या[3] जायते ॥ ३५ ॥**

**मक०**—अये उन्मादमोहान्तरितोऽपि मां[4] प्रति कुतश्चिद्व्यञ्जका[5]-त्प्रबुद्ध एवास्य सहजस्नेहसंस्कारः । तद[6]संनिहितमेव मां मन्यते । ( पुरः[7] स्थित्वा । ) एष पार्श्वचर एव ते मकरन्दो[8] मन्दभाग्यः ।

**माधवः**—हा प्रियवयस्य संभावय परिष्वजस्व माम् । प्रियां तु मालतीं प्रति निराशः[9] परिश्रान्तोस्मि । ( इति मूर्च्छति । )

**मक०**—( सहर्षम् । ) एष[10] संभावयामि जीवितेश्वरम् । ( विलोक्य सकरुणम् । ) हा कष्टम् । आविर्भूतमत्परिष्वङ्गोत्कण्ठ[11] एव निश्चेतनः संवृत्तः । तत्कृतमिदानीं [12]जीविताशाव्यसनेन । सर्वथैव मे नास्ति वयस्य इति युक्तः परिच्छेदः । हा वयस्य

**यत्स्नेहसंज्वरवता हृदयेन नित्य-**
**माबद्धवेपथु विनापि निमित्तयोगात् ।**
**त्वद्व्या[13]पदो गणयता भयमन्वभावि**
**तत्सर्वमेकपद एव मम प्रशान्तम्[14] ॥ ३६ ॥**

---

हेतुः । धिगेव रमणीयवस्त्वनुभवान्वृथाभाविन इति मुख्यः पाठः । रम्यपदार्थविषयानुभवान्निष्फलोत्पादशीलान्धिक् । रमणीयवस्त्वनुभवादिति पाठे वृथाभाविनोऽनुभवाद्रम्यवस्तु धिक् । निष्फलं तज्ज्ञानमित्यर्थः । धिगेव रमणीयतां त्वदनुभावभावादृत इति पाठे मम सौन्दर्यादिकं धिक् । कुतः । तवानुभावः सहभावस्तत्र भावोऽभिप्रायस्तं विना । यद्वा अनुभावो वागङ्गसत्त्वाभिनये भावः सत्त्वं तं विना । 'वागङ्गसत्त्वाभिनयेऽनुभावस्तु स्मृतो बुधैः' ॥ इति भरतः । भावादित्यृतेयोगे पञ्चमी । त्वया मकरन्देन तया मालत्या च सह यो दिवसो नास्ति सोऽपि दिवसो विलीयताम् । अन्यत्र मालतीमकरन्दाभ्यां या प्रमोदमृगतृष्णा मम जायते तामपि धिक् । युवाभ्यां विना दैवान्मे हर्षोऽप्याभासीभूत इति भावः । अत एव प्रमोदस्य मृगतृष्णाया रूपकेणालीकत्वमुक्तम् ॥ ३५ ॥ **मकरन्दः** । उन्माददशायामनिश्चयाद्यतः कुतश्चिदित्युक्तम् । व्यञ्जकात्संस्काराभिव्यञ्जकात् । प्रबुद्धः उद्बुद्धः ॥ **माधवः** । संभावय पालय । श्रमाद्वैराग्याच्च मूर्च्छत्येतदर्थं निराश इत्युक्तम् । **मकरन्दः** । जीवितेश्वरमित्यनेन तुल्या जीवनसामग्र्युक्ता । निश्चेष्टः प्रलययुक्तजनाकृतिः । परिच्छेदो निश्चयः । **यदित्यादि** । स्नेहरूपसंतापवता

---

१ भाति; यस्तया च दिवसः स विध्वंसतां. २ प्रमोह. ३ का मानुषे. ४ संप्रत्ययं मां प्रत्यप्रतिकूलो यतः कु;० मां प्रत्यविकलः. ५ व्यञ्जनात्. ६ तत्संनि०...मां न. ७ पुरतः. ८ स मक०. ९ ०श एष, निराशपरिश्रमः संवृत्तोस्मि. १० एषोहं. ११ कथमा०, निश्चेष्टः सं०. १२ आशा०. १३ त्वय्या०. १४ प्रणष्टम्.

सखे वरं त एवातिक्रान्ता मुहूर्तास्तथाविधमपि भवन्तं येषु चेतयमानमनुभूतवानस्मि । इदानीं तु

**भारः कायो जीवितं वज्रकीलं**
**काष्ठाः शून्या निष्फलानीन्द्रियाणि ।**
**कष्टः कालो मां प्रति त्वत्प्रयाणे**
**शान्तालोकः सर्वतो जीवलोकः ॥ ३७ ॥**

( विचिन्त्य । ) तत्किं नु खलु माधवास्तमयसाक्षिणा मया भवितव्यमिति[4] जीवामि । भवत्वमुष्माद्गिरिशिखरात्पाटलावत्यां निपत्य माधवस्य[5] मरणाग्रेसरो भवामि । ( किंचित्परिक्रम्य[6] सकरुणं निवृत्यावलोक्य च । ) कष्टं भोः कष्टम् ।

**तदेतदसितोत्पलद्युति शरीरमस्मिन्नभू-**
**न्ममाँ[7]तिदृढपीडनै[8]रपि न तृप्तिरालिङ्गनैः ।**

---

हृदा विनापि भयकारणेन सकम्पं भयं नित्यमन्वभाव्यनुभूतं यत्तत्सर्वं मम भयं त्वदीयविपत्तीर्गणयतः संभावयत एकस्मिन्क्षणे परिसमाप्तम् । कदा ते किं स्यादित्यादिभयं प्रकृतदशया प्रशान्तमिति भावः । एतत्पक्षे गणयतेति पाठे विधिनेत्यर्थात् । यद्वा त्वद्व्यापदो गणयता हृदा यद्भयमनुभूतं तदधुना गतमित्यर्थः । तथा च त्वन्निमितमधुना तु सहेतुकैव विपदिति भावः ॥ ३६ ॥ वरं मनागिष्टे । 'मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययम् ।' इति शाश्वतः । अव्ययानामनेकार्थत्वादुक्तोऽर्थः सुलभ एव । चेतयमानं चेतनावन्तम् । **भार इत्यादि** । कायो भारो धर्तुमशक्यः । धारणाशक्यतया व्याधिः । जीवनं वज्रकीलकमनुच्छेदात् । अनेन मर्मच्छेदः । मर्मच्छेदेन चिन्ता । दिशः शून्या इति जडता । इन्द्रियाणि नेत्रादीन्यफलानि कार्याक्षमाणि । बाह्यविषयाग्रहाद्दैन्यम् । कालः कष्टो दुःखदः । दैन्येन जीवनाक्षमता । संसारः सर्वत्र प्रशान्तदर्शनः । तथा च त्वां विना न मज्जीवनमिति भावः । त्वत्प्रयाणे तव गमने विनाश इति यावत् । सतिसप्तमीयम् । मां प्रतीति सर्वत्र योज्यम् । यद्वा । पृथिव्यादिद्रव्यनवके प्रधानद्रव्यदूषणेन दोषमाह तत्र काय इति पृथिव्या जीवनमित्यात्मनः काष्ठा इति दिश इन्द्रियाणीतीन्द्रियाणां काल इति कालस्य लोक इति विषयाणां दोष उक्तः । शान्तालोकोऽनुपभोग्य इत्यर्थः ॥ ३७ ॥ अस्तमयो विनाशः । व्याधिदशायामयम् । यदाह—'निर्वेदश्चैव चिन्ता च दैन्यं ग्लानिः श्रमस्तथा । जडता मरणं चैव व्याधौ तु करुणेऽपि च ॥' पाटलावती नदीभेदः । प्रियदर्शनार्थं निवर्तनम् । मूर्च्छां दृष्ट्वा सकरुणम् ॥ तादृशं दृष्ट्वा सखेदमाह—**तदित्यादि** । सखे

---

१ अथवा. २ शल्यभूतम्. ३ संप्रति. ४ इत्यतो. ५ माधवमर०. ६ सकरुणं परिवृत्या०. ७ ममापि. ८ पीडितैः.

**यदुल्लसितविस्मया[1] बत निपीतवत्यः पुरा**
**नवप्रणयविभ्रमाकुलितमालतीदृष्टयः ॥ ३८ ॥**

आश्चर्यम्[2] । एतस्यां[3] तनावचरमे वयसि तावतो गुणसमाहारस्य संनिवेशः कथमिवाभूत् । सखे माधव

**आपूर्णश्च कलाभिरिन्दुरमलो यातश्च राहोर्मुखं**
**संजातश्च घनाघनो जलधरः शीर्णश्च वायोर्जवात् ।**
**निर्वृत्तश्च फलेग्रहिर्द्रुमवरो दग्धश्च दावाग्निना**
**त्वं चूडामणितां गतश्च जगतः[4] प्राप्तश्च[5] मृत्योर्वशम् ॥ ३९ ॥**

तत्परिष्वजेहं[6] तावदेवं गतमपि प्रियवयस्यम् । अर्थितश्चानेन संप्रत्ययमेवार्थः । (परिष्वज्य) हा वयस्य विमलविद्या[7]निधे गुणगुरो मालती[8]स्वयंग्राहजीवितेश्वर कामन्दकी[9]मकरन्दानन्दनमुखचन्द्र माधव अयमत्र[10] ते जन्मन्यपश्चिमः पश्चिमावस्थाप्रार्थितो मकरन्दबाहुपरिष्वङ्गः । सखे संप्रति मुहूर्तमपि मकरन्दो जीवतीति मैव मंस्थाः[11] ।

**आ जन्मनः सहनिवासितया[12] मयैव**
**मातुः पयोधरपयोऽपि समं निपीय[13] ।**
**त्वं[14] पुण्डरीकमुख बन्धुतया निरस्त-**
**मेको निवापसलिलं पिबसीत्ययुक्तम् ॥ ४० ॥**

---

यत्तवाङ्गं नीलनलिनश्यामं तदेतत् । अस्मिन्नङ्गे गाढासङ्गैरप्यालिङ्गनैर्मम तृप्तिर्नाभूत् । यदङ्गं नवस्नेहविलासव्याकुलमालतीदृष्टय उपचिताद्भुताः । पूर्वं निपीतवत्यो नित्यादरेणावलोकितवत्य इत्यर्थः । बत खेदे ॥ ३८ ॥ अचरमे नूतने । समाहारो मेलकः । **आपूर्ण इत्यादि** । सखे त्वं संसारस्य चूडामणीभूतश्च मरणं प्राप्तश्च । अत्र तुल्ययोगितया दृष्टान्तमाह—निर्मलश्चन्द्रः कलाभिः पूर्णश्च राहुग्रस्तश्च । मेघो घनाघनो वर्षुकाब्दश्च वातवेगाद्विशकलितश्च । द्रुमश्रेष्ठः फलेग्रहिः फलभारवान्निर्वृत्तो जातश्च वनाग्निना दग्धश्च । यथा तथा त्वमपीत्यर्थः । 'घनाघनो मत्तगजे वर्षुकाब्दमहेन्द्रयोः' । इत्यमरमाला । यद्वा घनाघनोऽतिनिबिडः । घनशब्दस्यैवावृत्त्या प्रयोगाद्द्रवद्रवद इतिवत् । फलेग्रहिर्निपातनात् । फलानि गृह्णाति धारयतीति फलेग्रहिः । 'स्यादवन्ध्यः फलेग्रहिः' इत्यमरः ॥ ३९ ॥ एवं गतं मूर्च्छितम् । अयमर्थ आलिङ्गनरूपः । मया सहेति शेषः । अपश्चिमो दुर्लभः । पश्चिमावस्था शेषावस्था । **आ जन्मेत्यादि** । हे पद्मास्य जन्मन आरभ्य मयैव समं तुल्यगृहतया मातुः स्तन्यं पीत्वाधुना त्वमेको निवाप-

---

१ विभ्रमाः; ० विभ्रमं मधु; विस्मयं. २ हन्त भोः. ३ एकस्यां तनावेतावतो. ४ जगतां. ५ प्राप्तोऽसि. ६ अस्मात्प्राक्-विचिन्त्य इत्य०. ७ कला. ८ हा मा०. ९ हा का० नन्दजनक; नन्दचन्द्र. १० अयं स. ११ मैवं; मैवावमंस्थाः । कुतः. १२ ०सतया; मयैव—सहैव. १३ निपीतं. १४ तत्पुं.

( सकरुणं विमुच्य परिक्रम्य च । ) इयमधस्तात्पाटलावती । भगवत्यापगे

**प्रियस्य सुहृदो यत्र मम तत्रैव संभवः ।**
**भूयादमुष्य भूयोऽपि भूयासमनुसंचरः ॥ ४१ ॥**

( इति पतितुमिच्छति । )

( प्रविश्य सहसा । ) **सौदामिनी**—( वारयित्वा । ) वत्स कृतं साहसेन ।

**मक०**—( विलोक्य । ) अयि कासि । किमहं त्वया प्रतिषिद्धः ।

**सौदा०**—आयुष्मन् किं[2] त्वं मकरन्दः ।

**मक०**—मुञ्च[3] । स एवास्मि मन्दभाग्यः ।

**सौदा०**—वत्स योगिन्यस्मि मालत्यभिज्ञानं च धारयामि ।

( इति बकुलमालां दर्शयति । )

**मक०**—( सोच्छ्वासं[4] सकरुणम् । ) आर्ये अपि जीवति मालती ।

**सौदा०**—अथ किम् । अपि च वत्स किमत्याहितं माधवस्य । यदनिष्टं व्यवसितोऽसीत्याकम्पितास्मि ।

**मक०**—आर्ये तमहं प्रमुग्धमेव वैराग्यात्परितत्यज्यागतः । तदेहि[6] । तूर्णं संभावयावः । ( इति त्वरितं परिक्रामतः । )

**माधवः**—( आश्वस्य ) अये प्रतिबोधित[7] एवास्मि केनापि । ( विचिन्त्य[8] । ) नूनमस्यायं[9]मभिनवजीमूतजलबिन्दुवाहिनः प्रभञ्जनस्यानवेक्षितास्मदवस्थो व्यापारः ।

**मक०**—( विलोक्य[10] । ) दिष्ट्या पुनः प्रत्यापन्नचेतनो वयस्यः ।

**सौदा०**—( विलोक्य । ) संवदत्युभयो[11]र्मालतीनिवेदितः शरीराकारः ।

---

सलिलं प्रेतोदकाञ्जलिं बन्धुसमूहेन दत्तं पिबसीत्येतदयोग्यम् । सहपानार्थमहमप्यागच्छामीत्यर्थः । ‘ निवापः पितृदेये स्यात् ’ इत्यमरः ॥ ४० ॥ आपगा नदी । **प्रियस्येत्यादि** । मित्रस्य संभव उत्पत्तिर्यत्र ममापि तत्रैव भूयात् । अमुत्रापरस्मिँल्लोके पुनरप्यस्यानुचरो भूयासमित्यर्थः । भूयादित्यादौ प्रार्थनायां लिङ् ॥ ४१ ॥ **सौदामिनी** । अत्याहितं प्रमोहोऽभूत् । **माधवः** । प्रभञ्जनो वायुः । **सौदा०**-

---

१ अम्ब; किमर्थम०; प्रति०–प्रतिहतः. २ अये. ३ मुञ्च मां. ४ सोच्छ्वासकरुणम्. ५ ०त्याशंकितास्मि, भीत्याकम्पि०, अस्मात्परं–अथ माधवः क इत्यधिकं क्वचित्. ६ सौदा०–तदेहि. ७ आश्वासितः; प्रतिबोधितवानस्मि. ८ उत्थायोपविश्य वि०. ९ स्यायं नवजलधरप्रभ०, मयमस्य नवजलधरपवनस्या०. १० दृष्ट्वा सोच्छ्वासं. ११ अनयोः

**माधवः**—भगवन् पौरस्त्यपर्वन

**भ्रमय जलदानम्भोगर्भान्प्रमोदय चातका-**
**न्कलय शिखिनः केकोत्कण्ठान्कठोरय केतकान् ।**
**विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा-**
**मकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ ४१ ॥**

**मक०**—सुविहितमनेनाखिलजन्तुजीवनेन मातरिश्वना ।

**माधवः**—देव वायो तथापि भवन्तमेवं प्रार्थये ।

**विकसत्कदम्बनिकुरुम्बपांसुना**
**सह जीवितं वह मम प्रिया यतः ।**
**अथ वा तदङ्गपरिवासशीतलं**
**मयि किंचिदर्पय भवान्हि मे गतिः ॥ ४३ ॥**

---

उभयोर्माधवमकरन्दयोः । **माधवः** । मूर्च्छयैव तं सोपालम्भमाह । **भगवन्निति** । पौरस्त्येत्यनेन भिन्नदेशकथनम् । तेन सहजकृत्रिमवैरशङ्का निरस्ता । तव विरहिदुःखमेव न कृत्यम् । अपि त्वन्यदपीत्याह—**भ्रमयेत्यादि** । जलपूर्णान्मेघांश्चालय । कोकिलान्हर्षय । केकयोत्कण्ठानूर्ध्वगलान्सेच्छान्वा मयूरान्कलय नर्तय । कलेरनेकार्थत्वात् । केतकान्केतकीवृक्षान्कठोरय कोरकितान्कुरु । कोरकितत्वेन निम्नोन्नततया कठोरत्वम् । 'केतक्यामपि केतकः' इति शब्दभेदः । अत एव 'केतकाधानहेतोः' इति मेघदूते । यद्वा केतकीपुष्पाणि कठोरय विकासय । तत्करोतीति णिच् । अस्मिन्पक्षे लिङ्गमाशिष्यम् । लोकाश्रयत्वाल्लिङ्गव्यत्यय इत्यवधेयम् । विरहिजने मूर्च्छां प्राप्य व्यथां स्फोटयति सति पुनः संज्ञाव्याधिं चेतनारूपं रोगं कृत्वा किं त्वमिच्छसि । महता दुःखितदुःखशान्तिः क्रियते । त्वं प्रबोध्य दुःखयसीत्यनर्हम् । अत एवाकरुण इत्युक्तम् । प्रमोदय चातकानीत्यपि पाठः । प्रथमपाठे तु कोकिलप्रमोदो वर्षास्वपि कविसंप्रदाये वर्ण्यत इत्यवधेयम् ॥ ४२ ॥ **मकरन्दः** । मातरिश्वा वायुः । वातीति वायुरित्युचितपदन्यासेन जीवनयोग्यतोक्ता । **माधवः** । तथाप्यनिष्टकरणादपि । **विकसदित्यादि** । मम प्रिया यतो यत्र तं देशं मम जीवितं प्रफुल्लकदम्बसमूहधूल्या सह प्रापय । घटय मे इति वा पाठः । सा विरहदीना म्रियेतातस्तज्जीवनाय मज्जीवितं नयेति भावः । पांसुना

---

१ वायो. २ कोकिलान्–मौलिकान्. ३ केतकं. ४ सुवृत्त०, हितमनेनः ५ अस्मात्परं—अपि च ।

**एते (कै) तकसूनसौरभजुषः पौरप्रगल्भाङ्गना-**
**व्यालोलालकवल्लरीविलुठनव्याजोपभुक्ताननाः ।**
**किं चोन्निद्रकदम्बकुड्मलपुटीधूलीलुठत्षट्पद-**
**व्यूहव्याहृतिहारिणो विरहिणः कर्षन्ति वर्षानिलाः ॥४३॥** इत्यधिकं क्वचित्

६ भगवन् देव; एवं–एव, एतावत्. ७ घटय मे. ८ अपि वा. ९ भवांस्तु.

( कृताञ्जलिः प्रणमति । )

**सौदा०**—सुसमाहितः खल्वभिज्ञानार्पणस्यावसरः ।

( अञ्जलौ बकुलमालां मुञ्चति । )

**माधवः**—( साकूतविस्मयहर्षम् । ) कथमियमस्मद्विरचिता प्रियतमास्तनोन्नाहदुर्ललितमूर्तिरनङ्गमन्दिराङ्गनबकुलप्रसवमाला । ( निरूप्य सहर्षम् । ) कः संदेहः । तथा हि स एवायमस्याः

**मुग्धेन्दुसुन्दरतदीयमुखावलोक-**
**हेलाविशृङ्खलकुतूहलनिह्नवाय ।**
**दुर्न्यस्तपुष्परचितोऽपि लवङ्गिकाया-**
**स्तोषं ततान विषमग्रथितोपि भागः ॥ ४४ ॥**

---

सहेत्यनेन परमाणुरूपं मे मनोऽपि तत्समूहे गमिष्यतीति न ते प्रयासोऽपि स्यादित्युक्तम् । नो वा प्रियाङ्गसदावस्थितिर्हिमं यत्किंचिद्वस्तु मयि तदर्पय देहि । ईरयेति पाठे प्रेरयेत्यर्थः । तदेव मे तापशान्त्यै स्यादिति भावः । अत्र हेतुमाह–यतो मम भवान्गतिराश्रयः । आश्रयस्याश्रितजीवनं युक्तमेवेति भावः । अपि वेति पाठेऽपि संभावनायाम् ॥ ४३ ॥ **सौदामिनी** । समाहितो युक्तः । वायुप्रार्थनाप्रकरणात् । **माधवः** । प्रियाङ्गसङ्गिमालालोकात्सहर्षत्वम् । यदाह—' प्राप्ये वाप्यप्राप्ये लब्धेऽर्थे प्रियसमागमे वापि । हृदयमनोरथलाभे हर्षः संजायते पुंसाम् ॥ ' उन्नाह उत्सेध उपरिवहनं वा । दुर्ललितातिप्रिया । अनङ्ग एव मन्दिरमनङ्गस्य वा मन्दिरम् ॥ **मुग्धेत्यादि** । अस्या मालायाः स एवायं भागो यो लवङ्गिकाया अपि संतोषमकरोत् ॥ अपिपदान्मालत्या अपीत्यर्थः । विषमं ग्रथितं ग्रन्थना यत्र सः । विषमेण ग्रथित इति वा । अत्र हेतुमाह–मुग्धं मनोज्ञमिन्दुकान्तं यन्मालतीमुखम् ॥ यद्वा विरहक्षामत्वादिना बालेन्दुवत्कान्तं यत्तदास्यं तदालोके सति हेलया शृङ्गारचेष्टया विशृङ्खलं सर्वत्र वर्तमानं यत्कौतुकं तद्गोपनाय दुर्न्यस्तैः पूर्वग्रथनादन्यथा दत्तैः पुष्पै रचितः । एतत्तु प्रथमाङ्क एव व्यक्तम् । ननु हेला स्त्रीविषया । यदाह भरतः—' यौवने त्रिदश स्त्रीणां विकारा नेत्रपातजाः । आदौ त्रयोऽङ्गजास्तेषां दश स्वाभाविकास्तथा ॥ ' तत्राङ्गजेषु हावहेलालक्षणम्—' अक्षिभ्रुवोर्विकाराद्याः शृङ्गारस्य च सूचकाः । सग्रीवारेचका भावा हावास्तेभ्यः समुत्थिताः ॥ य एव हावः सैवासौ शृङ्गाररससंभवा । समाख्याता बुधैर्हेला ललिताभिनयात्मिका । ' अतो माधवे हेलेत्ययुक्तम् । मैवम् । स्त्रीणामित्यस्योपलक्षणत्वात्पुरुषेऽपि कामावस्थासाम्याद्धेलावचनात् । यदाह–' हेला

---

१ समीहितः, ज्ञानस्यार्पणावसरः. २ अर्पयति. ३ साकूतं सहर्षं सविस्मयं च; विलोक्य सा०. ४ प्रियास्तनो. ५ पादपकुसुम. ६ सम्यङ् निरूप्य. ७ रचनोपि. ८ ग्रथितैकभागः; ०तो विभागः.

( सहर्षोन्मादमुत्थाय । ) प्रिये[1] मालति इयं वीक्ष्यसे[2] । ( सकोपमिव । ) अयि मदवस्थानभिज्ञे[3]

प्रयान्तीव प्राणाः सुतनु हृदयं ध्वंसत इव
ज्वलन्तीवाङ्गानि प्रसरति समन्तादिव तमः ।
त्वराप्रस्तावोऽयं न खलु परिहासस्य विषय-
स्तदक्ष्णोरानन्दं वितर मयि मा भूरकरुणा ॥ ४५ ॥

( सर्वतो[4] दृष्ट्वा सनिर्वेदम् । ) कुतोऽत्र मालती । ( बकुलमालामुद्दिश्य[5] । ) अयि प्रियाप्रणयिनि[6] बकुलमाले उपकारिण्यसि । अतः स्वागतं भवत्याः ।

निष्प्रत्यूहाः[7] प्रियसखि यदा दुःसहाः संबभूवु-
र्देहोद्दाहव्यसनगुरवो[8] मन्मथोन्मादवेगाः ।
तस्मिन्काले कुवलयदृशस्त्वत्समाश्लेष[9] एव
प्राणत्राणं प्रगुण[10]मभवन्मत्परिष्वङ्गकल्पः ॥ ४६ ॥

---

हावश्च भावश्च व्याजो विश्रम्भभाषणम् । चाटुः प्रेमाभिसंधानं चकितं च विलासितम्' ॥ तत्र रागतः सहसा प्रवृत्तौ हेतुश्चित्तोल्लासो हेलेति । यद्वा अवलोक्यत इत्यवलोकः । कर्मणि घञ् । इन्दुसुन्दरमालतीमुखेऽवलोक्या दृश्या या हेला तया विशृङ्खलं यन्माधवस्य कुतूहलं तद्वोपनायेत्यर्थः ॥ ४४ ॥ संकल्पलिखितप्रियादर्शनाद्धर्षः । दर्शनाप्राप्त्या पुनराह—नन्विति । अत्राप्यलाभादुपालभ्यते । **अयीति** । परिहासाददर्शनमाशङ्क्य तदनवसरमाह—**प्रयान्तीत्यादि** । प्राणाः प्रयान्तीव सर्वतः शून्यत्वात् । हे सुतनु मनो ध्वंसत इव मोहात् । अङ्गज्वलनमतिदाहात् । एतेन व्याधिरुक्तः । सर्वतस्तमः प्रसरतीव । अनेन जडता । सकलेन्द्रियाणामग्रहात् । जडतानन्तरं मरणशङ्कायामाश्वास एव युक्त इत्याह—त्वरेति । खलु निश्चये । यत एवं ततो नेत्रप्रीतिं देहि । स्वं दर्शयेत्यर्थः । मद्विषये निर्दया मा भविष्यसि । यद्वा अकरुणा मा भून्न भवसि । माङिति कालसामान्ये लुङ् । पूर्वंकरुणेदानीमपि निर्वाह्यतामित्यर्थः । इव शब्द उत्प्रेक्षायाम् ॥ ४५ ॥ **निरित्यादि** । यदा मालत्याः पद्माक्ष्याः कामोन्मादोद्वेगा निर्विघ्ना अत्यर्थं दुःसहा अङ्गदाहदुःखमहान्तस्तद्दुःखोपदेशकाराः संबभूवुः संभूयोद्गतास्तत्र काले तस्यास्त्वदालिङ्गनमेव शीघ्रं प्राणरक्षकमभूत् । अत एव मदालिङ्गनतुल्यः । उन्माथ उन्मथनमुद्वेग इति यावत् । प्रगुणमिति पाठे प्रकृष्टगुणमित्यर्थः । क्रियाविशेषणं वा । कामदुःखोद्वेगस्य प्रियसङ्गस्यालाभादविघ्नत्वम् । मालतीप्रणयित्वात्प्रियसखि इति । दुःसहत्वमधृतिकरणात् । उद्दाह उद्गतदाहः । व्यसनस्थाने ' व्यथन ' इति पाठे व्यथनं

---

१ चण्डि. २ विलोक्यसे; नन्वियं वी०. ३ मदनावस्था०. ४ इति दिशोवलोक्य. ५ मालां प्रति. ६ ०यिनि परमोपका०. ७ ०त्यूहं. ८ मोहोद्दाम. ९ षणं वा. १० त्राणप्रगुण; प्रगुणनमभून्म०, त्वरितमभवन्म०.

( सकरुणं निर्वर्ण्य । )

आनन्दमिश्रमदनज्वरदीपनानि
गाढानुरागरसवन्ति तदा तदा च ।
स्नेहाकराणि मम मुग्धदृशश्च कण्ठे
कष्टं स्मरामि तव तानि गतागतानि ॥ ४७ ॥

( हृदये निधाय मूर्च्छति । )

**मक०**—( उपसृत्य वीजयन् । ) सखे समाश्वसिहि समाश्वसिहि ।

**माधवः**—( समाश्वस्य । ) मकरन्द किं न पश्यसि कुतोऽपि सहसैव मालतीस्नेहं वहतो बकुलदाम्नो लाभः । तत्कथं नु मन्यसे कुत एतदिति ।

**मक०**—वयस्य इयमार्या योगीश्वर्यस्य मालत्यभिज्ञानस्योपनेत्री ।

**माधवः**—( विलोक्य सकरुणं कृताञ्जलिः । ) आर्ये प्रसीद कथय जीवति मे प्रियतमा ।

**सौदा०**—वत्स समाश्वसिहि समाश्वसिहि । जीवति सा कल्याणी ।

**माधवमकरन्दौ**—( समुच्छ्वस्य । ) आर्ये यद्येवं तत्कथय क एष वृत्तान्त इति ।

**सौदा०**—पुरा किल करालायतने मालतीमुपहरन्नघोरघण्टः करवालपाणिर्माधवेन व्यापादितः ।

---

पीडा । अधुना मालां विनास्याः कथं जीवनं भविष्यतीति भावः ॥ ४६ ॥ निर्वर्ण्य निरूप्य । **आनन्देत्यादि** । मम मालत्याश्च कण्ठे तव गतागतानि स्मरामि । स्मरणस्यातिदुःखदत्वात्कष्टम् । तदा तदा तस्मिंस्तस्मिन्काले । तत्र चोरिकाविवाहात्पूर्वं मालतीकण्ठगतेति गतं लवङ्गिकाबुद्ध्या माधवकण्ठमागतेत्यागतमित्येकम् । चोरिकाविवाहे मालत्या माधवकण्ठे नीतातो गतमथ तन्मुखदर्शनात्स्वकण्ठेऽर्पितेत्यागतमिति द्वितीयम् । पुनस्तत्र प्रणयवशान्माधवेन मालत्यै दत्तेति गतमिदानीं तु सौदामिन्या मालतीसकाशादानीय दत्तेति त्रीणि गतागतानि । अत एव बहुवचनम् । कीदृशानि । तद्दशायामन्तरान्तरा हर्षलाभादानन्दमिश्रितकामतापप्रकाशनानि । दृढानुरागरसयोगीनि । स्नेहस्याकरो येषु तानि । स्नेहं प्रीतिमाकुर्वन्ति व्याकुर्वन्तीति स्नेहकराणि । कृञो हेत्वित्यादिना टप्रत्ययः । तदा चेति चकारात्कालान्तरपरिग्रहः ॥ ४७ ॥ **मकरन्दः** । आर्या मान्या ।

---

१ निःश्वस्य. २ आनन्दनानि. ३ च तस्याः. ४ स्नेहाङ्कनानि. ५ इति हृ०; मूर्च्छितः पतति. ६ वयस्य. ७ स्नेहस्वहस्तस्य लाभः. ८ अञ्जलिं बध्वा. ९ अपि जीवति, प्रिय०-प्रिया. १० अस्ति पुरा करालायतनेऽघोरघण्टः कृपाणपाणिर्व्यापा०.

**माधवः**—( सांवेगम्। ) आर्ये विरम विरम । विज्ञातो वृत्तान्तः ।

**मक०**—सखे क इव ।

**माधवः**—सखे किमन्यत् । सकामा कपालकुण्डलेति ।

**मक०**—आर्ये अप्येवम् ।

**सौदा०**—एवं यथा [2]विदितं वत्सेन ।

**मकरन्दः**—[3]कष्टं भोः कष्टम् ।

> **कुमुदाकरेण शरदिन्दुचन्द्रिका**
> **यदि रामणीयकगु[4]णाय संगता ।**
> **सु[5]कृतं तदस्तु कतमस्त्वयं विधि-**
> **र्यदकालमेघवि[6]ततिर्व्ययूयुजत् ॥ ४८ ॥**

**माधवः**—हा प्रिये मालति कष्टमतिबीभत्समापन्नासि ।

> **कथ[7]मिव तदाभवस्त्वं कमलमुखि कपालकुण्डलाग्रस्ता ।**
> **उत्पातधूमले[8]खाक्रान्तेव कला शशधरस्य ॥ ४९ ॥**

भगवति कपालकुण्डले

> **निर्माणमेव हि तदा[9]दरलालनीयं**
> **मा पूतना[10]त्वमुपगाः शिवता[11]तिरेधि ।**

---

**माधवः** । सकामा मदपकारेण सिद्धप्रतिज्ञेत्यर्थः । **कुमुदेत्यादि** । कुमुदसमूहेन यदि शरच्चन्द्रचन्द्रिका सौन्दर्यगुणार्थं संगता प्राप्ता सत्सुकृतं शोभनकरणमस्तु । द्वयोरपि रम्यत्वात् । अयं पुनः कः प्रकारः कुत्सितप्रकारो वा यदकालमेघपङ्क्ति-र्व्ययूयुजद्वियोजयामास । विच्छेदं कृतवतीत्यर्थः । ध्वनिनात्र कुमुदाकरो माधवश्च-न्द्रिका मालती मेघसंततिः कपालकुण्डलेत्युक्तम् ॥ ४८ ॥ **अतिबीभत्स-मिति** । उद्वेगहेतुकपालकुण्डलादर्शनाद्बीभत्सः । यदाह—' उद्वेजनैश्च बहुभिर्बी-भत्सरसः समुद्भवति ' । **कथमित्यादि** । तत्कवलिता हे पद्ममुखि तदा त्वमपि कथमभवः । भयात्कथं त्वमासीः किं त्वयोक्तं कस्ते त्राताभूदित्यादि-ज्ञापनाय कथमिति सामान्यनिर्देशः । केतुकवलिता चन्द्रकलेव । एतदुपमया बीभ-त्सजविषादसंभवा ग्लानिरप्युक्ता । यदाह—' अपस्मारस्तथोन्मादो विषादो मद एव च । मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंभवाः ॥' ४९ ॥ ' स्त्रीबालं नैव घातयेत्' इति निजधर्मं जानत्या त्वया सा घातितेति सोल्लुण्ठमाह–भगवति इति । **निर्माणमित्यादि** । तन्निर्माणं मालतीरूपादिकमेव तदादरेण रक्षणीयं

---

१ सोद्वेगम्. २ निवेदितं. ३ भोः क०. ४ गुणेन. ५ सुकृते यदस्तु. ६ वितति: त्वयू. ७ कथमपि. ८ रेखा. ९ तदा तव. १० पूतनत्व०. ११ ०तातिरेव.

**नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा**
**मूर्ध्नि स्थितिर्न मुसलैरवताडनानि ॥ ५० ॥**

**सौदा०**—वत्स अलमावेगेन ।

**अकरिष्यदसौ पापमतिनिष्करुणैव सा ।**
**नाभविष्यमहं तत्र यदि तत्परिपन्थिनी ॥ ५१ ॥**

**उभौ**—( प्रणम्य । ) अतिप्रसन्नमार्यापादैः । तत्कथय का पुनस्त्वस्माकमेवंविधो बन्धुः ।

**सौदा०**—ज्ञास्यथः खल्वेतत् । ( उत्थाय । ) इयमहमिदानीम्

**गुरुचर्यातपस्तन्त्रमन्त्रयोगाभियोगजाम् ।**
**इमामाक्षेपिणीं सिद्धिमातनोमि शिवाय वः ॥ ५२ ॥**

( इति समाधवा निष्क्रान्ता । )

**मक०**—आश्चर्यमाश्चर्यम् ।

**व्यतिकर इव भीमस्तामसो वैद्युतश्च**
**क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।**

---

भवति । रम्यत्वादेव । पूतनात्वं राक्षसीत्वं तन्नाशेन मोपगा मा गमिष्यसि । यद्वा मांसं मे ततो भक्षयितव्यं किमिति चिन्तकत्वं पूतनात्वम् । 'पूतनत्वम्' इति पाठे राक्षसत्वमित्यर्थः । पूतना राक्षसीभेदे हरीतक्यां च पूतना ।' इति विश्वः । शिवतातिः कल्याणकर्येधि भव । 'शिव इत्यबोधीः' इति पाठे तन्निर्माणं शिवे कल्याणनिमित्तमित्यज्ञासीः । 'शिवतामुपैति' इति पाठे तन्निर्माणम् । कर्तृ । शिवतां कल्याणत्वं गच्छति । अतः पालनमस्य । भद्रवस्तुपुरस्कारः स्वभावादेवेत्याह—मनोहरस्य ख्यातस्य सुगन्धस्य वा पुष्पस्य मस्तके धृतिः स्वभावसिद्धा । न पादैः [ अवताडितानि ] पीडनानि स्वभावसिद्धानीत्यर्थः ॥ ५० ॥ **अकरिष्यदिति** । असौ कपालकुण्डला पापं तद्वधरूपमकरिष्यदेव । अतिनिष्करुणा यतः सा । यदि तत्र स्थाने वधे वा तस्या विरोधिनी नाहमभविष्यम् । क्रियातिपत्तौ लृङ् । बुद्धिप्रत्यक्षतयासाविति ॥ ५१ ॥ **उभौ** । अतिप्रसन्नं प्रसादः कृतः । **सौदामिनी** । ज्ञास्यथः । युवामित्यर्थात् । **गुर्वित्यादि** । गुरुचर्या गुरुसेवा गुर्वी चर्या विशिष्टमनुष्ठानम् । तपश्चान्द्रायणादि । तन्त्रं मण्डलवर्तनादि । मन्त्रस्ताराप्रभृतिदेवीनां तन्त्रस्य वागमस्य वा मन्त्रः । योगः समाधिः । एष्वभियोगादभ्यासाज्जातामिमामाकर्षणीं सिद्धिं युष्माकं कल्याणाय विस्तारयामि ॥ ५२ ॥ **व्यतिकर इति** । मालतीवार्ताया अप्यज्ञानादयं तामसोऽन्धकारजः अत एव भीमः । तज्जीवनज्ञानाद्वैद्युतश्चायं वि-

---

१ चरणैः; लैर्बत कुट्टनानि. २ दुष्क०; यतो निष्करुणैव. ३ माधवमक०. ४ विधः, अस्माकमकारणब०. ५ ०थ, ज्ञास्यते. ६ चर्याभियोगतः; सिद्ध्याभि०. ७ माकर्षिणीं. ८ वियां. ९ मुपगत.

( विलोक्य सभयम् )

**कथमिह न वयस्यस्तत्किमेतत्** ( विचिन्त्य ) **किमन्य-**
**त्प्रभवति हि महिम्ना स्वेन योगीश्वरीयम्** ॥ ५३ ॥

( सवितर्कम् । ) किमयमर्थोनर्थ इति संप्रति प्रमुग्धोऽस्मि । अपि च ।

**अस्तोकविस्मयमपस्मृतपूर्ववृत्त-**
**मुद्भूतनूतनभयज्वरजर्जरं नः ।**
**एकक्षणत्रुटितसंघटितप्रमोह-**
**मानन्दशोकशबलत्वमुपैति चेतः** ॥ ५४ ॥

तदत्र कान्तारगहने सहास्मद्वर्गेण प्रविष्टां भगवतीमन्विष्य तस्या वृत्तान्तमेनं कथयामि ।

( इति **निष्क्रान्ताः सर्वे** । )

**मालत्यन्वेषणं नाम नवमोऽङ्कः ।**

---

द्युतसंबन्धी । व्यतिकरः संपर्कः । अत एवानन्दाश्रुसंभारेणोपहतनेत्रवृत्तिः । कीदृशः । क्षणमुद्भूय शान्तः । अत एव विद्युद्विद्योतवितर्कः । कथमिह स्थाने वयस्यो माधवोऽपि नास्ति । तत्किमिदं क्व गतः केन वा स नीत इति विचिन्त्येत्यर्थः । निर्णयमाह—अन्यत्किम् । यत इयं योगीश्वरी निजतपःप्रभावेण प्रभवति । अनया नीत इति भावः ॥ ५३ ॥ संशय्याह—**किमयमिति** । सौदामिनीनयनेऽर्थः प्रयोजनं कपालकुण्डलानयनेऽनर्थ इति भावः । **अस्तोकेत्यादि** । अस्माकं चित्तम् । कर्तृ । हर्षशोकाभ्यां शबलत्वं मिश्रत्वं गच्छति । कीदृशम् । अनल्पाश्चर्यम् । एकदैव नानारससंभवात् । अपस्मृतं विस्मृतं पूर्ववृत्तं मालतीहरणरूपं यत्र अत एवानन्दः । उद्भूतं नवं भयं माधवापकारशङ्काकृतं तेन ज्वरेण जीर्णम् । अत एव शोकः । यद्वा । माधवानवलोकनेनोद्भूतनवशङ्काज्वरजर्जरतया शोकः । एकक्षण एव त्रुटितो घटितश्च प्रमोहो यत्र तत् । मालतीलाभसंभावनया त्रुटितो माधवापकारसंभावनया घटित इति भावः । अत एवात्याश्चर्यम् । स्तोकशब्दोऽल्पपर्यायः । अस्मद्वर्गेण मदयन्तिकालवङ्गिकाभ्याम् । ‘ विप्रनष्टाम् ’ इति कस्मिंश्चित्पुस्तके पाठो दृश्यते तत्रादृश्यमानामित्यर्थः ॥ ५४ ॥ भगवतीं कामन्दकीम् । अनेनाग्रिमाङ्कावतारस्यापि सूचनादङ्कावतारोऽयम् ॥

प्रासूत यं रत्नधरोऽतिविद्यो विद्योतिविद्या दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कोऽगलन्नवीने नवमोऽनवद्यः ॥

**इति नवमोऽङ्कः ।**

---

१ इव. २ किमन्यत्स्वेन. ३ ०यमनर्थ इति मूढोस्मि. ४ मविस्मृत. ५ प्रबोध, प्रमोद. ६ लं समु०. ७ दत्रैव. ८ रावसाने. ९ तीमनुसृत्य वृत्ता. १० निष्क्रान्तः. ११ सौदामिनीदर्शनः.

## दशमोऽङ्कः ।

( ततः प्रविशति कामन्दकी लवङ्गिका मदयन्तिका च । )

**कामन्दकी**—( सकरुणं सास्रम् । ) हा वत्से मालति मदङ्कालंकारिणि क्वासि देहि मे प्रतिवचनम् ।

**आ जन्मनः प्रतिमुहूर्तविशेषरम्या-**
**ण्याचेष्टितानि तव संप्रति तानि तानि ।**
**चाटूनि चारुमधुराणि च संस्मृतानि**
**देहं दहन्ति हृदयं च विदारयन्ति ॥ १ ॥**

अपि च । पुत्रि

**अनियतरुदितस्मितं विराज-**
**त्कतिपयकोमलदन्तकुट्मलाग्रम् ।**
**वदनकमलकं शिशोः स्मरामि**
**स्खलदसमञ्जसमुग्धजल्पितं ते ॥ २ ॥**

**इतरे**—( सास्रम् । ) हा प्रियसखि सुप्रसन्नमुखचन्द्रसुन्दरि क्व गतासि । को वा शिरीषकुसुमसुकुमारस्य ते शरीरस्य दैवदुर्विनय-

---

सहास्मद्वर्गेणेत्यव्यवधान एव सूचनात्तत्प्रवेशमाह—**तत इति** । कामन्दकी मालतीविश्लेषं श्रुत्वा विलपति—**हेत्यादि** । **आ जन्मन इत्यादि** । जन्मन आरभ्य प्रतिक्षणाधिक्यमनोज्ञानि तव तानि तानि पूर्वानुभूतान्याचेष्टितानि विनयादीनि संस्मृतानि सन्ति मेऽङ्गं दहन्ति चित्तं च दारयन्ति । अनेन बाह्या मानसी च पीडोक्ता । तथा चाटूनि वाक्कौशलानि स्मृतानि दाहादिकं कुर्वन्ति । विनयादीनामद्वेषकारितया रम्यत्वम् । चाटूनि कीदृशानि । चारूणि शोभावन्ति मधुराण्यनुल्बणानि च । यदाह—'सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च । अनुल्बणत्वं चेष्टानां माधुर्यमिति संज्ञितम्' ॥ १ ॥ **अनियतेत्यादि** । बालायास्तवास्यपद्मं स्मरामि । कीदृशम् । अस्थिरे क्रन्दनहास्ये यत्र तत् । शोभमानकिञ्चिन्मृदुदशनकलिकाग्रम् । सम्यक्स्थानप्रयत्नाभावात्स्खलत् । तत्त्वहान्यासमञ्जसं संख्यातिक्रमादज्ञानाद्वासमञ्जसम् । मुग्धमर्थाभावात् । जल्पितं मन्दोक्तिर्यत्र तत् । सर्वत्र शैशवमेव हेतुः । कमलकमित्यत्राल्पार्थे कन् । सम्यगञ्जसा तत्त्वेन वर्तेत इति समञ्जसमिति । 'अञ्जसा तत्त्वतूर्णयोः' इति विश्वः । मंजु जल्पितमिति मञ्जु मनोहरम् ॥ २ ॥ **इतरे** । अत्रैकाकिन्या एकमात्रस्वरूपायाः । आदावुपस्थितोऽथा-

---

१ मदलंकारका०. २ प्रभृति यानि. ३ वचनानि च चारुनेत्रे. ४ चाति. ५ ( आकाशे ) अपि. ६ रुचिर. ७ मञ्जु,-तं तत्. ८ मद० लवङ्गिके.

अपि च ।

मयि विगलितप्रत्याशत्वाद्विवाहविधेः पुरा
विकलकरुणैर्मर्मच्छेदव्यथाविधुरैरिव ।
स्मरसि रुदितैः स्नेहाकूतं तथा व्यतनोदसा-
वहमपि यथाभूवं पीडातराङ्गितमानसः ॥ ११ ॥

( सावेगम् । ) अहो नु खलु भोः ।

दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ १२ ॥

मक०—वयस्य निरवग्रहं दहति दैवमिव दारुणो विवस्वान् । इयं च ते शरीरावस्था । तदस्य पद्मसरसः परिसरे मुहूर्तमास्यताम् । अत्र हि

---

रसान्तर्गतत्वेन धीमतामनुद्वेगात् । 'यत्रोद्वेगो न धीमताम्' इति दण्डिवचनात् ॥ १० ॥ **मयीत्यादि** । सखे असौ प्रिया स्नेहेङ्गितं रुदितैस्तथा विस्तारयामास यथा पीडाचपलचित्तोऽहमप्यभूवं भूतोऽस्मीति स्मरसि । इतिरध्याहार्यः । अन्यथा कर्माप्राप्तिः । रुदितस्य करुणजन्यत्वात्करुणहेतुमाह—विवाहविधेः पूर्वं मयि नैराश्याद्विकलानि स्वविषयव्यावृत्तानि करणानीन्द्रियाणि तैर्लक्षिता । अनेन मोह उक्तः । लक्षणे तृतीया । कीदृशैः । मर्मच्छेदव्यथादीनैरिव । अनेन विश्वासवत्त्वमुक्तम् । निःश्वासेन मर्मच्छेदोन्नयनात् । तथा च निःश्वासरुदितमोहैः करुणरस उक्तः । यद्वा विकलकरणैर्व्यतनोद्रुदितैरिव । इतरत्समम् ॥ ११ ॥ अहो नु खलु भो इत्याश्चर्ये ॥ **दलतीत्यादि** । मम हृदयं दलति विदीर्यते । सवेदनत्वात् । दृढोद्वेगम् । नैव द्विधा भिद्यते द्विधा भिन्नं न भवति । स्फुटिते पीडोपशान्तिरिति भावः । तुशब्द एवार्थे पुनरर्थे वा । पुनर्न भिद्यत इत्यर्थात् । भिद्यत इति कर्मकर्तरि तङ् । अथ च दलति तन्न भिद्यत इति विरोधाभासः । एवमुत्तरत्रापि । विह्वलः कायो मोहं दधाति न तु चेतनां त्यजति । पुनश्चैतन्ययोगात् । स्थिरे मोहे दुःखाज्ञानात्कृतार्थः स्यामिति भावः । तदिहाध्यात्मिकविपद्द्वयमुक्तम् । अन्तर्दाहः शरीरं दीपयति न भस्मसात्करोति । कात्स्न्र्येन भस्मरूपं न करोतीत्यर्थः । सातिः कात्स्न्र्ये । तथात्वे दुःखाज्ञानमेव स्यादित्याशयः । अनेनाधिभौतिकी विपदुक्ता । तदिह व्याधिदशायां मोहादय उक्ताः । यदाह—'मनःसंमोहसर्वाङ्गदाहनृत्त्यादिभिस्तथा । शिरसो वेदनाभिश्च व्याधेरभिनयो भवेत्' ॥ इति । इह कायावच्छिन्न आत्मा कायपदेनोक्तः । अन्यथा मोहस्यात्मधर्मतया कायेऽसम्भव इत्यवधेयम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः ॥ १२ ॥ जडतानिवृत्त्यर्थे माधवमन्यचित्तं कर्तुमाह—**वयस्य इति** । निरवग्रहं निष्प्रतिबन्धं यथा ॥ उपवेशफ-

---

१ करुणैः. २ सोद्वे०. ३ भज्यते. ४ वयस्य माधव; निरवग्रहः, देवं—द्राव:. इ. पा. ५ अत्र.

**उन्नालबालकमलाकरमाकरन्द-**
**निष्यन्दसंवलनमांसलगन्धबन्धुः ।**
**त्वां प्रीणयिष्यति पुरः परिवर्तमान-**
**कल्लोलशीकरतुषारजडः समीरः ॥ १३ ॥**

( परिक्रम्योपविशतः । )

**मक०**—( स्वगतम् । ) भवतु । एवं तावदाक्षिपामि । ( प्रकाशम् । ) वयस्य माधव

**एतस्मिन्मदकलमल्लिकाक्षपक्ष-**
**व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।**
**बाष्पाम्भःपरिपतनोद्गमान्तराले**
**दृश्यन्तामविरहितश्रियो विभागाः ॥ १४ ॥**

( माधवः सावेगमुत्तिष्ठति । )

**मक०**—कथं प्रतिपत्तिशून्यमुत्थायान्यतः प्रवृत्तः । ( निःश्वस्योत्थाय च । ) सखे प्रसीद । पश्य पश्य

---

लमाह—**उन्नालेत्यादि** । समीरो वायुरिह त्वां प्रीणयिष्यति प्रीतं करिष्यति । तद्योग्यतामाह—ग्रीष्मान्तेऽल्पोदकतयोद्गतनाला बाला ये पद्मसंघास्तेषां पुष्परसक्षरणेन यन्मिश्रणं तेन मांसलः पुष्टो यो गन्धस्तान्मित्रम् । अग्रे दोलायमानकल्लोलशीकरैः शीतलो जडो मन्दः । यद्वा शीकरा एव तुषारास्तैर्जडः शीत इत्यर्थात् । 'आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते ।' इति मेदिनीकरः । माकरन्दः । 'तस्येदम्' इत्यण् ॥ १३ ॥ आक्षेपोऽन्यमनस्कता । **एतस्मिन्नित्यादि** । अत्र सरसि भुवः प्रदेशा दृश्यन्ताम् । अश्रुपूर्णनेत्रतयादर्शनमाशङ्क्याह—एकस्य नेत्रजलस्य परिपतनमन्यस्योत्थानं तयोर्मध्ये । कीदृशाः । हर्षोव्यक्तमधुररवहंसविशेषपक्षकम्पितचलद्दीर्घनालपद्माः । नीलोत्पलयुक्ताश्च । पूर्वं विशिष्टपद्ममुक्तमिह तु नीलपद्ममात्रमित्यपौनरुक्त्यम् । यद्वा पूर्वं श्वेतपद्ममुक्तम् । इह तु नीलं तदित्यदोषः । श्वेतश्यामकमलसंवलनेनातिरम्यतोक्ता । अविरहितश्रिय इति पाठे श्रीः शोभा लक्ष्मीर्वा । सरसि तस्याः सतताधिवासात् । तथा च श्रीयुक्ता इत्यर्थः । 'मलिनैर्मल्लिकाक्षास्ते' इत्यमरः । 'मल्लिको हंसभिद्यपि' इति मेदिनीकरान्मल्लिक आख्या यस्येति ज्ञायते । अनुप्रासश्च नागरागेति समानश्रुत्यापि संभवतीत्यवधेयम् । सोद्वेगं शीतवातादिदुःसहत्वादिति भावः ॥ १४ ॥ 'प्रतिवाक्यप्रदानादिश्रुत्यालोकनवर्जनम् । तूष्णीम्भावो विचेतस्त्वं जडतायां भवन्ति हि ॥ इति जडताचिह्नं माधवे सचमत्कारमाह—**कथमिति** । निरूप्य नेयं जडता किं त्वनुस्मृतिरित्याह—**शून्यमिति** । शून्यं निर्लक्ष्यमन्यतो गमनेनानुस्मृतिः । यद्वा

---

१ उत्ताल. २ संचलन, संवलित. ३ प्राणयि०. ४ परिवर्तमानः. ५ इति परि०. ६ मल्लिकाख्य, काक्षि. ७ कुवलयिनो भुवो. ८ सोद्वेगम्. ९ निष्प्राति०.

वानीरप्रसवैर्निकुञ्जसरितामासक्तवासं पयः
पर्यन्तेषु च यूथिकासुमनसामुज्जृम्भितं जालकैः ।
उन्मीलत्कुटजप्रहासिषु गिरेरालम्ब्य सानूनितः
प्राग्भारेषु शिखण्डिताण्डवविधौ मेघैर्वितानाय्यते ॥ १५ ॥

अपि च ।

जृम्भाजर्जरडिम्बडम्बरघनश्रीमत्कदम्बद्रुमाः
शैलाभोगभुवो भवन्ति ककुभः कादम्बिनीश्यामलाः ।
उद्यत्कन्दलकान्तकेतकभृतः कच्छाः सरित्स्रोतसा-
माविर्गन्धशिलीन्ध्रलोध्रकुसुमस्मेरा वनानां ततिः ॥ १६ ॥

---

अन्यतः शून्यं मालतीव्यतिरिक्तवस्त्वज्ञानात् । अत एव प्रद्वेषादन्यकार्याणां कथितानुस्मृतिरिति । अप्रतिपत्तिशून्यमिति पाठेऽनवधानेन चैतन्यविरहो यथातथोत्थायेत्यर्थः ॥ **वानीरेत्यादि** । सखे कुञ्जसंबन्धि नदीनां पयः पश्य । वेतसपुष्पैर्लग्नसौरभम् । तासामेवोपान्तेषु च यूथिकाकुसुमानां जालकैः कोरकैर्विकासितम् । यद्वा यूथिकाश्च सुमनसश्च तासां जालकैः । यूथिका जूहीति प्रसिद्धा । सुमनसो जात्यः । 'सुमना मालती जातिः' इत्यमरः । तथा गिरेः सानूनेकदेशानालम्ब्येह प्राग्भारेषु शिखरेषु वर्तमानैर्मेघैर्वितानाय्यते । वितानाचारः क्रियते । मयूरनृत्यविधाननिमित्तम् । निमित्तसप्तमीयम् । कीदृशेषु । विकसत्कुटजपुष्परूपहासवत्सु । तदिह मयूरनृत्यार्थं मेघैर्वितानं कुटजैर्हास इति यत्तत्पश्येत्यर्थः । एवं च कुटजवृक्षा द्रष्टारो मयूरा नर्तका मेघो वितानमिति नृत्यसामग्री । ध्वनिस्तु शिखण्डिपदेन पञ्चचूडोपेताशिरस्कत्वेन विदूषक उक्तः । प्राग्भारपदेन च प्राञ्चतीति प्राक् प्रकृष्टज्ञानवान्भारो दुःसहो यस्य स मूर्खो द्रष्टोक्तः । तस्य च हास उचित एव । यद्वा शिखण्डिपदेन त्रिशिखण्डयोगितया बाल उक्तः । तस्य च नृत्ये मूर्खो हसत्येव । 'बालानामपि कर्तव्यं त्रिशिखण्डविभूषणम्' ॥ इति बालानां शिखण्डित्वे मानम् । 'वानीरवञ्जुलाः' इत्यमरः । 'क्षारको जालकं क्लीबे कलिका कोरकः पुमान् ।' इति च । वितानमाचरतीत्यर्थे क्यङन्ताण्णिचि वितानाय्यत इति रूपम् ॥ १५ ॥ **जृम्भेत्यादि** । सखे शैलपर्यन्तभूमयो जृम्भया विकासेन जर्जरः पृथग्भूतो यो डिम्बो गोलकस्तस्य डम्बरेणारम्भेण व्याप्ता अत एव श्रीमन्तो नीपवृक्षा यत्र तादृश्यो भवन्तीति यत्तत्पश्येत्यर्थः । एवं सर्वत्र दिशो मेघमालाश्यामा भवन्ति । यद्वा कादम्बानां कलहंसानां स्त्रियः कादम्बिन्यस्ताभिः श्यामाः । नदीप्रवाहाणां कच्छाः कूलान्युद्यद्भिर्विकासितैः कन्दलैर्नवाङ्कुरैः कान्ता मनोज्ञा ये केतकवृक्षास्तद्धारका भवन्ति । यद्वा उद्यन्कन्दलः कन्दो यस्य कान्तकेतकस्येत्यर्थः ।

---

१ नीवार. २ निह. ३ भागेषु. ४ झर्झर. ५ आविर्भूत.

**माधवः**—सखे पश्यामि । किं तु दुर्लोकरमणीयाः संप्रत्यरण्यगिरिभूमयः । तत्किमेतत् । ( सास्रम् । ) अथवा किमन्यत् ।

**उत्फुल्लार्जुनसर्जवासितवहत्पौरस्त्यझञ्झानिल-**
**प्रेङ्खोलस्खलितेन्द्रनीलशकलस्निग्धाम्बुदश्रेणयः ।**
**धारासिक्तवसुंधरासुरभयः प्राप्तास्त एतेऽधुना**
**घर्माम्भोविगमागमव्यतिकरश्रीवाहिणो वासराः ॥ १७ ॥**

हा प्रिये मालति

---

यद्वा उद्यन्यः कन्दलो मल्लीवृक्षस्तं कान्तकेतकं च बिभ्रतीत्यर्थः । वनानां मालाविगन्धानि व्यक्तीभवत्सौरभानि यानि शिलीन्ध्रलोध्रकुसुमानि तैः स्मेरा सहासेव । मनोज्ञा वा । 'शिलीन्ध्रं कन्दलीपुष्पम्'इति विश्वः । शिलीन्ध्रं 'सूल' इति ख्यातम् । वनमिह पद्मं जलं विपिनं वा । 'जृम्भा विकासजृम्भयोः' इति विश्वः । डिम्बोऽण्डेऽपि च गोलके' इति धरणिः । 'डम्बरोऽस्त्री समारम्भः' इति विश्वः । 'कादम्बिनी मेघमाला कादम्बस्त्री च कथ्यते ।' इति शाश्वतः । 'कन्दलः कलहे कन्दे मल्ल्यामङ्कुरसङ्घयोः ।' इति मेदिनीकरः । 'पुंसि कच्छस्तथाविधः' इत्यमरः । वनं नीरेऽम्बुजे क्लीबं काननेऽप्यालये वनम्' । इति मेदिनीकरः ॥ १६ ॥ **उत्फुल्लेत्यादि** । अधुना त एते दिवसाः प्राप्ता ये मनोराज्येन मया धृता इत्यर्थः । इह त एत इति सर्वनामभ्यां दिनानामत्युत्कण्ठाहेतुत्वं ध्वनितम् । कीदृशाः । उत्फुल्लाभ्यामर्जुनशालाभ्यां वासितः सुरभीकृतो वहन् पौरस्त्यः प्राच्यो यो झञ्झानिलः प्रचण्डवायुः प्रावृषेण्यवातो वा तस्य प्रेङ्खोल आन्दोलनं तेन स्खलिताः स्वस्थानच्युता इन्द्रनीलमणिखण्डा इव श्यामा मेघपङ्क्तयो येषु ते । अत्रार्जुनग्रहणेऽपि द्वितीयतरोः सर्जस्य ग्रहणं कदम्बाद्युपलक्षणार्थम् । तथा ग्रीष्मोष्मतप्तमहीसेकसौरभवन्तः । ईषद्वृष्टौ तदुद्गमात् । घर्मस्य ग्रीष्मस्य विगमोपगमोऽम्भस आगम आगमनं तयोर्व्यतिकरः संबन्धस्तेन श्रियं शोभां वोढुं शीलं येषां ते । यद्वा घर्माम्भसः स्वेदजलस्य यौ विगमागमौ तयोर्व्यतिकरः संभेदः । वर्षारम्भ इत्यर्थः । तस्य श्रीः सम्पत्तिस्तद्वाहिन इत्यर्थः । पौरस्त्य इति पुरसस्त्यक् । 'झञ्झा ध्वनिविशेषे स्यात् इति मेदिनीकरः । तदन्वितोऽनिलो झञ्झानिलः । यद्वा 'झञ्झानिलः प्रावृषेण्यः' इति रत्नकोशः । अत्र वास्यमानेति कर्तव्ये संपूर्णक्रियात्वपरनिष्ठाप्रत्ययान्तवासितपदोपादानात्समस्तपुष्पसौरभसंक्रान्तिर्वायोर्ध्वनिता । अत एव मलयानिलाज्झञ्झानिलोत्कर्षः कटाक्षितः । उन्मादावस्थो माधवः । उन्मादश्चेष्टवियोगात् । यदाह—'इष्टजनस्य वियोगादुन्मादो विभवनाशाच्च' ॥ १७ ॥

---

१ दूरा. २ तटभू०. ३ मरुत्. ४ ०लत्स्खलि०; ०तेन्द्रशेखरमणिस्नि०. ५ एवा.

तरुणतमालनीलबहुलोन्नमदम्बुधराः
शिशिरसमीरणावधूतनूतनवारिकणाः ।
कथमवलोकयेयमधुना हरिहेतिमती-
र्मदकलनीलकण्ठकलहैर्मुखराः ककुभः ॥ १८ ॥

( शोकार्तिं नाटयति । )

**मकरन्दः**—कोऽप्यतिदारुणो दशाविपाको वयस्यस्य संप्रति । ( सास्रम् । ) मया पुनर्वज्रायमाणेन विनोद आरब्धः । ( निःश्वस्य । ) एवं च पर्यवसितप्रायैव नो माधवं प्रति प्रत्याशा । ( सभयं विलोक्य । ) कथं प्रमुग्ध एव । ( आकाशे । ) मालति मालति किमपरं निरनुक्रोशासि ।

अपहस्तितबान्धवे त्वया विहितं साहसमस्य तृष्णया ।
तदिहानपराधिनि प्रिये सखि कोऽयं करुणोज्झितः क्रमः ॥ १९ ॥

कथमद्यापि नोच्छ्वसिति । हन्त मुषितोऽस्मि दैवेन ।

मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ २० ॥

---

**तरुणेत्यादि** । कथमधुना दिशोऽहमवलोकयेयम् । तरुणतमालान्नीलास्तद्वद्वा नीलाः प्रचुरा उद्गच्छन्तो मेघा यासु ताः । शीतवातक्षिप्तनवजलकणाः । हरेरिन्द्रस्य हेतिरस्त्रं धनुस्तद्वतीः । मदकलमयूरकोलाहलैः शब्दवतीः । 'कलहं कलकलेऽपि च' इति विश्वः । सरित इति पाठे प्रतिबिम्बेन मेघत्वम् । हरेः कृष्णस्य हेतिश्चक्रं तन्नामकपक्षि-युक्ताः । दुःखितेनर्तुज्ञानं दुःखमयत्वेनैव । यदाह 'ऋतून्पश्यति दुःखार्तः सर्वान्दुःखस-माश्रितान् ।' इति । तदनेन प्रबन्धेन वर्षाकाल उक्तः । यदाह—'कदम्बनीपकुटजैः शाद्वलैः सेन्द्रगोपकैः । मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत्' ॥ १८ ॥ **शोकेति** । मूर्च्छितः पततीति भावः । **मकरन्दः** । विनोदश्चित्तस्वास्थ्यम् । प्रमुग्धः संज्ञाशून्यः । अनुक्रोशोऽनुकम्पा तद्विपरीतासि । **अपेत्यादि** । अगणितमात्रादिके हे सखि अस्य लोभेन त्वया साहसं कृतम् । तदिह प्रिये प्रीते निरपराधेऽपि निर्दयः क्रमः कोऽयम् । केयं परिपाटिस्तवेत्यर्थः । कथमीदृशं पतिं त्यक्त्वा निर्दयासीति भावः ॥१९॥ उच्छ्वासः संज्ञालाभः । **मातरित्यादि** । मातर्मातरित्यावेगः । द्विधा भवति हृदयमिति पीडा ।

---

१ येहम०. २ इति निःश्वस्य शो०. ३ कोयम०, कोप्यतिशयदा०. ४ संप्रति वर्तते. ५ वज्रमयेन. चज्रायमाणेन पुरो विनोदनमारब्धं, पुनरज्ञानेन वज्रमयेन किल विनोदः प्रारब्धः । ६ प्रायेण, ७ माधवप्रत्या. ८ हा सखि मा०. ९ मप्यधृष्टया. १० ०तक्रमः. ११ अविरल, अविकल.

कष्टं भोः कष्टम् ।

बन्धुताहृदयकौ[1]मुदीमहो मालतीनयनमुग्धचन्द्रमाः ।
सोऽ[2]यमद्य मकरन्दनन्दनो जीवलोकतिलकः प्रलीयते ॥ २१ ॥

हा वयस्य माधव ।

गात्रेषु चन्दनरसो दृ[3]शि शारदेन्दु-
रानन्द एव हृदये मम यस्त्वमासीः ।
तं त्वां निकामकमनीयमकाण्ड एव
कालेन जीवितमिवोद्धरता हतोऽस्मि ॥ २२ ॥

( स्पृशन्[4] । )

अकरुण वितर स्मितोज्ज्वलां
दृशमतिदारुण देहि मे गिरम् ।
सहचरमनुरक्तचेतसं
प्रियमकरन्द कथं न मन्यसे ॥ २३ ॥

( माधवः संज्ञां लभते )

---

अवयवसंधिः शिथिलीभवतीत्यस्वस्थता । विश्वं शून्यं मन्य इति बाह्यासंवेदना निर्वेदः । अविरतं[5]ज्वालं यथा तथान्तर्ज्वलामीति चिन्ताजनितो दाहः । अन्तरात्मा निरालम्बः सीदन्नवसादं गच्छन्गाढान्धकारे मज्जतीवेति ग्लानिः । विष्वक्सर्वतो मोहश्छादयतीति मोहः । मन्दभाग्योऽहं किंकरोमीति दैन्यम् । कथं शब्दः किमित्यर्थे । सर्वनामत्वान्नानार्थता । विष्वगित्यत्र सुषमादित्वात्षत्वम् ॥ २० ॥ परिदेवितमाह—**कष्टमति । बन्धुतेत्यादि** । सोऽयं बन्धुसमूहचित्तकार्तिक्युत्सवो मालतीनेत्रबालचन्द्रो मकरन्दहर्षजनकः सर्वजनतिलकोऽद्य प्रलयमापद्यत इत्यर्थः । 'मह उद्धव उत्सवः' इत्यमरः ॥ २१ ॥ **गात्रेष्वित्यादि** । यस्त्वं मम काये चन्दनरस आसीः । सुखस्पर्शत्वात् । नेत्रे शरत्कालीनचन्द्रः । आनन्दजनकत्वात् । चित्त आनन्द एव साक्षाद्धर्ष एवासीः । तं त्वामतिकान्तमकस्मादेव मम जीवनमिवोद्धरतोन्मूलयता कालेन समयेन यमेन वा हतोऽस्मि । यथा जीवनोद्धारेऽहं हतस्तथा त्वदुद्धारेऽपीति भावः ॥ २२ ॥ सोन्मादो विलपति—**अकरुणेत्यादि** । हे निर्दय हासमनोज्ञां दृशं देहि । हासपूर्वं पश्येत्यर्थः । यद्वा स्मितेन विकासेनोज्ज्वलां विकासितामित्यर्थः । वचनादानादतिदारुण हे मे वाचं देहि । मित्रमनुरक्तचित्तं हे प्रियमकरन्द कथं न मन्यसे । कथं नाङ्गीकरोषि । इहावेगादीनां सत्वात्करुणो रसः । यदाह—'इष्टनाशधनापायबन्धुव्यसनताडनैः । शापक्लेशोपघातैश्च जायते करुणो रसः । अश्रुतिश्वासवैवर्ण्यस्रस्ताङ्गैश्च स्मृतिक्षयैः । परिदेवितशोकाद्यैरभिनेयः स सूरिभिः' ॥ २३ ॥

---

१ पूर्ण, बाल. २ माधवोथ. ३ हृदि. ४ गात्रमस्य संस्पृशन्. ५ अविनष्ट.

**मक०**—( सोच्छ्वासम् । ) अयमचिरधौतराजपट्टरुचिरमांसलच्छविर्नव-जलधरस्तोयसीकरासारेण प्रियवयस्यं मे संजीवयति । दिष्ट्या समुच्छ्व-सितस्तावत् ।

**माधवः**—तत्किमत्र विपिने प्रियावार्ताहरं करोमि । ( विलोक्य । ) साधु साधु ।

**फलभरपरिणामश्यामजम्बूनिकुञ्ज-**
**स्खलनतनुतरङ्गामुत्तरेण स्रवन्तीम् ।**
**उपरि विघटमानः प्रौढतापिच्छनीलः**
**श्रयति शिखरमद्रेर्नूतनस्तोयवाहः ॥ २४ ॥**

( सरभसमुत्थायोन्मुखः कृताञ्जलिः । )

**कच्चित्सौम्य प्रियसहचरी विद्युदालिङ्गति त्वा-**
**माविर्भूतप्रणयसुभगाश्चातका वा भजन्ते ।**
**पौरस्त्यो वा सुखयति मरुत्साधुसंवाहनाभि-**
**र्विष्वग्विभ्रत्सुरपतिधनुर्लक्ष्म लक्ष्मीं तनोति ॥ २५ ॥**

---

**मकरन्दः** । अचिरधौतत्वेन राजपट्टस्य नीलत्वस्निग्धत्वे उक्ते । राजपट्टं खढीति ख्यातम् । रुचिरा दीप्तिमती मांसला घना छविः कान्तिर्यस्य सः । **माधवः** । वार्ता-हरो दूतः । अतिप्रवृद्धकालतया दूतप्रेषणम् । यदाह—' प्रसह्यमानकामार्तो बहुस्थानस-मुत्थितः । स्वावस्थादर्शनार्थं तु प्रेषयेद्दूतमात्मनः ' ॥ **फलेत्यादि** । नवमेघो गिरेरग्रं श्रयति । फलभारपाकश्यामजम्बूनिकुञ्जात्स्खलनेनाल्पकल्लोलां नदीमुत्तरेण नद्या उत्तर-समीपे । एनपा द्वितीया । कीदृशः उपरि विघटमान ऊर्ध्वस्थानं त्यजन् । विकसितमा-लपुष्पान्नीलस्तद्वद्वा नीलः । उपचितघनमालेति पाठ उपचिता घना च माला येषामि-त्यर्थः । घने नूतनत्वेनातिश्यामता । यद्वा स्रवन्तीमुपरि विघटमानो विविधप्रकारेण श्रयन् । उत्तरेणोत्तरदेशे। उत्तरेणेति विभक्तिप्रतिरूपको निपातः। किञ्चिदेवोत्तरेणेतिवत् । आश्रयार्थकतया घटेः सकर्मकता । ' स्रवन्ती निम्नगापगा ' इत्यमरः । कृताञ्जलि-रित्यनेन विनय उक्तः । विनयपूर्वकश्च संदेशः कार्यः । यदाह—' संदेशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् । तस्येयं समवस्थेति कथया विनयेन हि ' ॥ २४ ॥ **कच्चि-दित्यादि** । प्रार्थनोचितं सुभगप्रश्नमाह—हे सौम्य सुन्दर प्रिया वल्लभा सहचरी सततानुगता विद्युत्त्वामालिङ्गति कच्चित् । कथयेत्यर्थः ॥ ' कच्चित् काम-प्रवेदने ' इत्यमरः । विरहित्वेन कान्ताभिलाषात्प्रथमं कान्तासंगमप्रश्नः । ' चारुचन्द्र-

---

१ जलदः. २ कथमत्र, किमिवात्र. ३ परिणाह. ४ स्खलितः; तनुशरीराम्. ५ उपचित-घनमालप्रौढ ६ सादर०. ७ चर. ८ सुमुखाः, मुखराः, सुखिताः. ९ लक्ष्मीवदत्तत्.

( आकर्ण्य । ) अये[1] प्रतिरवभरितकन्दरानन्दितोत्कण्ठनीलकण्ठकलकेका-नुबन्धिना मन्द्रहुंकृतेन[2] मामनुमन्यते । यावदभ्यर्थये । भगवन् जीमूत[3] ।

**दैवात्पश्येर्[4]जगति विचरन्निच्छया मत्प्रियां चे-**
**दाश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् ।**
**आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः**
**प्राणत्राणं कथमपि करोत्यायताक्ष्याः स एकः[5] ॥ २६ ॥**

---

जयोः सौम्यः ' इति शाश्वतः । प्रियालिङ्गने सुखं तद्विरहे दुःखमिति त्वमपि जानासीति ध्वनितम् । यद्वा कञ्चिदेवमभिमतं ममेत्यर्थः । उत्पन्नस्नेहेन सुभगाः सुमुखाश्चातकास्त्वां सेवन्ते । वा समुच्चये । अनेनार्थिसंपात्तिरुक्ता । पुरोवातश्च मृदुप्रेरणाभिस्त्वां सुखयति । अन्योऽपि सहायश्चरणमुष्टिग्रहणादिरूपसंवाहनां कुरुत इति ध्वनिः । अनेन सहायसंपत्तिरुक्ता । विष्वक्सर्वतो लक्ष्मीं शोभां बिभ्रदिन्द्रधनुः । कर्तृ । लक्ष्म चिह्नं तव तनोति । अनेन प्रसाधनमुक्तम् । विश्वं बिभ्रदिति पाठे हे ।विश्वं बिभ्रद्भुवनं दधान । वर्षेण शस्यादिसमृद्ध्या जगदुपकारकत्वमुक्तम् । प्रसाधनमाह । इन्द्रधनूरूपं चिह्नं तव शोभां तनोति । बिम्बं बिभ्रदिति पाठे तु बिम्बं मण्डलं शोभां तनोति । कीदृशम् । इन्द्रधनुश्चिह्नं बिभ्रद्दधानम् । तदिह जगदुपकारकतया ममाप्युपकारं करिष्यसीति भावः ॥ २५ ॥ गर्जितेनानुमतिमाह-**अये इति** । प्रतिशब्दभरितकन्दरत्वेनानन्दिता समृद्धोत्कण्ठा यस्य सः । यद्वा आनन्दिता हृष्टा उत्कठा उद्ग्रीवा इत्यर्थः । मन्द्रं गभीरम् अनुमन्यते स्वीकरोति । आर्तिवशाद्देवत्वारोपणेन भगवन्निति । अवधारणे यावत् । जीमूत मेघ ॥ **दैवादित्यादि** । इच्छया जगति विचरंस्त्वं मत्प्रियां यदि दैववशात्पश्येर्द्रक्ष्यसि तदा प्रथमं तां प्रबोध्याथ माधवदशां कथयिष्यसि । अवस्थानिवेदनेन तन्मरणमाशंक्याह-कथयता त्वयाशा पुनःसंगमप्रत्याशा सैव तन्तुः । जीवनबन्धहेतुत्वात् । नैवात्यर्थमुच्छेद्यः । चैवार्थे । अत्र हेतुमाह-स आशातन्तुरेकस्तस्याः प्राणत्राणं कष्टाकष्ट्या करोति नाहमित्यर्थः । इह तावत्कालं सा जीवति न वेति संभावना दर्शनस्य दैवादित्यनेनोक्ता । प्रसङ्गतो मत्कार्यमिति जगति विचरन्नित्यनेनोक्तम् । मत्प्रियामित्यनेन सुकुमारत्वादिना विरहदुःखासहिष्णुतोक्ता । आदावाश्वासनं वार्ताश्रवणपटुत्वार्थम् । अत्यन्तमित्यनेन मध्यमविधया दशाकथनम् । तेन च तन्नैराश्यनिषेध इत्युक्तम् । कथमपीत्यनेनाशातन्तुमात्रं तद्रक्षणाय कल्पत इत्युक्तम् । आयताक्ष्या इत्यनेन कटाक्षादिस्मरणेन गुणकीर्तनम् । माधवस्येयं माधवीया । वृद्धाच्छः । उन्मादावस्थेयम् ।

---

१ अयं, अथ किमयं. २ कण्ठेन कान्तेन ध्वनिना मामनुमन्यते. ३ जीमूतनाथ. ४ पश्येर्यदि जगति तां मत्प्रियां मालतीं चेत्, विचरन्मत्प्रियां मालतीं. ५ एव.

( सहर्षम् । ) अये प्रचलितः । तदन्यतः संचरामि ( इति परिक्रामति । )

**मक०**—( सोद्वेगम् । ) कथमिदानीमुन्मादोपरागो माधवेन्दुमास्कन्दति । हा तात हा अम्ब हा भगवति परित्रायस्व परित्रायस्व । पश्य माधवस्यावस्थाम् ।

**माधवः**—धिक्प्रमादः ।

**नवेषु लोध्रप्रसवेषु कान्तिर्दृशः कुरङ्गेषु गतं गजेषु ।**
**लतासु नम्रत्वमिति प्रमथ्य व्यक्तं विभक्ता विपिने प्रिया मे ॥ २७ ॥**

हा प्रिये मालति ।

**मक०**—

**सुहृदि गुणनिवासे प्रेयसि प्राणनाथे**
**कथमपि सहपांसुक्रीडनप्रौढसख्ये ।**
**प्रियजनविरहाधिव्याधिवेगं दधाने**
**हतहृदय विदीर्य त्वं द्विधा न प्रयासि ॥ २८ ॥**

**माधवः**—सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः ।

---

असंबद्धप्रलापात् ॥ २६ ॥ सहर्षत्वं मद्वचनमङ्गीकृत्य प्रचलित इति । **मकरन्दः** । उपरागो राहुग्रासः । शैशवे संकटप्रदेशे पित्रादीनां स्मरणस्य स्वभ्यस्ततया विरहसंकटेऽपि तदाह हा तातेति । **माधवः** । प्रमादोऽनिष्टम् । **नवेष्वित्यादि** । नूतनलोध्रपुष्पेषु कान्तिः पाण्डिमा गौरत्वं वा । इह नवपदेन स्निग्धतोक्ता । दृशो विलोकितानि हरिणीषु । गमनं हस्तिषु । नम्रत्वं लतासु । इतिशब्द आद्यर्थे । 'हेला लीलेत्यमी हावाः' इतिवत् । प्रमथ्य मारयित्वा मे प्रिया विपिने विभक्ता खण्डखण्डीकृत्य धृता । यद्वा । इति प्रकारार्थः । तेन लोध्रप्रसवादिभिर्मे प्रिया विभागीकृता । कान्त्यादिविभागद्वारा प्रियाविभाग एवोन्नीयत इत्यवधेयम् । विपिन इति प्राणिवधस्थानाभिप्रायम् ॥ २७ ॥ **सुहृदीत्यादि** । हे हतहृदय कथमपि विदीर्य द्विधा त्वं न प्रयासि । हतेति निन्दायाम् । मित्रे गुणनिधानेऽतिप्रेमवति जीवेश्वरे सहधूलिक्रीडागाढमैत्रे कान्तावियोगमनोव्यथाव्याधिमन्तर्दधाने सति । सुहृदित्यादौ हेतुहेतुमद्भावः । 'धूलिस्त्रियां पांसुर्ना' इत्यमरः ॥ २८ ॥ प्रियाविभागाशङ्कां निरस्यति—**सुलभेति** । संनिवेशः प्रकारः । अनुकारः सादृश्यम् । तथा च लोध्रप्रसवादीनि प्रियाका-

---

१ संभावयामि. २ साकूतम्. ३ ०राग एव. ४ ०स्व मां. ५ (द्विपदिकया सर्वतोवलोक्य.) ६ गजेषु यातं. ७ स्फुटं. ८ प्रियास्मिन्. ९ अस्मात्परं इति मूर्च्छति इत्यधि. ए. पु. १० कथमिव. ११ ०खेदं. १२ ( आश्वस्योत्थाय ) सुल०.

भवतु। एवं तावत् । (उच्चैः[1]।) अयमहं भोः प्रणिपत्य भूधरारण्यवासिनः[2] सत्त्वान्विज्ञापयामि । मुहूर्तमवधानदानेन मामनुगृह्णन्तु भवन्तः ।

**भवद्भिः सर्वाङ्गप्रकृतिरमणीया कुलवधू-**
**रिहस्थैर्दृष्टा वा विदितमथ वास्याः किमभवत् ।**
**वयोऽवस्थां तस्याः शृणुत सुहृदो यत्र मदनः**
**प्रगल्भव्यापारश्चरति हृदि मुग्धश्च वपुषि ॥ २९ ॥**

कष्टं भोः कष्टम् ।

**केकाभिर्नीलकण्ठस्तिरयति[4] वचनं ताण्डवादुच्छिखण्डः**
**कान्तामन्तः[5]प्रमोदादभिसरति मदभ्रान्ततारश्चकोरः ।**
**गोलाङ्गूलः कपोलं छुरयति रजसा कौसुमेन[6] प्रियायाः**
**कं याचे यत्र तत्र ध्रुवमनवसरग्रस्त एवार्थिभावः ॥ ३० ॥**

अयं च

**दन्तच्छदारुणिमरञ्जितकान्तदन्त-[7]**
**मुन्नम्य चुम्बति वलीवदनः प्रियायाः ।**
**काम्पिल्ल[8]कप्रसवपाटलगण्डपालि**
**पाकारुण[9]स्फुटितदाडिमकान्ति वक्त्रम् ॥ ३१ ॥**

---

न्त्याद्यनुकारीणि न तु सा विभक्तेति भावः । सत्त्वान्प्राणिनो विज्ञापयामीति सानुनयं वचनम् ॥ **भवद्भिरित्यादि** । भवद्भिरिहस्थैः सर्वाङ्गेषु स्वभावरम्या सा कुलवधूर्दृष्टा वा । अथवास्या भवद्भिः किं विदितमभवत् । शुभमशुभं वा किं विज्ञातमित्यर्थः । ननु तस्याः किं वय इत्याह—हे सुहृदस्तस्या वयोवस्थां शृणुत । यत्र वयोवस्थायां हृदि मदनः प्रगल्भव्यापारो वपुषि मुग्धो बालश्चरति । एतेन वयःसन्धिरुक्ता । सर्वाङ्गेत्यनेनाभिज्ञान-प्रकाशनम् । कुलवधूत्वेन चाञ्चल्याभावः । इहस्थैरित्यनेन परिचयचातुरी । वाकारद्वयेन दर्शनवृत्तान्तयोः सफलत्वं दर्शयति । ' सुरते निःसाध्वसता प्रागल्भ्यं समुदाहृतम् ॥ ' इति भरतः ॥ २९ ॥ **केकाभिरिति** । किं यत्र तत्र याचे । अपि तु न किमपि प्रार्थये । यतोऽप्रस्तावग्रस्तोऽर्थिभावोऽर्थित्वम् । अनवसरमाह——नृत्यादुद्गतपिच्छभारो मयूरः केकाभिर्वचनं छादयति । चकोरः पक्षिभेदो मत्ततया भ्रमत्तारकः संश्चित्त-हर्षात्प्रियामभिसरति । गोलाङ्गूलः श्याममुखो वानरः पुष्पजधूल्या कान्तायाः कपोलौ चित्रयति । अतः सत्वानामन्यत्रासक्ततयार्थित्वानवसर इति भावः । 'प्लवङ्गकीशप्लवगगोलाङ्गूलवलीमुखाः ।' इत्यमरमाला । कं याच इति पाठे कं प्राणिनं प्रार्थय इत्यर्थः ॥ ३० ॥ **दन्तेत्यादि** । वलीवदनो वानरोऽयं कान्ताया मुख-

---

१ प्रकाशं. २ चारिणः. ३ खलु. ४ स्थगयति. ५ कान्तामत्तः. ६ कौंकुमेन. ७ दन्तमाल. ८ ल्यक. ९ पाकान्तर.

एष[1] प्रियतमास्कन्धविश्रान्तकरः करी । कथमत्राप्यनवसरः ।

**कण्डूकुड्मलितेक्षणां सहचरीं[2] दन्तस्य कोट्या लिख-**
**न्पर्यायव्यतिकीर्णकर्णपवनैराह्लादिभिर्वीजयन् ।**
**जग्धार्धैर्नवसल्लकीकिसलयैरस्याः स्थितिं कल्पय-[3]**
**न्धन्यो[4] वन्यमतङ्गजः परिचयप्रागल्भ्यमभ्यस्यति[5] ॥ ३२ ॥**

( अन्यतोवलोक्य ) अयं तु

**नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं**
**नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः ।**
**दानज्यानिविषादमूकमधुपव्यासङ्गदीनाननो**
**नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥ ३३ ॥**

अलमनेनार्यासितेन[6] । एष[7] सानन्दसहचरीसमाकर्ण्यमानमधुरगम्भीरकण्ठ-[8]गर्जितध्वनिरपरो मत्तमातङ्गयूथपालः[9] प्रत्यग्रविकसितकदम्बसङ्घात[10]सुरभि-

मुत्क्षिप्य चुम्बति । कीदृशम् । अधररागेण रक्ता मनोज्ञा दशना यत्र तत् । काम्पिल्लो रोचनीवृक्षः । स्वार्थे कन् । तस्य प्रसवेन पुष्पेण फलेन वा रक्तगण्डप्रदेशः । पाकान्त-रमन्तिमपाकस्ततः स्फुटितं विदीर्णं यद्दाडिमफलं तत्कान्ति । तत्सममित्यर्थः । तदिहा-प्यनवसर एव । ' शाखामृगवलीमुखाः ' इत्यमरः । ' काम्पिल्लः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि । ' इत्यमरः । रोहिणानोकहो रोहणवृक्षः ॥ ३१ ॥ **कण्डूरित्यादि** । अयं सुकृती वन्यहस्त्यस्याः प्रियायाः परिचयप्रागल्भ्यं सुरतनिःसाध्वसतामनुतिष्ठति । कीदृशः । कण्डूतिमुद्रितेक्षणां प्रियां दन्ताग्रेणालिखन्नीषदुल्लिखन् । कण्डूयन्नित्यर्थः । अत एव कण्डूकाले कुड्मलितेक्षणत्वं जातिः । पर्यायेण क्रमेण निक्षिप्तौ कर्णौ तयोर्वातैः सुखदैर्वीजयन् । कवलिताधैर्नवशल्लकीपल्लवैरस्याः प्राणधारणं कल्पयन् ॥ ३२ ॥ **नान्त-रित्यादि** । अयं स्तम्बेरमो हस्ती ताम्यति ग्लानो भवति । नूनं निश्चितं प्रेयसीवि-श्लेषेण विह्वलः । जलदेषु ध्वनत्सु सत्स्वीषद्गम्भीरमुद्गतकण्ठगर्जनं नान्तर्वर्तयति न करोति । समीपस्थात्सरस आवर्जितैर्मिलितैः शैवलैः कवलान्न करोति । मदहान्या यो विषादस्तेन मूकानां भ्रमराणां व्यासङ्गेनान्यचित्ततया शोच्यमुखः । यद्वा व्यासङ्गो विशेषेणासङ्ग इत्यर्थः । तदिह मदहानिश्चिन्तया संतापात् । दीनत्वमधोमुखचिन्तनात् । एतेनानुस्मृतिसंजाता विषयव्यावृत्तिरुक्ता ॥ ३३ ॥ अहमिवायमपि कान्तातिरिक्तमन्यन्न वेत्तीत्यत आह—**अलमिति** । रतौत्सुक्यान्मधुरकण्ठगर्जितश्रवणाद्वा सानन्देति । मातङ्गो

१ अग्रतोवलोक्य; अये एष; अयं च रोहिणानोकहस्कन्ध०; करः—कण्ठ; विभ्रान्तकरः. २ अनुचरीं. ३ कारयन्. ४ अन्यः, मन्ये. ५ प्रारम्भ. ६ नाप्या०. ७ ( सानन्दम् ) एष. ८ गम्भीरधीरकंण्ठध्वनिः प्रवृद्धनवयौवनोन्मादप्रस्तुतामंदसप्तपर्णप्रसूनमकरंदसुंदरमदवारिसंस्वा-ददत्तचित्तोन्मत्तानुरक्तेंदिंदिरनिकरझणझणायमानरणत्कारझंकारसंभारश्रवणालंबितकर्णो गो-दावरींदीवरवासितामंदमकरन्दतुंदिलमलयानिलोल्लासितामलविदलितललितकमलपरंपरापुंज-परिमलप्राग्भारघ्राणसुखितेंद्रियवर्गोपरो मत्तमातंगवर्गपालः. ९ वर्गपालकः. १० संवादि, संपात.

शीतलामोदबहलसंगलितमांसलकपोलनिष्यन्दकर्दमितकषायमुद्दलितकमलिनीखण्डविप्रकीर्णपर्णकमलकेसरमृणाल बिसकन्द कोमलाङ्कुरनिकरमनवरतप्रवृत्तकमनीयकर्णतालताण्डवप्रचलजर्जरितजलतरङ्गविततनीहारमुत्रस्तकुररसारसं सरोऽवगाह्य विहरति । भवत्वेनमाभाषे । महाभाग नागपते श्लाघ्ययौवनः खल्वासि । कान्तानुवृत्तिचातुर्यमप्यस्ति भवतः । किंतु ( सापवादम् । )

**लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः**
**पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।**
**सेकः सीकरिणा करेण विहितः कामं विरामे पुन-**
**र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥ ३४ ॥**

कथमवधीरणानीरसं व्रजति । हन्त मूढ एवास्मि योऽस्मिन्वनचरे वयस्यमकरन्दोचितं व्यवहरामि । हा प्रियवयस्य ।

**धिगुच्छ्वसितवैशसं मम यदित्थमेकाकिनो**
**धिगेव रमणीयतां त्वदनुभावभावाद्दृते ।**

---

हस्ती । संपातः संपर्कः । संगलितो मिलितः । मांसलः पीनः । निस्यन्दो मदः । कषायः सुगन्धिः । करटो गण्डदेशः ॥ ' सुरभौ च कषायः स्यात् ' इति शाश्वतः । समुद्दलितमुन्मूलितम् । पर्णं पत्रम् । ' तालो गीतक्रियामाने मध्यमाङ्गुलिसंमिते । ' इत्यमरमाला । ' नीहारस्तु कुहेलिका ' इति हारावली । कुररः पक्षिभेदः । अनुवृत्तिः सेवा । सापवादं सदोषम् ॥ **लीलेत्यादि** । क्रीडोन्मूलितबिसदण्डकवलसमाप्तिषु विकसत्पद्मसुरभितस्य जलस्य गण्डूषसंक्रान्तयः संबन्धाः संपादिता दत्ताः । पुष्यदिति पाठे पुष्टीभवदित्यर्थः । अम्भःकणवता स्थूलहस्तेन सेकः कृतः । तदिदं द्वयं कामं युक्तमेव । दोषमाह—विरामे सरोऽवगाहविरतौ गमनकाले पुनरकुटिलनालपद्मपत्रच्छत्रं न स्नेहाद्धृतम् । एतदयुक्तमित्यर्थः । अतः कान्तानुवृत्तिं न जानासीति भावः । ' पुष्कराम्भोरुहाणि च ' इत्यमरः । गण्डूषपदेन स्वयं पीत्वा जलादानं ध्वनितम् । ' नलिनी पद्मिनी पद्मम् ' इत्यमरमाला । ' अरालः कुटिले मतः ' इति मेदिनीकरः । आतपात्त्रायत इत्यातपत्रमित्युचितं पदम् ॥ ३४ ॥ चलचित्तत्वेन पार्श्वस्थं मित्रमपश्यन् सखेदमाह—**कथमिति धिगित्यादि** । इत्थमेकाकिनो मम यदुच्छ्वसितवैशसं प्राणधारणदुःखं तद्धि वृथा । एकाकित्वमत्र

---

१ संव०, संक०. २ तीरं समुद्धृतकम० प्रकीर्णकेसरमृणालकन्दाङ्कुर०; कषायकरटः. ३ ०रमनोहरम्; ०ङ्कुरमाहरन्ननवरत. ४ प्रचलकर्णजर्जरिततरलतर. ५ नीहारवित्रस्त. ६ खण्ड. ७ संपातिताः. ८ (निरूप्य) कथं. ९ चरेपि. १० व्याहरामि. ११ वयस्य मकरन्द. १२ गुंच्छ्वसिमि. १३ समघटीत्थ०. १४ ०त्वनुभवं वृथा भाविनम्, विरोधिरमणी. यवस्त्वनुभवाद् द्विधाभाविनः; वस्त्वनुभवान्वृथाभाविनः ।

परिणाम एकाकिन्या उपनतः । महाभाग माधव उपस्थितास्तमित-महोत्सवस्ते जीवलोकः संवृत्तः । ( हा पिअसहि सुप्पसण्णमुहचन्दसुन्दरि कहिं गदासि । को वा सिरीसकुसुमसुउमारस्स दे सरीरस्स देव्वदुव्विलसिअपरिणामो एक्काकिणीए उवणदो । महाभाअ माहव उवत्थिदत्थमिदमहूसवो दे जीअलोओ संउत्तो । )

**काम०**—( सविशेषखेदम् । ) हा वत्सौ

**अभिनवरागरसोऽयं भवतोः कृतकौतुकः परिष्वङ्गः ।**
**लवलीलवङ्गयोरिव नियतिमहावात्ययाभिहतः ॥ ३ ॥**

**लव०**—( सोद्वेगम् । ) हताश वज्रमय सर्वथा नृशंसमसि हृदय । ( हदास वज्जमअ सव्वहा णिसंसं सि हिअअ । ) ( इति हृदयमाहत्य पतति । )

**मद०**—सखि लवङ्गिके ननु भणामि क्षणमात्रमपि तावत्समाश्वासिहि । ( सहि लवङ्गिए णं भणामि क्खणमेत्तं वि दाव समस्सस । )

**लव०**—सखि किं करोमि दृढवज्रलेपप्रतिबद्धनिश्चलमिव जीवितं न मां परित्यजति । ( सखि किं करोमि दिढवज्जलेवपडिवद्धणिच्चलं विअ जीविदं ण मं परिच्चअदि । )

**काम०**—वत्से मालति जन्मनः प्रभृति वल्लभा ते लवङ्गिका । तत्किमेनामुज्जिहानजीवितां वराकीं नानुकम्पसे । इयं हि

---

स्तमितो महोत्सवो यत्र सः । **अभिनवेत्यादि** । अभिनवे रागेऽनुरागे रस इच्छा यत्र । यद्वा । अभिनवरागो नूतनासक्तो रसः शृङ्गारो यत्र । कृतं कौतुकं हर्षो नर्मोत्सवो वा यत्र । सोऽयं भवतोर्युवयोः परिष्वङ्ग आलिङ्गनं नियतिर्दैवं सैव महावात्या तयाभिहतः । लवली लताभेदः । लवङ्गो वृक्षभेदः । तयोः परिष्वङ्गः संपर्क इव । अभिनवौ लौहित्यरसौ यत्र सः । रसः आर्द्रता । कृतं कौतुकं कुतूहलं द्रष्टृणां येन सः । 'रागोऽनुरागे लौहित्ये' इति विश्वः । 'शृङ्गारादौ द्रवे चापीच्छायामप्ययं रसः ।' इति धरणिः । कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः । कुतूहलेऽपि तत्प्रोक्तम्' इति मेदिनीकरः । तदिहाचेतनोपमया तयोरपि बाल्योर्वृक्षविवाह इव मया विवाहोऽप्यकारि । दैवेन स न सोढ इत्युक्तम् । देशान्तरनयनान्नियतेर्वात्यया सह रूपकम् ॥ ३ ॥ **लवङ्गिका** । अत्र नृशंसं नाशकम् ॥ **लवङ्गिका** । अत्र प्रतिबद्धं घटितमत एव निश्चलम् । **कामन्दकी** ।

---

१ दुर्विलास. २ हा महा०; महाणुभाअ. ३ उदिअत्थ०. ४ रतो. ५ विहतः. ६ सावेगम् ७ हदाहि०. ८ मदअंतिए. ९ जन्मतः. १० ०भतरा-तमा.

उज्ज्वलालोकया स्निग्धा त्वया त्यक्ता न राजते ।
मलीमसमुखी वर्तिः प्रदीपशिखया यथा ॥ ४ ॥

कथं च[1] कल्याणि कामन्दकीं त्यजसि । नन्वकरुणे मदीयचीवरोष्म-[2]णैव ते प्रगुणीकृतान्यङ्गानि ।

स्तन्यत्यागात्प्रभृति सुमुखी दन्तपाञ्चालिकेव
क्रीडायोगं तदनु विनयं प्रापिता वर्धिता च ।
लोकश्रेष्ठे गुणवति वरे स्थापिता त्वं मयैव
स्नेहो मातुर्मयि समधिकस्तेन युक्तस्तवापि ॥ ५ ॥

( सवैक्लव्यम् । ) चन्द्र[3]मुखि संप्रति निराशास्मि संवृत्ता ।

अकारणस्मेर[4]मनोहराननः
शिखाललाटार्पितगौरसर्षपः ।
तवाङ्क[6]शायी परिवृत्तभाग्यया
मया न दृष्टस्तनयः स्तनंधयः ॥ ६ ॥

---

उज्जिहानमूर्ध्वं गतम् । कण्ठोपगतमिति यावत् । **उज्ज्वलेत्यादि** । लवङ्गिकामुद्दिश्य । त्वया त्यक्तेयं न शोभते प्रदीपशिखया त्यक्ता वर्तिरिव दशेव । उज्ज्वल आलोको दर्शनं यस्यास्तया । शिखापक्ष आलोक उद्योतः । स्निग्धा प्रीता । स्नेहवती तैलादियोगात् । मलीमसं म्लानं मुखमाननं यस्याः सा । मलीमसं दग्धतया श्यामं मुखमग्रं यस्याः सा च ॥ ४ ॥ प्रगुणीकृतानि ऋजूकृतानि । उत्पत्त्यनन्तरं नाडीनां शुद्धद्रव्येणर्जुकरणात् । यद्वा प्रगुणता पुष्टिः । **स्तन्येत्यादि** । तेन हेतुना मातुः सकाशादधिकः स्नेहोऽयं मयि तव युक्तः । यद्वा तेन हेतुनायं वियोगस्तव युक्त इति सोल्लुण्ठम् । यतः स्तनपानत्यागादारभ्य क्रीडायोगं खेलम् । यद्वा क्रीडा कला योगो विद्याप्रयोगस्तं प्रापिता । ततः पश्चाद्विनयमनौद्धत्यं प्रापिता वृद्धिं प्रापिता च । दन्तपाञ्चालिकेव दन्तमयकृत्रिमपुत्रिकेव । जनेषु श्रेष्ठे शोभादिगुणयुक्ते जामातरि त्वं स्थिरीकृता । परिणयात् । मयैव न तु पित्रादिनेत्यर्थः । बाल्य एव कान्तिमत्त्वात्सुमुखीत्युक्तम् । 'पाञ्चालिका पुत्रिकायाम्' इति विश्वः । पाञ्चालिकापि क्रीडादिकं कार्यत इति प्रसिद्धमेव । विद्याभ्यासौ बाल्य एव स्त्रीणाम् । यदाह--'बाल्येऽधीयीत विद्यां स्त्री कामशास्त्रादिकं पुनः ।' पुरुषगुणा अपि भरते--'शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च । ललितौदार्यतेजांसि पौरुषेया गुणा अपि' ॥ ५ ॥ करुणस्नेहाद्विक्लवता । **अकारणेत्यादि** । विगतभाग्यया मया तव पुत्रो न दृष्टः । कीदृशः ।

---

त्वं; जहासि, परित्य०. २ राञ्चलो०; प्रगुणिता॥नि. ३ हा चन्द्र०. ४ स्नेह. ५ शेखरः. ६ तवाङ्क--ङ्ग--गामी.

**लव०**—भगवति प्रसीद । निःसहास्मि सांप्रतं जीवितोद्वहनेन । साहमस्माद्गिरिशिखरादात्मानमवधुत्य निर्वृता भविष्यामि । तथा मे भगवत्याशिषं करोतु येन जन्मान्तरेऽपि तावत्प्रियसखीं प्रेक्षिष्ये । ( भअवदि पसीद । णिस्सहम्मि संपदं जीविदुव्वहंणेण । साहं इमादो गिरिसिहरांदो अत्ताणं अवधुणिअ णिव्वुदा भविस्सं । तहा मे भअवदी आंसिसं करेदु जेण जम्मन्तर वि दाव पिअसहिं पेक्खिस्सं । )

**काम०**—ननु लवङ्गिके कामन्दर्क्यपि नातःपरं वत्सावियोगेन जीविष्यंति । समश्चोंयमुत्कण्ठावेग आवयोः । किं च ।

> **संगमः कर्मणां भेदाद्यदि नं स्यान्न नाम सः ।**
> **प्राणानां तु परित्यागे संतापोपशंमः फलम् ॥ ७ ॥**

**लव०**—यथा यूयमाज्ञापयथ । ( जहा तुह्मे आणवेध । ) ( उत्तिष्ठति । )

**काम०**—( सर्दयं वीक्ष्य । ) वत्से मदयन्तिके ।

**मद०**—किमाज्ञापयथ अग्रेसरी भवेति । अवहितास्मि । ( किं आणवेध अग्गेसरी होहि त्ति । अवहिदह्मि । )

---

अकारणेनालक्षितहेतुतया स्मेरमीषद्धसनं तेन मनोज्ञं मुखं यस्य सः । शिखायां ललाटे च दत्तश्वेतसर्षपः । एतत्तु रक्षार्थं । क्रोडे सुप्तः । स्तनपायी च ॥ ६ ॥ **लवङ्गिका ।** अत्र जीवितेति । तां विना जीवनमनर्हमिति भावः । निर्वृतेति । मरणे तद्वियोगदुःखापनयादिति भावः । **कामन्दकी । उत्कण्ठेति ।** जन्मान्तरे तां द्रक्ष्यामीत्युत्कण्ठा ममापीत्यर्थः । तत्कथं मयापि स्वतोऽसिद्धतया त्वय्याशीर्दातव्येति भावः । **संगम इत्यादि ।** कर्मणां वैचित्र्यादस्माकं मालत्या सह संगमो न स्यात् । अनागमो निर्युक्तिको यतः सः । मालत्या मम च कर्मणां साम्ये मानाभावाज्जन्मान्तरे संगमो निर्युक्तिक इति भावः । तर्हि प्राणत्यागेनालमत आह—प्राणत्यागः पुनस्तापशान्तिफलः । तथा च तदर्थं स क्रियत इति भावः । संगमाभावे तु मानम्—' मृतोऽपि मानुषः शक्तो नानुगन्तुं मृतं जनम् । जायावर्जं च सर्वस्य याम्यः पन्था विभिद्यते ॥ ' इति स्मृतिः ॥७॥ **मदयन्तिका ।** भाविवाक्यमुन्नीयाह—**किमिति ।** अत्राग्रेसरी मरणे

---

१ व्वहणे, णस्स. २ गिरिवरादो, प्पपादादो. ३ आसिप्पसादं; आसिसं पसादीकरेदु. ४ क्यापि...जीवितव्यं. ५ समानश्चायमावयोरुत्कण्ठाप्रसंगः. ६ न स्यादनागमः; न स्यात्ततो तु मा; कर्मणां योगान्न हि स स्यादनागमः. ७ संतापोपरमः, ८ मदयन्तिकाम्.

**लव०**—सखि प्रसीद। विरमैतस्मादात्मनो व्यापादनात्। मा खल्वेतं जनं विस्मरिष्यसि। ( सहि पसीद। विरम एत्तो अत्तणो वावादणादो। मा क्खु एदं जणं विसुमरेसि।

**मद०**—( सक्रोपमिव। ) अपेहि। नास्मि ते वशंवदा। ( अपेहि। णह्मि दे वसंवदा। )

**काम०**—हन्त निश्चितं वराक्या।

**मदय०**—( स्वगतम्। ) नाथ मकरन्द नमो नमस्ते। ( णाह मअरन्द णमोणमो दे। )

**लव०**—भगवति अयमेव मधुमतीस्रोतःसंदानितपवित्रमेखलो महीधरविटङ्कः। (भअवदि अअं ज्जेव्व मधुमदीसोत्तसंदाणिदपवित्तमेहलो महीहरविटङ्को।)

**काम०**—कृतमिदानीं प्रस्तुतान्तरायेण। ( सर्वाः पतितुमिच्छन्ति। )

( नेपथ्ये। )

आश्चर्यमाश्चर्यम्[१]।

**व्यतिकर इव भीमस्तामसो वैद्युतश्च**
**क्षणमुपहितचक्षुर्वृत्तिरुद्भूय शान्तः।**

**काम०**—( विलोक्य साद्भुतहर्षम्। )

**कथमिह मम वत्सस्तत्किमेतत्**

**मक०**—( प्रविश्य। )

**किमन्य-**
**त्प्रभवति हि महिम्ना स्वेन योगीश्वरीयम्॥ ८॥**

( नेपथ्ये। )

कथमतिदारुणो जनसंमर्दो वर्तते।

---

प्रथमा। अवहिता मर्तुम्॥ **लवङ्गिका**। अत्राहं प्रिय इत्याशयः। **मदयन्तिका**। अत्र वशंवदायत्ता। ते वचो न करिष्यामीत्यर्थः। **कामन्दकी**। निश्चितं निश्चयः कृतः। **मदयन्तिका**। स्वगतं गुरुसमीपे प्रियस्मरणस्यायुक्तत्वात्। अत्र जन्मान्तरेऽप्ययं प्रियः स्यादिति तत्कालेऽस्य स्मरणमिति भावः॥ **लवङ्गिका**। अत्र मधुमती नदी। संदानितं बद्धम्। विटङ्को निर्गतोन्नतप्रदेशः। 'विटङ्क उन्नते देशे' इति रत्न-

---

१ गदा. २ उपगत. ३ पुनर्नेपथ्ये-कथ०. ४ योगे. ५ जनावमर्दः संप्रवर्तते.

**मालत्यपायमधिगम्य विरक्तचेताः**
**सांसारिकेषु विषयेषु च जीविते[1] च ।**
**निश्चित्य वह्निपतनाय सुवर्णबिन्दु-**
**मभ्येति भूरिवसुरित्यधुना हताः स्मः ॥ ९ ॥**

**मद० ङ्किके**—झटिति मालतीमाधवयोर्दर्शनाभ्युदयो झटित्यत्या-हितं च । ( झत्ति मालदीमाहवाणं दंसणब्भुदओ झत्ति अच्चाहिदं अ । )

**काम०मकरन्दौ**—दिष्ट्या—हा धिक्कष्टं भोः । आश्चर्यमाश्चर्यम् ।

**किमयमसिपत्रचन्दनरसच्छटा[3]सारयुगपदवपातः ।**
**अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥ १० ॥**
**सं[4]जीवनौषधिविषव्यतिकरमालोकतिमिरसंभेदम् ।**
**अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥ ११ ॥**

( नेपथ्ये । )

हा तात विरम विरम द[5]र्शनोत्सुकास्मि ते वदनकमलस्य । प्रसीद संभावय माम् । कथं मम कारणात्समस्तलोकालोकान्तरालविख्यातनिर्मलकुलैकमङ्गलप्रदीपभूतमात्मानं परित्यजसि । मया पुनरनार्यया निरनुक्रोशा

---

कोशः ॥ ८ ॥ सकरुणः कश्चिद्वनेचर आह—**मालतीत्यादि** । भूरिवसुर्निश्चित्य निश्चयं कृत्वा वह्निपतनायाग्निं प्रवेष्टुं सुवर्णबिन्दुं शिवं लक्ष्यीकृत्यागच्छति । कीदृशः । मालतीमरणं ज्ञात्वा संसारविषयेष्वैश्वर्यादिषु जीवितेषु प्राणधारणेषु च । विविक्तं विवेकशालि । निर्विण्णमिति यावत् । चेतो यस्य सः । विरक्तेति पाठः सुगम एव । जीवितेष्विति बहुवचनं प्राणधारणक्रियाणां बहुत्वात् । अधुना भूरिवसुवियोगे सति हताः स्मः ॥९॥ **मदय०** अत्रात्याहितं महाभीतिः । **किमित्यादि** । असयः खड्गाः पत्राणि यस्य वृक्षस्य । दारकत्वात् । चन्दनरसच्छटा । आश्चर्यात् । आसारो वृष्टिः । तयोरेकदावपातः पतनं किमयम् । भूरिवसुगतानर्थश्रवणादसिपत्रपातः । मालतीमाधवयोर्जीवनाच्चन्दनरसासार इति भावः । किमयं मेघहीनोऽमृतवर्षोऽग्निस्फुलिङ्गमिश्रः ॥ १० ॥ **समित्यादि** । संजीवनौषधेर्विषस्य च व्यतिकरं मेलकं तेजसस्तिमिरस्य च मेलकं वज्रस्य चन्द्रकरस्य च मिलनं विधाताद्य सदृशीकरोतीत्यर्थः । आर्याच्छन्दः ॥ ११ ॥ **नेपथ्ये** । अत्र लोको जगत् । अलोकः स्वर्गः । तयोर्मध्य इत्यर्थः । मङ्गलं श्रेयः । अनार्यया बालया ।

---

१ ०तेषु. २ मह्वसवो. ३ छटाभिसार, सारयोर्यु०. ४ अपि च । सं०. ५ संदर्शन समु०.

यूयमिति संभावितमासीत् । ( हा ताद विरम दंसणूसुआह्मि दे वअणकमलस्स । पसीद संभावेहि मं । कधं मम कारणादो समत्थलोआलोआन्तरालविक्खोदणिम्मलकुलेक्कमङ्गलप्पदीवभूदं अत्ताणं परिच्चिअसि । मए उण अणज्जाएँ णिरणुक्कोसा तुह्मेति संभाविदं आसि । )

**कामन्दकी**—हा वत्से मालति ।

**जन्मान्तरादिव पुनः कथमपि लब्धासि यावदयमपरः ।**
**उपराग इव शशिकलां कवलयितुमुपस्थितोऽनर्थः ॥ १२ ॥**

**इतरे**—हा प्रियसखि । ( हा पिअसहि । )

( ततः प्रविशति प्रमुग्धां मालतीं धारयन्माधवः । )

**माधवः**—कष्टं भोः कष्टम् ।

**एषा प्रवासं कथमप्यतीत्य**
**याता पुनः संशयमन्यथैव ।**
**को नाम पाकाभिमुखस्य जन्तो-**
**र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ १३ ॥**

**मक०**—( सहसोपसृत्य माधवं प्रति ) सखे अथ सा योगिनी क्व ।

**माधवः**—

**श्रीपर्वतादिहाहं सत्वरमपतं तयैव सह सद्यः ।**
**करुणवनेचरवचनादनन्तरं तां न पश्यामि ॥ १४ ॥**

---

निरनुक्रोशा निर्दयाः । नन्दनाय दानोपक्रमात् । **जन्मेत्यादि** । उपरागो राहुग्रहः । यथा कृष्णपक्षाज्जन्मान्तराच्चन्द्रस्यैका कलोपलभ्यते तां च कवलयितुं राहुरुपस्थितस्तथा तावकीनमिदं वृत्तान्तस्वरूपमिति भावः ॥ १२ ॥ प्रमुग्धा पितृशोकजनितमोहात् । **माधवः** । अनर्थपरंपरायोगादतिकष्टम् । **एषेत्यादि** । इयं मालती प्रवासमतीतापि राक्षसीहस्तमतिक्रान्तापि पुनरन्यथैव कथं संशयं प्राप्ता । पितृशोकात् । अत्रोपपत्तिमाह— फलदानाभिमुखस्य भाग्यस्य द्वाराणि सुखदुःखोपनयनानि निवारयितुं को नाम जन्तुरीष्टे समर्थो भवति । अपि तु न कोऽपीत्यर्थः । 'प्रवासः परहस्ते च परदेशेऽपि कथ्यते' इति नानार्थः । नामानवक्लृप्तौ । द्वाराणीति बहुत्वेन निवारणेऽशक्यतोक्ता ॥ १३ ॥ **श्रीपर्वतादिति** । श्रीपर्वतादहमिह सत्वरमतिशीघ्रमपतमागतोऽस्मि । तया मालत्या सह । करुणाप्रधानवनेचरवचनादनन्तरं तां मालतीं न पश्यामि । मालत्यपायमधिगम्ये-

---

१ ऊसुआह्मि दे वअणकमलदंसणस्स. २ विक्खम्भणिम्मलेक्क (विष्कम्भनिर्मलैक.) ३ अलज्जाए णिरणुक्कोसाए ( शया ) तुह्मे परिच्चत्ता. ४ दपि. ५ भीरु यावदयम्. ६ विकलयितुं. ७ सहसोपेत्य. ८ तादहं सत्वरमापतितस्तयैव. ९ दन्तरितां.

**काम०मकरन्दौ**—( सप्रणयमाकाशे ) महाभागे पुनः परित्रायस्व नः । किमर्थमन्तर्हितासि[1] ।

**लव०न्तिके**—सखि मालति ननु भणामि सखि मालतीति । ( सोत्कम्पम्[2] । ) भगवति परित्रायस्व । चिरनिरुद्धनिश्वासनिःस्फुरमस्या हृदयम् । हा अमात्य हा प्रियसखि द्वावपि युवां परस्परावसानस्य कारणं जातौ । ( सहि मालदि णं भणामि सहि मालदि त्ति । भअवदि परित्ताहि । चिरणिरुद्धणिस्सासणिप्फुरं[3] से हिअअं । हा अमच्च हा पिअसहि दुवे वि तुह्मे परप्परावसाणस्स[4] कारणं जादा । )

**कामन्दकी**—हा वत्से मालति ।

**माधवः**—हा प्रिये[5] ।

**मकरन्दः**—हा प्रियसखि ।

( सर्वे मोहमुपगम्य पुनः संज्ञां लभन्ते )

**कामन्दकी**—( ऊर्ध्वमवलोक्य । ) तत्किमेष झटिति पात्यमाना-[6] दिवाम्बुदादम्बुनिवहः परिस्खलन्नस्मान्प्रीणयति[7] ।

**माधवः**—(सोच्छ्वासम् । ) अये प्रत्यापन्नचेतना[8] मालती । तथा ह्यस्याः

**भवति विततश्वासोन्नाहप्रणुन्नपयोधरं[9]**
**हृदयमपि च स्निग्धं चक्षुर्निजप्रकृतौ स्थितम् ।**
**तदनु वदनं मूर्च्छाच्छेदात्प्रसादि विराजते**
**परिगतमिव प्रारम्भेऽह्नः श्रिया सरसीरुहम् ॥ १५ ॥**

( नेपथ्ये । )

---

त्यादि करुणवनेचरवचनम् । आर्याच्छन्दः ॥ १४ ॥ **लवङ्गिकामदयन्तिके** । सखि मालति ननु भणामि सखि मालति इति प्रलापक्रमोऽयम् । अत्र निः-स्फुरं चलनशून्यम् । **कामन्दकी** । सौदामिनीप्रभावकृतवृष्ट्याश्चर्यमाह—किमिति । मेघाभावाद्वृष्टेराश्चर्यहेतुतयेवकारः संगच्छते । **माधवः** । प्रत्यापन्नं पुनरायातम् । **भवतीत्यादि** । अस्या नासा दीर्घश्वासा भवति । चलनादेव । प्रसन्नस्तनं हृदयमपि भवति । चक्षुश्च स्निग्धं सन्निजप्रकृतिस्थिरं भवति । तदनु तत्पश्चान्मुखम् । कर्तृ । मूर्च्छापगमात्प्रसन्नं शोभते शोभया सर्वतो व्याप्तं पद्ममिव । परिणतमिति पाठे विकसितमित्यर्थः । विततश्वासोन्नाहप्रणुन्नपयोधरमिति पाठे

---

१ अत्रैवान्त; किमित्यन्तारितासि. २ सोत्कण्टम्. ३ णिच्चलं. ४ ०रासासणस्स. ५ प्रिये मालति. ६ पात्यमान इव. ७ स्रवन्नस्मान्प्रीणाति. ८ चेतनेव. ९ श्वासानासा प्रसन्नपयो.

**अविगणय्य नृपं सहनन्दनं चरणयोर्नतमग्निचये पतन् ।**
**सपदि भूरिवसुर्विनिवर्तते मम गिरा गुरुसंमदविस्मयः ॥ १६ ॥**

**माधवमकरन्दौ**—( ऊर्ध्वमवलोक्य सहर्षम् ) भगवति दिष्ट्या वर्धसे ।

**सा योगिन्यम्बरतो विघटितजलदाभ्युपैत्ययं यस्याः ।**
**वागमृतजलासारो जलदजलासारमतिशेते ॥ १७ ॥**

**कामन्दकी**—प्रियं नः प्रियं नः ।

**मालती**—दिष्ट्या चिरस्य प्रत्युज्जीवितास्मि । ( दिट्ठिआ चिरस्स पच्चुज्जीविदह्मि । )

**कामन्दकी**—( सहर्षबाष्पम् । ) एह्येहि पुत्रि मालति ।

**मालती**—हा कथं भगवती । ( कथं भअवदी । ) ( इति पादयोर्निपतति । )

**कामन्दकी**—( उत्थाप्यालिङ्ग्य मूर्ध्न्याघ्राय । )

**जीवं जीवितसमाय जीवितं देहि जीवतु सुहृज्जनश्च ते ।**
**अङ्कैस्तुहिनसङ्गशीतलैः पुत्रि मां प्रियसखीं च जीवय ॥ १८ ॥**

**माधवः**—वयस्य मकरन्द संप्रत्युपादेयो माधवस्य जीवलोकः संवृत्तः ।

**मकरन्दः**—( सहर्षम् ) एवमेतत् ।

**मद० लवङ्गिके**—प्रियसखि मनोरथातिक्रान्तदर्शने संभावयावां परिष्वङ्गेण । ( पिअसहि मणोरहातिक्कान्तदंसणे संभावेहि अह्मे परिसङ्गेण । )

---

दीर्घश्वासस्योन्नाहेनोद्गमेन प्रेरितौ स्तनौ यत्र तदित्यर्थः ॥ १५ ॥ **अवीत्यादि** । तत्क्षणं मद्वाण्यामात्यो निवर्तते । कीदृशः । नन्दनसहितं नृपं पादनतमपि तिरस्कृत्याग्निसमूहे पतन् । गाढहर्षाश्चर्यश्च । सहभावस्य विकल्पात्सहनन्दनमिति ॥ ॥ १६ ॥ **सेत्यादि** । सेयं योगिनी भिन्नमेघा संप्रत्यायाति यस्या अयं वागमृतजलसारो वचनामृतजलधारा जलधरजलधारामप्यतिक्रामति । सौहित्यादिना ततोप्यधिका भवतीत्यर्थः ॥ १७ ॥ **मालती** । अत्र चिरस्य बहुकालेन । **जीवेत्यादि** । हे पुत्रि त्वं जीव । ततो वल्लभाय जीवितं देहि । त्वज्जीवनाद्बन्धवोऽपि ते जीवन्तु । प्रशस्ताङ्गैः । प्रशस्तार्थे कन् । हिमसंबन्धशीतलैर्मां लवङ्गिकां च जीवय ॥ १८ ॥ **मदयन्तिकाल०** । संभावय योजय

---

१ मुखे. २ वर्तितः. ३ सविस्मयम्. ४ योगिनीयमतिरयाविघ०, पैति नौ. ५ (सहर्ष )प्रियं. ६ एतन्नास्ति क्वचित्. ७ सहर्षं सबाष्पं च. ८ ०यच;उपाघ्राय. ९ एहि. १० एवैतत्. ११ इतरे.

**मालती**—हा प्रियसख्यौ । ( हा पिअसहिओ । ) ( इत्युभे आलिङ्गति । )

**कामन्दकी**—वत्सौ किमेतत् ।

**माधवमकरन्दौ**—भगवति

**कपालकुण्डलाकोपदुर्जातजनितापदः ।**
**वयमभ्युद्धृताः कृच्छ्रान्निर्बन्धादार्ययानया ॥ १९ ॥**

**कामन्दकी**—कथमघोरघण्टवधाविजृम्भितमेतत् ।

**मद० लवङ्गिके**—अहो आश्चर्यम् । पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः । ( अहो अच्चरिअं । पुणरुत्तदारुणस्स परिणामरमणिज्जत्तणं विहिणो । )

( प्रविश्य । )

**सौदामिनी**—( उपसृत्य ) भगवति कामन्दकि[1] स एष वश्चिरंतनोऽन्तेवासी जनः प्रणमति ।

**कामन्दकी**—अये भद्रा[2] सौदामिनी ।

**माधवमकरन्दौ**—( सविस्मयम् । ) कथमियं सा भगवत्याः पक्षपातस्थानमाद्यशिष्या सौदामिनी । तत्सर्वमधुना संगच्छते ।

**कामन्दकी**—

**एह्येहि भूरिजन[3]जीवितदानपुण्य-**
**संभारधारिणि चिरा[4]दसि हन्त दृष्टा ।**
**दत्तप्रमोदमपि नन्द[5]य मे शरीर-**
**मालिङ्ग्य सौहृदनिधे विरम प्रणामात् ॥ २० ॥**

---

**कपालेत्यादि** । अनया सौदामिन्या कपालकुण्डलारोषाद्दुर्जातं मालत्यपहरणरूपं तज्जनितविपत्तेः सकाशात्कृच्छ्रात्संकटान्निर्बन्धेनातिप्रयत्नेन वयमुद्धृताः ॥ १९ ॥ **मदयन्तिका०** । अत्र पुनःक्लेशकारितया पुनरुक्तदारुणत्वम् । प्रतिकूलस्यैव विधेरधुनानुकूलत्वमित्याश्चर्यम् । **एहीत्यादि** । मालतीरक्षणेन बहुजनरक्षणजन्यपुण्यनिवहधारिके हे चिरेण त्वं दृष्टासि । अतो हेतोस्त्वमेह्यागच्छ । हन्त हर्षे । ममाङ्गमालिङ्ग्य हर्षय । शरीरं कीदृशम् । दत्तानन्दमपि मालतीदर्शनेनेति भावः । हे सौहृदाश्रये नतेर्विरम । त्वमेव नमस्या यतः ॥ २० ॥ तदेवाह—**वन्द्येत्यादि** । त्वमेव संसारस्य नमस्या एवंविधै-

---

१ एतन्नास्ति क्वचित्. २ भद्रम्. ३ वसु. ४ चिराय मयासि. ५ मभिनन्दय.

अपि च ।

> **वन्द्या त्वमेव जगतः स्पृहणीयसिद्धि-**
> **रेवंविधैर्विलसितैरतिबोधिसत्त्वैः ।**
> **यस्याः पुरापरिचयप्रतिबद्धबीज-**
> **मुद्भूतभूरिफलशालि विजृम्भितं ते ॥ २१ ॥**

**मद० लवङ्गिके**—इयं सार्या सौदामिनी । ( इअं सा अज्जा सौदामिणी ।

**मालती**—बाढम् । अनया खलु भगवतीसम्बन्धपक्षपातिन्या निर्भर्त्स्य कपालकुण्डलामात्मन आवसथमुपनीय भगवतीस्नेहनिर्विशेषं समाश्वासितास्मि । किं च केसरावलीसाभिज्ञानहस्तयेहागत्य सर्वे यूयं संधारिताः । ( बाढम् । इमाए क्खु भअवदीसंबन्धपक्खवादिणीए णिब्भच्छिअ कपालकुण्डलं अत्तणो आवसधं उवणीअ भअवदीसिणेहणिव्विसेसं समासासिदह्मि । किं अ केसरावलीसाभिण्णाणहत्थाए इह आगत्तूण सव्वे तुह्मे संधारिदा । )

**मद० लवङ्गिके**—सुप्रसन्ना नः कनिष्ठा भगवती । ( सुप्पसण्णा णो कणिट्ठा भअवदी । )

**माधवमकरन्दौ**—अहो नु खलु भोः ।

---

विलसितैराकाशक्रमरूपैर्वा श्लाघनीयसिद्धिस्त्वं यतः । कीदृशैः बोधिसत्वा जीमूतवाहनादयः तानप्यतिक्रामन्ति तैः । तेषामेकैकजीवनात्त्वया त्वनेकजीवनादतिशय इति भावः । यद्वा बोधिसत्वो बुद्धविशेषः तदतिक्रमवर्तिभिः । अनेकपुण्यकारित्वात् । यस्यास्तव विजृम्भितं चेष्टितं पूर्वपरिचयेन प्रतिबद्धमङ्कुरितं बीजं करणं यत्र तत् । उद्भूतप्रचुरफलयुक्तं च भवति । तथा च त्वदुपकरणेन कृतार्थास्मीति भावः । अन्यदपि कलमाद्यङ्कुररूपं विजृम्भितं पूर्वप्रतिबद्धबीजमुद्भूतप्रचुरफलशालि भवतीति ध्वनिः ॥ २१ ॥ **मालती** । अत्र समासादिता प्रापिता । केसरावली बकुलमाला सैवाभिज्ञानं प्रत्ययचिह्नं हस्ते यस्याः । तथा संधारिता रक्षिता । मज्जीवनेनेति भावः । **मदयन्तिकालवङ्गिके** । अत्र त्वज्ज्येष्ठा कामन्दकी यथास्माकं सुप्रसन्ना तथा त्वमपि भवेत्यर्थः । सौदामिनीज्येष्ठत्वादपि भगवत्या गुरुत्वात्तस्यामत्यादरसूचनम् । यद्वा सौदामिन्या एव भगवतीकनिष्ठत्वेनादर उक्तः ।

---

१ जग–तां–ति. २ अविरोधिस०. ३ म्भितेन, तं नः. ४ सादिता ( टी० ). ५ वलयाभि० ( टी० ) ६ मरणाद्भूय ( टी० ) ७ मरणादो सा एसा जीविदप्पदाइणी सौ० इत्य० क्वचित्. ८ इतरे.

अपि चिन्तामणिश्चिन्तापरिश्रममपेक्षते ।
इदं त्वचिन्तितं मन्ये कृतमाश्चर्यमार्यया ॥ २२ ॥

**सौदा०**—( स्वगतम् । ) हन्त लज्जयति मामत्यन्तसौजन्यमेतेषाम् । ( प्रकाशम् । ) भगवति एतत्प्रहृष्टनन्दनाभिनन्दितेन राज्ञा पद्मावतीश्वरेण भूरिवसोः प्रत्यक्षमभिलिख्य पत्रमायुष्मतो माधवस्य प्रेषितम् । ( लेखमर्पयति । )

**कामन्दकी०**—( गृहीत्वा वाचयति । ) स्वस्त्यस्तु वः । परमेश्वरः समाज्ञापयति यथा

श्लाध्यानां गुणिनां धुरि स्थितवति श्रेष्ठान्वये च त्वयि
प्रत्यस्तव्यसने महीयसि परं प्रीतोऽस्मि जामातरि ।
तेनेयं मदयन्तिकाद्य भवतः प्रीत्यै तव प्रेयसे
मित्राय प्रथमानुरागघटिताप्यस्माभिरुत्सृज्यते ॥ २३ ॥

( माधवमुद्दिश्य ) वत्स श्रूयताम् ।

**माधवः**—श्रुतम् । इदानीं सर्वथा कृतार्थोऽस्मि ।

**मालती**—दिष्ट्येदानीमपहृतं हृदयस्याशङ्काशल्यम् । ( दिट्ठिआ एत्तँहि अवहदं हिअअस्स आसङ्कासल्लं ।)

**लव०**—सांप्रतं निरवशेषं श्रीमाधवस्य मालत्याश्च फलिता मनोरथाः । ( संपदं णिरवसेसं माहवसिरिणो मालदीए अ फलिदा मणोरहा ।)

---

**अपीत्यादि** । चिन्तामणिरपि चिन्तारूपं परिश्रममपेक्षते । अचिन्तितप्रदाने चिन्तामणित्वव्याघातादिति भावः । इदं पुनराश्चर्यं मन्ये यदार्यया सौदामिन्याचिन्तितं कृतमिति । तथा चात्रानुकारोऽपि नेति भावः । अत एवात्यन्ताश्चर्यम् ॥ २२ ॥ **सौदामिनी** । नन्दने प्रहर्षो मकरन्दमदयन्तिकानुरूपघटनात् । वरगुणानाह—**श्लाध्यानामिति** । यदिह त्वयि जामातर्यत्यर्थं प्रीतोऽस्मि तेनेयं मदयन्तिका तव प्रीत्यै त्वत्प्रीतिं कर्तुं भवतः प्रेयसे मित्राय सुहृदे मकरन्दायाद्यास्माभिरपि दीयते । पूर्वमनुरागेण दत्ता । प्रीतिहेतुमाह—सच्चरितानां गुणिनां च गणनीये स्थिते प्रशस्तवंशे । पाठान्तरे ख्यातवंशे । प्रत्यस्तं क्षिप्तं व्यसनमशुभं यत्र तत्र । सातिशये । प्रत्युत्पन्नमताविति पाठेऽभिनवोत्पन्नबुद्धौ प्रतिभावतीत्यर्थः ॥ २३ ॥ **माधवः** । कृतार्थता नृपनन्दनाविरोधात् । **मालती** । आशङ्का विरोधादिविषया । मर्मभेदित्वाच्छल्यम् । **लवङ्गिका** ।

---

१ इदं त्वकृतमन्येन कृताश्चर्यमाचिन्तितम्. २ आलिख्य. ३ ०न्ववाये त्वयि. ४ कापि. ५ ०श्य सहर्षम्. ६ सर्वतः. ७ दाणिं, णो हिअ. एदं वि पाव अदगदं. ८ णिरवसेसा पूरिदा ०सिरिणो मणो.

**मक०**—( पुरोऽवलोक्य । ) कथमव[1]लोकिताबुद्धरक्षिते कलहंसकेन सह प्रमोदनिर्भरं नृत्यन्त्याविव एवागच्छतः ।

( ततः प्रविशतोऽवलोकिताबुद्धरक्षिते कलहंसकश्च । )

**सर्वे**—( विविधं नृत्यं कृत्वोपसृत्य सप्रणामं कामन्दकीं प्रति ) जय भगवति कार्यनिधाने । ( माधवं प्रति । ) जय मकरन्दनन्दन माधव पूर्णचन्द्र दिष्ट्या वर्धसे । ( जअ भअवदि कज्जणिहाणे । ) ( जअ मअरन्दणन्दण माहव पुण्णचन्द दिट्ठिआ वड्ढसि । ) ( सर्वे सस्मितं पश्यन्ति )

**लव०**—को वास्मिन्संपूरितसर्वप्रकारमहोत्सवे न परिहाससंपूर्णो भवति । ( को वा [2]इमस्सिं संपूरिदसव्वप्पआरमहूसवे ण परिहाससंपुण्णो होइ । )

**काम०**—एवमेतत् । अस्ति वा कुताश्चिदेवं[3]भूतमद्भुतं[4] विचित्ररमणीयोज्ज्वलं प्रकरण[4]म् ।

**सौदा०**—इदमत्र [5]रमणीयतरं यदमात्ययोर्भूरिवसुदेवरातयोश्चिरात्[6]पूर्णोऽयमितरेतरापत्यसंब[7]न्धात्मा मनोरथः ।

**मालती**—( स्वगतम् । ) कथमिव । ( [8]कहं विअ । )

**माधवमकरन्दौ**—( सकौतुकम् । ) भगवति अन्यथा वस्तु[9]वृत्तमन्यथा वचनमार्यायाः ।

---

अत्र श्रीमाधवस्येति प्राकृते पूर्वनिपातानियमत्वात् । फलिता मनोरथाः । एतयोरायतिशुद्धविवाहादिति भावः । **सर्वे इति** । भगवति कार्यनिधाने । अत्र जयेति शेषः । **लवङ्गिका** । अपि तु सर्वोऽपीत्यर्थः । **कामन्दकी** । अद्भुतमित्यादिनोपगूहनमाह । यदाह—‘अद्भुतस्य तु संप्राप्तिर्भवतादुपगूहनम् ।’ इति । प्रकरणं मालतीमाधवाख्यम् । कथमिव । अत्र पित्राद्यनुमत्या नाहं दत्ता तत्कथमियमेवमाहेति भावः । अन्यथेति । चोरिकया वृत्तं वस्तु विवाहकृत्यम् । आर्यायाः सौदा-

---

१ बु०तावलोकिताकलहंसा दूरतः समुदितानस्मान्वीक्ष्य तत्रैव हर्षनिर्भरं प्रनृत्ताः; हंसश्च दूरतः समागतानस्मान्वीक्ष्य तत्रैव हर्षनिर्भरं नृत्यन्त इत एवागच्छन्ति । २ परिपूरिद सव्वमहू०, सव्वप्पआरपरिपू०; को वा. होइ इत्यस्यस्थाने तदीअकज्जं वि अ एतास्सिं संपूरिदम् । अदो सव्वप्पआरमहूसवे णच्चइ । ( तदीयकार्यमपि चैतास्मिन्संपूर्णम् । अतः सर्वप्रकारमहोत्सवे नृत्यति । ) इ.पा. ३ एवमद्भु. ४ महाप्र०. भूतं महाद्भुतं. ५ रामणीयकं, रमणीयान्तरं. ६ संपूर्णः. ७ न्धरूपः. ८ तं कहं. ९ वस्तु प्रवृत्तमन्यथा वचनपर्यायः.

**लव०**—( जनान्तिकं ) भगवति किं प्रतिपत्तव्यम् । ( भअवदि किं[1] पडिवज्जिदव्वं । )

**काम०**—( स्वगतम् । ) संप्रति मदयन्तिकासंबन्धान्नन्दनोपग्रहात्प्रत्यस्तशङ्काः खलु वयम् । ( प्रकाशम् । ) वत्सौ न खल्वन्यथा वस्तुवृत्तं यतः श्रावकावस्थायामस्मत्सौदामिनीप्रत्यक्षमनयोर्वृत्तेयं प्रतिज्ञावश्यमावाभ्यामपत्यसंबन्धः कर्तव्य इति । प्रधानप्रकृतिकोपस्त्वेवं परिहृतः ।

**मालती**—अहो संवरणम् । ( अहो संवरणं[7] । )

**माधवमकरन्दौ**—आश्चर्यम् । जयन्ति[8] महतां संस्तुतापलापिन्यः कल्याणिन्यो नीतयः ।

**कामन्दकी**—वत्स[9]

**यत्प्रागेव मनोरथैर्वृतमभूत्कल्याणमायुष्मतो[10]-**
**स्तत्पुण्यैर्मदुपक्रमैश्च फलितं क्लेशोपि[11] मच्छिष्ययोः ।**
**निष्णातश्च[12] समागमोऽपि विहितस्त्वत्प्रेयसः कान्तया**
**संप्रीतौ नृपनन्दनौ यदपरं[13] प्रेयस्तदप्युच्यताम् ॥ २४ ॥**

---

मिन्या वचनमन्यथा । अमात्यागोचरेणेत्यर्थः । **लवङ्गिका** । अत्र सौदामिनीवचनं किंरूपमित्याशयः । **कामन्दकी** । श्रावकेति पाठकदशायाम् । प्रकृतिः शिष्टः । **मालती** । अहो संवरणम् । अत्र मन्त्रिणो मत्पितुरिति शेषः । **माधवमकरन्दौ** । कल्याणिन्यो मम संपन्ना यत इति भावः । **यदित्यादि** । यदायुष्मतोर्युवयोः । कल्याणमन्योन्यलाभरूपं पूर्वं मनोरथैरेव वृतमाकाङ्क्षितमभूत्तत्पुण्यैर्मदुपक्रमैश्च निसृष्टार्थदूतीकल्पकपटैः फालितम् । मच्छिष्ययोरवलोकितासौदामिन्योः क्लेशोऽपि फलित इति लिङ्गविपरिणामो योग्यत्वात् । क्लेशेनेति पाठे ताभ्यामेव फलितमित्यर्थः । तथा त्वन्मित्रस्य मकरन्दस्य मदयान्तिकया सह संबन्धोऽपि निष्णातो निःशङ्कं विहितः । नृपनन्दनावतिप्रीतौ विहितौ । अत एव निःशङ्कता ।

---

१ किं एत्थ. २ अपवार्य. ३ संम्बन्धेन नन्दनावग्रहात्. ४ वस्तु प्रवृत्तमन्यथा वचनमस्याः । ५ समक्षं तयोः. ६ प्रतिहतः, ७ ०रणं उपाअस्स. ८ जयन्ति खलु महतां विसंवादिन्यः प्रत्यायिन्यः कल्याणाः; जयन्ति खलु महतामविसंवादिन्यः कल्याणनीतयः, महतां विसंष्ठुलाः प्रतीपिन्यः कल्याणिन्यः, महतामेव संस्तुतप्रलापिण्यः. ९ वत्स माधव. १० ०ष्मता. ११ क्लेशैश्च, क्लेशेपि. १२ निष्ठातश्च, संपूर्णश्च, विस्तीर्णश्च. १३ किम०.

**माधवः**—( सहर्षं प्रणमन्[1]। ) भगवति अतःपरमपि प्रियमस्ति । तथापीदमस्तु [2]भगवतीपादप्रसादात् ।

**सन्तः सन्तु निरन्तरं सुकृतिनो विध्वस्तपापोदया**
**राजानः परिपालयन्तु वसुधां धर्मे[3] स्थिताः सर्वदा ।**
**काले संततवर्षिणो जलमुचः सन्तु क्षितौ[4] पुण्यतो**
**मोदन्तां घनबन्धुबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः[5] ॥ २५ ॥**

( इति निष्क्रान्ताः सर्वे । )

**इति मालतीमाधवे दशमोऽङ्कः ।**

**इति मालतीमाधवं नाम प्रकरणं समाप्तम् ।**

---

अपरमतःपरं यच्छ्रेयः प्रियं कर्तव्यमस्ति तदप्युच्यताम् ॥ तत्करोमीत्यर्थः ॥ २४ ॥ **सन्त इत्यादि** । सज्जना निरन्तरं धार्मिकाः सन्तु । अत्र हेतुः । विनष्टपापोद्रेकाः । तथा च सतां पुण्यमुज्जृम्भतां पापं नश्यतामित्यर्थः । राजधर्मे रक्षणादौ सदा स्थिता नृपा भुवं रक्षन्तु । धनं दधातीति वसुधेत्यनेन विपुलधनवत्त्वं भुव उक्तम् । काले वर्षादौ शस्याविरोधि सम्यक् ततं व्यापकं यथा तथा वर्षणशीला मेघाः सन्तु । अकालवृष्ट्या शस्यनाशात्काल इत्युक्तम् । अत्र हेतुमाह—प्रजानां लोकानां पुण्यात् । प्रजा हृष्यन्ताम् । घनबद्धो निरन्तरकृतो बान्धवानां संबन्धिनां सुहृदां मित्राणां गोष्ठीषु प्रकृष्टहर्षो याभिस्ताः । तदनेन प्रशस्तिरुक्ता । काव्योपसंहारोऽप्यनेनैव कृतः । यदाह—'वरदानस्य उक्तिर्या सा काव्य उपसंहृतिः । इति ॥ २५ ॥

लब्धं दुर्लभशासनं सुरगणग्रामश्च कैवर्तिका-
द्विद्यावंशविभूषिते अपि शुभे छत्रे उभे धारिते ।
येनायं समभूद्द्विजातितिलकश्चण्डेश्वरः पण्डितो
मीमांसैकरहस्यवश्यहृदयो दातावदाताशयः ॥ १ ॥
देवेशे समसूत सोऽयममले मीमांसकं सत्कविं
सोप्युच्चैरजनिष्ट जैमिनिमते रामेश्वरं सद्बुधम् ।
सूते स्मायमपि प्रतीपजयिनं मीमांसयालंकृतं
शुद्धं धीरगदाधरं कविवरं पुत्रं पवित्राशयम् ॥ २ ॥

---

१ प्रणमति. २ भरतवाक्यम् ।

**शिवम ( श्चीर ) स्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।**
**दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवतु लोकः ॥ २५ ॥**

३ वृत्तौ. ४ स्थिराः. ५ बद्ध; गोष्ठी—भोग. ६ अतःपरं—काम०—एवमस्तु इत्यधिकम् । ७ इति श्रीभवभूतिविरचितं समाप्तमिदं मा० प्र०

विद्याधरं वरमजीजनदेष धीरं
हीरं जनेषु जयिनं गुरुणोक्तशास्त्रे ।
प्रासूत सोऽयममलं गुणिनं सुपुत्रं
तं रत्नपूर्वधरमेष जगद्धरं च ॥ ३ ॥

येनापाठि कठोरगोतममणेर्वैशेषिकं खण्डनं
येनाश्रावि सकोषकाव्यनिवहं तत्पाणिनीयं मतम् ।
छन्दोऽलंकरणं च भव्यभरतं येनाध्यगायि श्रुति-
स्तस्यामुष्य जगद्धरस्य कवितुष्टीकेयमुज्जृम्भताम् ॥ ४ ॥

असूत यं रत्नधरोऽतिभव्योऽतिभव्यरूपा दमयन्तिकापि ।
जगद्धरं तत्कृतटिप्पणेऽङ्कः समाप्तिमापद्दशमोऽनवद्यः ॥ ५ ॥

**इति श्रीमन्महोपाध्यायपण्डितराजमहाकविराजधर्माधिका-रिश्रीरत्नधरपण्डितात्मजश्रीजगद्धरविरचितायां मालतीमाधवटीकायां दशमोऽङ्कः ।**

---

१ कृतश्रीकण्ठपदलाञ्छनभवभूतिवाग्विलासमाल०.

# अनुक्रमणी ।

# MÂLATÎMÂDHAVA.

## ACT I.

### Prologue.

May the shakings of the head of Vináyaka accompanied with *Chîtkâras* (sounds expressive of fear, &c.) long protect you!-the shakings (which were occasioned) at the time of the vehement dance of Śiva (the trident-holder), as the lord of serpents, with his body contracted, entered the front aperture of his nostril through the fear of Kártikeya's peacock that was attracted by the sound of the tabor joyfully beaten with his hands by Nandi, and which made the directions resound with the (buzzings of the) swarms of bees flying up from his temples. (1)

Moreover,

May the matted hair of the Lord of creatures (Śiva), from which the waters of the Mandákinî are trickling from the obstructing string of skulls lying crosswise on the crest, the splendour of which is intermingled with the lightning-like lustre of the eye on his fore-head, the charming crescent of the moon on which is mistaken for the tender spire of a *ketaka* and the mass of which is tied up with the encircling creeperlike (flexible) bodies of serpents, grant you protection! (2)*

---

*** Additional sls. Moreover,**

**May the waves of the river on S'iva's head protect you!—the waves which, falling upon the rows of his teeth, are shattered as they roll along with a splash, which make a gurgling sound as they rush through the ravines and caves of his nostrils, eyes, and ears, which are torn into spray as they dash against his cheek-joints and which swell again as they wind their way through the cavernlike skull of Brahmâ.**

**And further.**

**May the third eye of Purâri, which consumed Madana, of the tawny hue of whose lids the whole assemblage of lightnings**

(*After the Benediction.*)

MANAGER—Away with prolixity. (*Looking forth*) Ah, the divine luminary, the lamp (illuminator) of all the divisions of the world, has risen for the most part. I will adore him. (*Bowing.*)

O thou whose manifestation is the universe, thou art the abode of auspicious splendours ; be pleased, O glorious one, and put in me (endow me with) the resources of a leader in a preeminent degree ; O lord of the world, destroy whatever sin I, humble that I am, might have committed ; O divine one, vouchsafe to me every kind of blessing for the attainment of supreme good. (3)

(*Looking towards the tiring room.*) Ho Mârisha, the auspicious theatrical preliminaries have been well gone through ; and a large conclave of men residing in different quarters has gathered here on the occasion of the fair of the divine Kálapriyanátha. And I am orderd by the assembly of the learned that I should amuse them by the representation of some novel play. Why then are the actors indifferent ?

(*Enter* PA'RIPA'RSHVAKA.)

ACTOR—Sir, we are not aware of a dramatic piece possessing the merits mentioned by the audience.

SÛTRA.—Màrisha, what are those merits which the respectable, learned and the venerable Bráhmaṇas speak of ?

ACTOR—Representations profound (too difficult for ordinary people to understand) on account of the excess of sentiments delineated ; (an interchange of) actions charming on account of affection ; daring acts fully assisting the progress of love ; interesting conversations and cleverness in speech. (4)

SÛTR.—Ah, I remember then.

ACT.—What may it be, sir ?

SÛTR.—There is, in the southern region, in the province of Vidarbha, a city named Padmapura. There dwell

---

**appears to be a particle, in which, slightly opened, the sacrificer in the shape of Kâla (the destroyer) offered an oblation of the universe and the corners of which make a hissing sound on account of the streams of nectar dropping down from the crescent on his crest heated by the flames, grant you protection ! !**

